श्री महाकविबिल्हणविरचितम्

# विक्रमाङ्कदेवचरितम्

## महाकाव्यम्

---

प्रथमो भागः

( १—७ सर्गाः )

भारद्वाजविश्वनाथशास्त्रिविरचितरमाख्यसंस्कृतटीकया
हिन्दीभाषानुवादेन च सुपरिष्कृतम् ।

सम्पादकः

**पं० विश्वनाथशास्त्रिभारद्वाजः**

एम्० ए० काव्यतीर्थविद्यावागीशादिपदवीविभूषितो
हिन्दूविश्वविद्यालयीयसंस्कृतसाहित्यानुसन्धानसमितिसदस्यः
संस्कृतमहाविद्यालये सस्कृतसाहित्यदर्शनेतिहासाध्यापकः ।

हिन्दूविश्वविद्यालयीय-संस्कृतसाहित्यानुसन्धानसमितितः ।

संवत् २०१५ वैक्रमे ।

मूल्यम्—अष्टरूप्यकम् ।

# THE
# VIKRAMANKADEVA CHARITA MAHAKAVYA

## VOL I

### I—VII CANTOS

EDITOR & COMMENTATOR

Pt VISHWANATH SHASTRI BHARADWAJ

M A , Kavyateerth, Vidyavageesh,

*Member-Samskrit Sahitya Research Committee,*

*Lecturer, History of Samskrit Literature and Philosophy,*

*Samskrit Mahavidyalaya,*

*Banaras Hindu University, Banaras*

THE

SAMSKRIT SAHITYA RESEARCH COMMITTEE

OF

THE BANARAS HINDU UNIVERSITY

1958

Price Rs 8/-

# विषयानुक्रमणिका



## परिशिष्टानि



यः पठति लिखति पश्यति

परिपृच्छति पण्डितानुपाश्रयति ।

तस्य दिवाकरकिरणै—

र्नलिनीदलमिव विकास्यते बुद्धिः ॥

# * किञ्चित् प्रास्ताविकम् *



अयि विद्वज्जनमनोमयूरविश्रामारामा निरतिशयशेमुषीमण्डिता पण्डिता !

विदितचरमेव तत्र भवता भवता यत् विक्रमाङ्कदेवचरितमहाकाव्य त्रिभुवन-मल्लदेव-विद्यापति-काश्मीरकभट्ट-श्रीबिल्हणमहाकविविरचित प्रशस्तमहाकाव्येषु प्रमुखतार्हमिति ।

अद्य यावदस्य महाकाव्यस्य त्रिवार प्रकाशन जातम् ।

१ डा० जॉर्ज व्युह्लरमहोदयेन महता परिश्रमेण श्री पण्डित वामनाचार्य-झळकीकर-महोदयाना श्री भीमाचार्यमहानुभावानाञ्च साहाय्येन मुम्बापुरीसस्कृत-ग्रन्थमालाया १८७५ तम ईशवीये वर्षे प्रकाशितम् ।

२ प्रात स्मरणीयाना गुरुवर्याणा स्व म म श्री प रामावतारशर्मणा नाम्ना काशीस्थज्ञानमण्डलसस्थात ईशवीये १९२७ तम वर्षे प्रकाशितम् ।

३ श्री प मुरारीलाल नागर महोदयै साहित्याचार्य-एम् ए पदवी-विभूषितै विद्वद्वराणा डा० मङ्गलदेवशास्त्रिणा निरीक्षणे काशिक-सरस्वतीभवन-पुस्तकालयप्रकाशनविभागात् प्रकाशितम् ।

प्रथम—डा० व्युह्लरमहोदयस्य पुस्तक सम्प्राप्तैकहस्तलिखितपुस्तकाधारेण मुद्रित, सन्दिग्धस्थलेषु स्वकल्पितपाठभेदेनाञ्चितञ्चाऽशुद्धिबहुलम् । परञ्च महाकाव्यस्याऽस्य सर्वप्रथम प्रकाशन कृत्वा गूढान्धकारनिपतितसस्कृतग्रन्थभाण्डा-रादस्योद्धरण साधारणलोकावलोकने स्थापनञ्च सस्कृतविद्वत्सु डाक्टरमहोदयस्य कृतज्ञत्व नाऽकलयन्तीति तु न । तथापि विदुषोर्यदत्र सहयोगो वर्णितस्स पुस्तक-स्यैतस्याऽवलोडनेन न सन्देहराहित्यमधिगच्छति ।

द्वितीय—काशीस्थज्ञानमण्डलाधिकारिभिर्गुरुवर्य्याणा सम्मत्याऽसम्मत्या वा तन्नाम्ना प्रकाशितमतीवाऽशुद्धमिति श्री गुरुवर्याणा दृष्टिपथमपि न गत स्यादित्येव द्योतयन्ति । सति रविकरनिकरप्रवेशे कुतोऽन्धकारस्य सम्भव ।

तृतीय—श्री नागरमहोदयाना पुस्तक गवेषणापूर्णसमालोचनात्मकोपोद्धातयुक्त पञ्चषहस्तलिखितपुस्तकाना मुद्रितपुस्तकयोश्चाऽऽधारेण पाठभेदविचारपूर्वक महता परिश्रमेण सम्पाद्य मुद्रित सर्वेषामेवाऽस्मदादीना प्रशसास्पदम्। परञ्च यत्र कुत्रचित्पाठभेदविचारे कार्यसम्पादनरभसादन्यकारणाद्वाऽत्र पाठभेदनिर्णये स्खलन वरीवर्ति। तत्तस्थानान्युत्सृज्य सर्वत्रैवाऽस्मिन्पुस्तकेऽस्यैव पुस्तकस्य पाठक्रम स्वीकृत ।

श्रीनागरमहोदयैर्जैसलमेरबृहज्ज्ञानकोषभाण्डारस्थाद्धस्तलिखितात्पुस्तकात् महता श्रमेण टिप्पणीसग्रह कृत्वा चरितचन्द्रिका नाम्ना सा परिशिष्टरूपेण स्वपुस्तके सगृहीता, केनाऽपि कविरहस्यकुशलेनैव धीमतैषा गुम्फितेत्यत्र नाऽस्ति सन्देहलेशावसर। ईशवीय १२८६ वर्षतोऽपि प्राचीनेऽस्मिन् हस्तलिखिते पुस्तके टिप्पण्येषा स्वप्राचीनत्व प्रकटयत्येव। कुत्रचित् "अस्य शब्दस्यार्थागमो न जायते" इति स्पष्ट लिखित्वा टिप्पणीकृता विदुषा निरहङ्कार स्वपाण्डित्य परिचायितम्। गुणिनो न दुराग्रहा इति स्वगुणित्वमपि प्रकटितम्। टीकाया अभावेऽर्थावबोधविषये टिप्पण्येषा बहुषु स्थलेषु विदुषा पाठकानामतीवोपकारिणीति निश्चप्रचम्।

बहुषु सस्कृतविद्यालयेषु विश्वविद्यालयेषु चैतत्पुस्तक पाठचपुस्तकत्वेन निर्धारितमपि न कुत्राऽप्याऽऽपणे लभ्यमिति हेतोर्हिन्दूविश्वविद्यालयीय-सस्कृतसाहित्यानुसन्धानसमित्याऽ (The Samskrit Sahitya Research Committee, B H U) स्य महाकाव्यस्य प्रकाशन नितान्तमावश्यक मत्वा मयि तत्सम्पादनभारस्समारोपित। कठिनमप्येतत्कार्यं विघ्नपरम्परामनुभवताऽपि मया साहित्य-व्याकरणाचार्य-एम् ए-पदवीविभूषिताना सम्प्रति हिन्दू विश्वविद्यालयीय-सस्कृत महाविद्यालये साहित्यविभागाध्यक्षपद भूषयता श्री प रामकुबेरमालवीयाना हार्दिकसाहाय्येन श्री जगज्जननीमकष्टहरणीकृपयेव सस्कृतव्याख्याभाषाटीकाभ्या सहित सप्तसर्गान्तमेतन्महाकाव्य सम्पाद्य प्रकाश्य च विद्वत्करकमलेषु सादर स्थाप्यते।

पाठ्यपुस्तकत्वेन निर्धारितमेतन्महाकाव्य टीकाभूषितञ्चेत परीक्षार्थिना महदुपकारक भवेदिति निर्धार्य सरलसक्षिप्तटीकारचना कृता। यद्येतया विद्यार्थिना परीक्षासु कथमप्युपकारश्चेदस्मत्परिश्रम साफल्य गच्छेत्।

सप्तसर्गान्तमेतन्महाकाव्य पृथक् पुस्तकरूपेण प्रकाश्याऽष्टमसर्गत अष्टादशसर्गान्तमेतद्द्वितीयभागरूपेण प्रकाश्यमेष्यति। प्राय सप्तसर्गान्तमेवैतन्महा-

काव्य सर्वत्र पाठ्यपुस्तकत्वेन नियोजित दृश्यते । स्वभावत एवाऽकिञ्चनाना संस्कृतच्छात्राणा सम्पूर्णमहाकाव्यक्रये धनबाधा मा भूदिति धिया सप्तसर्गान्तभागो बुद्धचा पृथक् प्रकाशित ।

अस्य महाकाव्यस्य महत्त्व किमु वर्णनीयम् । विविधच्छन्दसामलङ्काराणा नूतनोत्प्रेक्षाणा गभीरध्वनीनाञ्चाऽऽकरेऽस्मिन् महाकाव्ये कालिदासभारव्याद्यमर-कीर्तिमता महाकवीना पदे पदे स्मरण भवतीत्येत्काव्यानुशीलनचणाना नाऽविदितम् । रसमाधुरीप्रवाहपरम्पराणा निधिरूपमेतन्महाकाव्य ब्रह्मास्वाद-सहोदरानन्द समर्प्य हर्षयत्येव पाठकान् । ऐतिहासिकमिद महाकाव्य संस्कृत-विद्वांस ऐतिह्यरसानभिज्ञा इति पाश्चात्याना सबलमाक्षेप दूरत एव शतधा करोति ।

ऐतिहासिके काव्ये भूगोलस्य ज्ञान सापेक्षम् । अतोऽत्र तात्कालिक-भारत-मानचित्र प्रकाशितम् । तेन चरितनायकस्य विजययात्रासु भारते कुत्र कुत्र गमन जातमिति च्छात्राणा सुस्पष्ट भवेत् ।

विद्यार्थिना सौकर्यार्थमत्र परिशिष्टेषु प्रधाननाम्नामनुक्रमणिकाऽकारादिक्रमेण सप्तसर्गान्तर्गतश्लोकसूची सूक्तिसग्रहश्च सकलिता । तत्रैव ग्रन्थनायक ग्रन्थ-ञ्चाऽवलम्ब्याऽद्ययावत्प्रकाशिताना लेखाना पुस्तकानाञ्च सूची सयोजिता । येन सौभाग्यात्संस्कृतच्छात्रेषु केषाञ्चिदस्मिन्विषये विशिष्टाध्ययने नवीनाविष्करणे चेच्छा जागर्ति चेत्तेषामायासमन्तरैव सर्व पूर्वजात विदित भवेत् ।

टीकालेखने श्रीमता पण्डितवर्याणा श्री रामकुबेरमालवीयाना साहाय्य प्रत्येक सर्गान्ते प्रेम्णा स्वीकृतमेवेति ते धन्यवादार्हा । श्रीमत पूज्यवर्येभ्य श्री बलदेवो-पाध्यायेभ्य एम् ए साहित्याचार्येभ्यो हिन्दूविश्वविद्यालयीय-भारतीविद्यालया-(College of Indology) ध्यापकेभ्य सहस्रशो धन्यवादा वितीर्यन्ते । यैर्भाषा-टीकायामन्यत्र च यथोचितपरामर्शप्रदानेन परमनुगृहीतोऽहम् । श्री प राज-नारायणशर्माणो हिन्दू विश्वविद्यालयीय-संस्कृतमहाविद्यालयव्याकरणविभागाध्यक्षा धन्यवादैरभिनन्द्यन्ते । यैस्सहर्ष सर्वदैव कठिनाप्रयुक्तशब्दसिद्धौ स्वानुपमशब्द-शास्त्रज्ञानेन शब्दसिद्धि ससाध्य महानुपकार कृत । श्रीमन्ता बटुकनाथशास्त्रि-खिस्ते-महोदया एम् ए साहित्याचार्या राजकीयसंस्कृतमहाविद्यालयसाहित्यशास्त्रा-ध्यापका साशीर्वाद धन्यवादानर्हन्ति । गैरमूलचूल संस्कृतहिन्दीव्याख्यासहित लेखरूपमिद निभाल्य बहुषु स्थलेषु निगूढतोऽलङ्कारनिवेशे कविमात्रगम्यदुरूह-विचाराणा निर्देश कुर्वद्भिरत्र गुणाधिक्यमुत्पादितम् । चिरायुष्मतो विनायक-

जोशीति नामधेयस्य लेखनकार्ये साहाय्यमपि न विस्मरणीयम्, जगज्जनन्यनुग्रहात् स चिर जीयात् । प्रकाशका श्री रामकृष्णदासमहोदया साशीर्वादधन्यवादयोग्या । यैर्हिन्दूविश्वविद्यालयीयविविधकार्यभारान्महता विलम्बेनाऽपि भवतु, चतुर्वारमपि सशोधनार्थ प्रार्थित प्राथमिकपत्र (Proof) मस्खलितरूपेणाऽस्मत्सविधे सप्रेष्य स्वकर्तव्यपरायणता प्रकटिता । श्रीमद्भ्यो डा० जॉर्ज ब्युह्लर, के कृष्णम्माचारियर, ए बी कीथ, रामनाथ दीक्षित, महाबीर प्रसाद द्विवेदि, कह्लण, शास्त्रिमुरारीलाल-नागरप्रभृतिभ्य सर्वेभ्यो मान्येभ्यो लेखकेभ्यस्तेषा पुस्तक-लेखावलोकनेन बहुश उपकृतत्वात् धन्यवादान् समर्पयामि । अन्ते च चरित-चन्द्रिकाटिप्पणीकारा, ये केऽपि ते भवन्तु मम हार्दिकान् धन्यवादानर्हन्ति । एतेषा टिप्पण्या टीकालेखने महती सहायता जातेत्यमाय निरूप्य विरमाम्यति-विस्तरात् ।

वाराणसी
विजया दशमी
सवत् २०१४ वै०

**विश्वनाथशास्त्री**
**भारद्वाजः**
सम्पादक

॥ श्रीः ॥

श्री काशी हिन्दूविश्वविद्यालयकुलपतिः

श्री डा० वेणीशङ्कर झा



पीयूषप्रतिमं रसायनमिदं वाग्देवताया नवं
काव्यं बिल्हणनिर्मितं विवरणं नाम्ना "रमाख्यं" दधत् ।
वेणीशङ्कर झा ! मनीषिमुकुटालङ्कार ! युष्मत्करा-
म्भोजं विन्दतु रत्नकाञ्चनसमाश्लेषः समुन्मीलतु ॥

समर्पयिता

भारद्वाजो विश्वनाथशास्त्री

॥ श्री ॥

॥ श्री गणेशाय नम ॥

॥ श्री सङ्कष्टनाशिन्यै नम ॥

# —भूमिका—

**अयि सुरसरस्वतीपरिचरणपरा शास्त्रधुरन्धरा विपश्चिद्वरा महानुभावा !**

प्रथितयशस्सु तत्रभवत्सु न ह्येतत्तिरोहित यद्वाङमये काव्यस्य कीदृश महितमास्पदमिति ।

काव्य नाम लोकोत्तरवर्णननिपुणकविकर्म । कवेर्भाव कर्म वा काव्यमीदृश्या व्युत्पत्त्या कविशब्दाद् "गुणवचनब्राह्मणादिभ्य कर्मणि" चेति सूत्रेण ष्यञ्प्रत्यये कृते काव्यपदसिद्धिरिति वैयाकरणी प्रसिद्धि । कवते (वर्णयति), कौति, कुवते (शब्दायते) वेति कवि । "कुङ" शब्दे इति भौवादिकात्तौदादिकाद्वा "कु" शब्दे इत्यादादिकाद्वा धातो "अच इ" इति सूत्रेणेप्रत्यये कृते कविपदनिष्पत्तिरिति शाब्दिकी व्युत्पत्ति । निरुक्ते (१२–१३–१) यास्काचार्येण कविशब्दस्य मेधावीत्यर्थ प्रतिपाद्य 'कवि क्रान्तदर्शनो भवति कवतेर्वा' इति व्युत्पादितम् । वैदिकनिघण्टौ (२–१४), "कवते" इति रूप गत्यर्थकधातुषु पठितम् । "गत्यर्था सर्वे ज्ञानार्था" इति न्यायात्कविशब्दस्य क्रान्तदर्शी मेधावी वेत्यर्थस्सगच्छते । वैदिकनिघण्टौ (३–१५) मेधाविशब्दस्य पर्यायवाचकेषु शब्देषु कविशब्द पठित । तादृशस्य कवे कृति काव्यमिति पूर्वमेव प्रतिपादितम् ।

काव्यलक्षण यथाऽऽह मम्मटभट्ट—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन क्वाऽपि" इति । निर्दोष सगुण स्फुटास्फुटालङ्कारञ्च शब्दार्थयुगल काव्यमिति लक्षणस्यैतस्य निष्कर्ष । श्रीमता पुरतस्ससम्मानमुपस्थाप्यमानमेतद्विक्रमाङ्कदेवचरिताभिधान ग्रन्थरत्न च नित्यदोषाभावात्प्रसादादिगुणसहितत्वादुपमाद्यलङ्कारमहितत्वाच्च स्फुटमेव काव्यकोटिमेवाऽऽटीकते ।

विश्वनाथकविराजस्य "वाक्य रसात्मक काव्यम्" इति लक्षणमपि प्रकृतप्रबन्धस्य वीरश्रृङ्गारादिरसभूषितत्वात्काव्यत्वाभ्युपगमानुगुणमेव ।

तच्च काव्य दृश्यत्वेन श्रव्यत्वेन च भेदद्वयविभक्तम् । तत्र चाऽभिनेयत्वात् दृश्यत्वस्य, प्रस्तुतकृते श्रव्यत्व निर्विवादम् । श्रव्यकाव्यान्यप्यनेकप्रकाराणि ।

तत्र चाऽस्य प्रकृतग्रन्थस्याऽष्टाधिकसर्गनिबद्धत्वान्महाकाव्यस्य[१] लक्षणान्तरसङ्गावाच्च महाकाव्यत्वमुररीक्रियते ।

उपजीव्यस्य कथाभागस्य भेदाच्च तत्काव्यमभिनवसमालोचनेक्षिकया पुनर्द्विप्रकारकम् । यस्योपजीव्यकथाभाग पुराणाद्गृहीतस्तत्पौराणिकमेवमेव यस्य च काव्यस्य नूतनेतिहासस्तदैतिहासिकम् ।

एवञ्चाऽस्य विक्रमाङ्कदेवचरितस्य कथाभागो नूतनेतिहासाद्गृहीतस्तत एवेद महाकाव्यमैतिहासिकमिति निर्विवादम् । सस्कृतसाहित्ये सत्स्वपि बहुष्वैतिहासिककाव्येषु पद्यकाव्ये विक्रमाङ्कदेवचरित गद्यकाव्ये हर्षचरितञ्चेति काव्य द्वितयमेवैतिहासिकरूपेण सातिशय प्रथितम् ।

---

[१] महाकाव्यलक्षण यथा साहित्यदर्पणे—

सर्गबन्धो महाकाव्य तत्रैको नायक सुर ।
सद्वश क्षत्रियो वापि धीरोदात्तगुणान्वित ॥
एकवशभवा भूपा कुलजा बहवोऽपि वा ।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥
अङ्गानि सर्वेऽपि रसा सर्वे नाटकसन्धय ।
इतिहासोद्भव वृत्तमन्यद्वा सज्जनाश्रयम् ॥
चत्वारस्तस्य वर्गा स्युस्तेष्वेक च फल भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ॥
क्वचिन्निन्दा खलादीना सता च गुणवर्णनम् ।
एकवृत्तमयै पद्यैरवसानेऽन्यवृत्तकै ॥
नातिस्वल्पा नातिदीर्घा सर्गा अष्टाधिका इह ।
नानावृत्तमय क्वापि सर्ग कश्चन दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथाया सूचन भवेत् ।
सन्ध्यासूर्येन्दुरजनी—प्रदोषध्वान्तवासरा ॥
प्रातर्मध्यान्हमृगया-शैलर्तुवन-सागरा ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वरा ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादय ।
वर्णनीया यथायोग साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥

श्लोका ३१५—३२७

प्रकृतस्य महाकाव्यस्य सर्वप्रथम तावच्छार्मण्य (Germany) देशीयो विद्वद्वरो डा० जॉर्ज बूह्लर महोदय स्वमित्रेण डा० एच्० याकोबीमहाशयेन साक राजस्थानप्रदेशे पर्यटन् १८७४ तमे खृष्टाब्दे जैसलमेरस्थित-जैनबृहज्ज्ञानकोश-भाण्डारेऽतिप्राचीना प्रतिलिपिमासादितवान् । स च काव्यस्याऽस्याऽनितरसाधा-रणतामाकलयन्नात्मसुहृत्साहाय्येन दिवससप्तकाभ्यन्तर एवाऽस्य प्रतिलिपि विधाय तस्मिन्नेव हायनान्तरे चाऽऽत्मभूमिकया सम महाकाव्यमिद सर्वसुलभञ्चकार । इत्थञ्चाऽस्य महाकाव्यस्यैकस्या एव प्रतिलिपेरवाप्त्या बहवोऽशा अशुद्धिग्रस्ता । तदनन्तर डा० रामकृष्णभाण्डारकर-वेङ्कटराममहोदयादयश्चालुक्यवशेतिहासे प्रकृतकृतौ विक्रमाङ्कदेवचरिते च नवनवान्बहून्विषयान्प्रकाशपथमासादयामासु । एव सत्यपि काव्यमूलरूप तदवस्थमेव (अशुद्धिबहुलम्) आसीत् ।

कालक्रमाद्बूह्लरसस्करणे समाप्तिमासादिते काशीस्थज्ञानमण्डलमुद्रायन्त्रालया-न्महामहोपाध्याय-पण्डितप्रवर-गुरुवर-श्रीरामावतारशर्मनाम्ना सम्पादित प्रकृत-महाकाव्यस्य सस्करणान्तरञ्च प्रकाशभावमानीयत । परमत्र सस्करणेऽपि पूर्व-सस्करणाशुद्धीना निराकरणस्य का कथा ? नवनवान्यशुद्ध्यन्तराण्यपि लोचन-पथातिथिता प्रयान्ति, यत सहृदयाना चेखिद्यते चेत । अत्र श्रीमता गुरुवर्याणा नामसयोगो मनसि विचिकित्सामुत्पादयति ।

समाप्तप्रायेऽस्मिन्नपि सस्करणेऽस्य काव्यस्य महत्व लोकप्रियत्वञ्च निरीक्ष्य शास्त्रिमुरारिलालनागर एम्० ए० साहित्याचार्यमहोदयै परिश्रमातिशयेन जैसलमेरबृहज्ज्ञानकोशभाण्डारात्, पुण्यपत्तनस्थ-भाण्डारकरप्राच्यगवेषणासस्थात (Bhandarkar Oriental Research Institute Poona), अन्यतश्च प्रस्तुतग्रन्थस्य पञ्चषहस्तलिखितानि पुस्तकान्यासाद्य शुद्धपाठनिर्धारणे श्लाघ्य प्रयास कृत्वा महाकाव्यमिद काशीस्थसरस्वतीभवनत (Princess of Wales Saraswati Bhavana Text Series) प्रकाशितम् । परञ्चाऽत्राऽपि यत्र तत्र सम्पादनरभसादन्यकारणाद्वा पाठभेदनिर्णये प्रमादो जात इव दृश्यते यथा—

**अस्मरद्द्विरदानवारिणा तेन वारिनिधिराविलीकृत ।**
**हन्त सन्ततमदस्य विभ्रमानभ्रमुप्रियतमस्य दन्तिन ॥** (सर्ग ५ श्लो० १६)

इत्यत्र तेनेति पाठात्तस्येति पाठ साधुतर प्रतिभाति ।

**एवमेव**

**हस्तद्वयीगाढगृहीतलोल-दोलागुणानां जघने वधूनाम् ।**
**असवृतस्रस्तदुकूलबन्धे किमप्यभूदुच्छ्वसितो मनोभू ॥** (सर्ग ७ श्लो २९)

इत्यत्र 'असवृते स्रस्तदुकूलबन्धे' इत्येव पाठ समुचित ।

एवमादिस्थलानि विहाय सर्वत्र प्रस्तुतपुस्तके अस्यैव पाठ सगृहीत । नागर-महोदयैरूपोद्घाते डा० बूह्लरमहादेयकृतैतिहासिकविषयस्य सुतरा बहुषु स्थलेषु खण्डन कविलिखितघटनायाश्च याथार्थ्य साधितम् । तत्काव्यान्ते चरित-चन्द्रिकानाम्ना जैसलमेरबृहज्ज्ञानकोशभाण्डारस्थपुस्तकाट्टिप्पणीसग्रहो नागरमहो-दयस्य सस्करण सुवर्ण सुगन्धयुक्तमिवाऽकरोत् । टिप्पणीकार क इति यद्यपि न ज्ञात तथापि तस्य पाण्डित्यप्रकर्षो विद्योतत एव ।

तदिद विक्रमाङ्कदेवचरिताख्य महाकाव्यमष्टादशसर्गनिबद्धम् । तत्राऽऽद्येषु सप्तदशसु सर्गेषु चालुक्यवशोत्पत्तितज्जातनृपवर्णनपुरस्सर विक्रमाङ्कदेवचरित प्रतिपादितम् । अन्तिमे चाऽष्टादशे सर्गे महाकविरात्मवर्णनकथाप्रसङ्गे स्वाभिजन कश्मीरदेश तत्पालकान्भूपालाॅश्चाऽवर्णयत् ।

सस्कृतसाहित्ये महाकाव्यस्याऽस्याऽसाधारण स्थानम् । एतत्कर्ता विलक्षण-काव्यविच्छित्ति-प्रकाशन-प्रवणो विचक्षणवरोऽनल्पमधुरकल्पनाचणो बिल्हण । विक्रमाङ्कदेवचरितस्य प्रकाशनात्प्रागपि कविवरो बिल्हणो भारतीयमहाकविषु प्रधानभावेन सस्तुत । एतत्कृता [१]चौरपञ्चाशिका वा चोरीसुरतपञ्चाशिका कर्णसुन्दरी नाटिका च रसिकमानसेषु हर्षोल्लासप्रकाशिका वर्तते । एवञ्च सुभाषितसग्रहप्रबन्धेष्वपि बिल्हणविरचितानि बहूनि पद्यानि सगृहीतानि । सूक्तिसग्रहणप्रवणजल्हणसकलिताया सूक्तिमुक्तावल्यामेव बिल्हणस्याऽष्टाधिकानि शतसख्यकानि पद्यानि विलसितानि । किमधिकेन । प्रसादाभिधानेन गुणेन वैदर्भ्या रीत्या चाऽय महाकवि काव्यनिर्माणे कविकुलगुरो कालिदासस्य शैली बिभर्ति । शार्दूलविक्रीडितस्रग्धरादिषु वृत्तेषु कवेरस्य शैली भवभूति-श्रीहर्षादि-सदृशी दरीदृश्यते । किञ्च कविरय तत्र तत्र स्वप्रबन्धे कालिदासादिमहाकवीना छाया स्ववैशिष्ट्य सस्थाप्यैवाऽनुचकारैतदधिकमस्य महत्व कि निवेद्यते ।

काव्यकलेवरपीवरत्वभीत्याऽस्माभि कृतिरिय भागद्वये कृतविभागा । तथा च सर्गसप्तकमितोऽय प्रथमो भाग । अथाऽत्र सर्गसप्तक यावदस्य महाकाव्यस्य स्तोकमालोचनमनुष्ठीयते ।

---

[१] चौरपञ्चाशिकाया प्रथम प्रकाशन शार्मण्य (Germany) देशीयै डा० सॉल्फमहोदयै १८८६ खृष्टाब्दे शार्मण्यभाषाग्रथितभूमिकया सह कृतम् । परञ्चाऽस्य नूत्न विस्तृत सस्करणमपेक्षितम् ।

इह कविर्मङ्गलाचरणानन्तरमादौ रीतिचतुष्टये—

**अनभ्रवृष्टिः श्रवणामृतस्य सरस्वती-विभ्रम-जन्म-भूमिः ।**
**वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ।।**

इत्यनेन पद्येन वैदर्भीमेव रीतिं प्रशशस । प्रस्तुतकृतौ कविः वैदर्भीमेव रीतिं प्रायेण समाललम्बे ।

अत्र परमरमणीयेन प्रकारेण स्वविनयवत्तिं स्वस्य चोपजीव्यनरपतौ निरतिशया भक्तिञ्च द्योतयता महाकविना बिल्हणेनोक्त—

**गिरां प्रवृत्तिर्मम नीरसाऽपि मान्या भवित्री नृपतेश्चरित्रैः ।**
**के वा न शुष्कां मृदमभ्रसिन्धुसम्बन्धिनीं मूर्धनि धारयन्ति ।।** (१-२८)

एवञ्चाऽस्य महाकवेः श्रीहर्षेणाऽधस्तने पद्ये विशिष्टरूपेणाऽनुकरणं व्यधायि ।

**पवित्रमत्राऽऽतनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा ।**
**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ।।** इति ।

(१-३) नैषधचरिते

निम्नस्थपद्ये कविनिबद्धवक्तुराहवमल्लदेवस्य—

**किमश्वमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेन्नोभयलोकबान्धवः ।**
**ऋणं पितॄणामपनेतुमक्षमाः कथं लभन्ते गृहमेधिनः शुभम् ।।** (२-३४)

इत्युक्तिः कीदृशी सहृदयहृदयावर्जिका, कालिदासनिबद्धवक्तुर्दिलीपस्य—

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।**
**सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ।।** (रघुवंशे १-६९)

इति वचनं स्वप्रौढिप्रकर्षेणाऽतिशेते इत्यत्र विपश्चिद्वरा एव प्रमाणम् । तस्यैवाऽऽहवमल्लदेवस्यात्मजाया प्रत्यात्मजोत्पादनमनूद्य—

**अधीतवेदोऽस्मि कृतः श्रुतागमः श्रमोऽस्ति भूयानितिहासवर्त्मसु ।**
**गुरुष्ववज्ञाविमुखं सदा मनस्तदभ्युपायोऽत्र मया न दुर्लभः ।।** (२-३९)

आलापोऽयं कथंविधः प्रौढिपूर्णः आत्मविश्वासप्रकाशकश्चेत्ययमर्थो गुणग्राहकाणां विदुषामतिरोहितः । एवञ्चाऽत्रस्थमाहवमल्लतपोवर्णनं कालिदासस्य कुमारसम्भवस्थं पार्वतीतपोवर्णनं मनोहरविधयाऽनुहरति । ज्यायसि भ्रातरि वर्तमाने जनकपरिकल्पितं स्वीयं यौवराज्यं प्रतिषेधतो विक्रमाङ्कदेवस्य—

**चालुक्यवशोऽपि यदि प्रयाति पात्रत्वमाचारविपर्ययस्य ।**
**अहो! महद्वैशसमा किमन्यदनङ्कुशोऽभूत्कलिकुञ्जरोऽयम् ।।** (३-३६)

उक्तिरिय कालिदासस्य रघुवशे यज्ञियमश्वमपहरन्तमिन्द्र प्रति रघो —

**त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।**
**स चेत्स्वय कर्मसु धर्मचारिणा त्वमन्तरायो भवसि च्युतो विधि ।।** (रघुवश ३-४५)

वचनमद स्वप्रौढिप्रकर्षेणातिक्रामतीत्यत्र विदुषा नो विप्रतिपत्ति । एवञ्चाऽत्रत्य विक्रमाङ्कदेवदिग्विजयवर्णन रघुवशस्थित रघुदिग्विजयवर्णनमनुकरोतीत्यय विषय काव्यद्वितयशीलिना विमलमतीना कृतिना मतिपथे स्फुटमेवाऽवभासते । दोषवर्जनपूर्वक सता गुणग्राहकत्व कीदृश्या विच्छित्याऽत्राऽधस्तने पद्ये दृष्टान्तालङ्कारेण प्रदर्शितम्—

**दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जना ।**
**क्षारभावमपनीय गृह्णते वारिधे सलिलमेव वारिदा ।।** (५-५१)

अत्रैकत्र षष्ठसर्गस्थेऽष्टमे पद्ये महाकविना "विललापे" ति प्रयोक्तव्यत्वे 'ललापे'ति प्रयुञ्जानेनाऽवाचकत्व नाम दोषोऽपि प्रकाशित । सप्तमसर्गीये चत्वारिंशत्तमे श्लोके "अक्षूणशब्दे" अप्रयुक्तत्वदोष । पर तादृशि महाकवौ दूषणमिद तस्य निरङ्कुशतामेव द्योतयति नत्वज्ञानम् । सोमदेवस्याऽश्वानामिद

**जवसमुचितधावनानुरूपा किमिति कृता पृथुला न नाथ! पृथ्वी ।**
**नभसि खुरपुटैरिति स्फुरद्भिर्विधिमिव ये स्म मुहु प्रतिक्षिपन्ति ।।** (६-४९)

वर्णन महाकविश्रीहर्षकृतमधोलिखित नैषधाश्ववर्णनमतिशेते ।

**प्रयातुमस्माकमिय कियत्पद धरा तदम्भोधिरपि स्थलायताम् ।**
**इतीव वाहैर्निजवेगदर्पितै पयोधिरोधक्षममुत्थित रज ।।** (१-६९) इति ।

एवञ्च—

**रथस्थिताना परिवर्तनाय पुरातनानामिह वाहनानाम् ।**
**उत्पत्तिभूमौ तुरगोत्तमाना दिशि प्रतस्थे रविरुत्तरस्याम् ।।** (७-६)

इह महाकविनोत्प्रेक्षालङ्कारमाश्रित्य रवेरुदीचीगमन येन चित्ताकर्षकविधानेन समुपवर्णित तत्प्रशसनीयमेव । सप्तमे सर्गे कविना वसन्तादिवर्णन कुर्वता कमनीय काव्यकौशल प्रकाशितमिति दिक् ।

इदानीमस्या कृतेस्तत्तल्लक्षणसवादित्व वैशिष्ट्यमुपदर्शयितुमापातत प्रतीयमानदोषाभासनिरासार्थञ्च स्तोक प्रयत्यते ।

प्रस्तुतपुस्तक महाकाव्यमिति पुरस्तादुपवर्णितमेव । अस्य नायक खृष्टैकादशशताब्द्या चालुक्यशाखाचतुष्टये कल्याण चालुक्यवशोद्भूतो वीरवरो विक्रमाङ्कदेव । नायकलक्षण यथा साहित्यदर्पणे—

**त्यागी कृती कुलीन सुश्रीको रूपयौवनोत्साही ।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ।।**

इत्थञ्च चरितप्रणेत्रा स्वनायकस्य पूर्वोक्तगुणगणालङ्कृतत्व सम्पादनीयम् । एवञ्च नायकस्य भेदचतुष्टयमपि तत्रैव प्रदर्शितम् । यथा—

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।**
**धीरप्रशान्त इत्ययमुक्त प्रथमश्चतुर्भेद ।।** इति ।

तत्र च प्रकृतनायको विक्रमाङ्कदेवो धीरोदात्त इतीय वार्ता निम्नस्थलक्षणेनाऽवसीयते । तद्यथा—

**अविकत्थन क्षमावानतिगम्भीरो महासत्त्व ।**
**स्थेयान्निगूढमानो धीरोदात्तो दृढव्रत कथित ।।**

अविकत्थनो यथा—

गौडकामरूपकाञ्चीकेरलमलयचक्रकोटद्रविडादि—भूपालान्विजित्याऽपि कल्याणपुर प्रत्यावर्तमानेन तेन विक्रमाङ्कदेवेन न कुत्राऽपि स्वमुखेन स्वपौरुषमुद्घोषितम् । प्रत्युत द्राविडेन्द्रदूतस्य समागमे तेन स्वपराक्रममधरीकृत्योक्तम्—

**ईदृशी सुजनतामजानता कार्मुकेण मुखरत्वमत्र मे ।**
**यत्कृत किमपि तेन लज्जया भारती कथमपि प्रवतते ।।** (५-५०)

एवमेव—**अङ्गानि चन्[illegible]दपि शीतलानि चन्द्रातप वमति बाहुरय यशोभि ।**
**चालुक्यगोत्रतिलक क्व वसत्यसौ ते दुर्वृत्तभूपपरितापगुरु प्रताप ।।**
(५-८६)

इत्यादिद्रविडेश्वरोक्तौ स तूष्णीमेव स्थित ।

क्षमावान् यथा—

जयकेशि-आलुपेन्द्र-द्रविडक्षितिपति-लङ्काधीशादीन् शरणागतान् स क्षाम्यति स्म । ज्येष्ठे भ्रातरि सोमेश्वरे बन्धनधामनीतेऽपि—

**वितरितुमिदमग्रजस्य सर्वं पुनरुपजातमतिः स राजपुत्र ।** (६-९३)

इत्यत्र विषयस्तस्य क्षमावत्त्व साधयत्येव ।

अतिगम्भीरो यथा—

उभयत समागतयोर्द्रविडपतिसोमेश्वरसैन्ययो स्थितौ स गाम्भीर्येण—

**मदकरटिनमुत्कटप्रताप· प्रकटितवीरमृदङ्गधीरनाद ।**
**मथनगिरिमिवाधिरुह्य वेगात् प्रतिबलवारिधिलोडन चकार ॥** (६-६८)

महासत्वो यथा—

**अन्तक प्रतिभटक्षमाभृता निर्दयप्रहणनोद्यत तत ।**
**तन्मदद्विरदपादचूर्णित सैन्यमेककवल चकार स· ॥** (५-७)
**विघटनमटवीधनुर्धराणा विषमपथेषु विधाय लीलयैव ।**
**पुनरपि स जगाम तुङ्गभद्रा विरचितवन्दनमालिका तरङ्गै ॥** (५-२५)

इत्यादिस्थलेषु राज्ञो महासत्वशालित्व प्रकटितमेव ।

स्थेयान् यथा—

**प्राप्तमप्यनयपङ्कशङ्कितस्तद्बल न सहसा जघान स ।**
**अप्रतर्क्यभुजवीर्यशालिन सङ्कटेऽप्यगहनास्तथाविधा ॥** (५-६)

इत्यत्रोक्तमेव । पुरत पृष्ठतश्च समागतयोर्विपक्षसैन्ययो स स्वधृतिमव-लम्बितवान् ।

निगूढभावो यथा—

**कीदशी शशिमुखी भवेदिति स्पृश्यते स्म हृदये स चिन्तया ।**
**कामुकेष मिषमात्रमीक्षते नित्यकुण्डलितकार्मुक स्मर ॥** (५-४८)

तथापि

**अब्रवीच्च मनस प्रसन्नता दन्तकान्तिभिरुदीरयन्निव ।**
**ओष्ठपृष्ठलुठितस्मिताञ्चल कुन्तलीनयनपूर्णचन्द्रमा ॥** (५-५९)

इत्यत्राऽस्य निगूढभाववत्व सुस्पष्टमेव ।

दृढव्रतो यथा—

आहवमल्लदेवस्य स्वपितुर्यौवराज्यपदग्रहणे महत्याग्रहे वर्तमानेऽपि स वैदग्ध्येन

**चालुक्यवशोऽपि यदि प्रयाति पात्रत्वमाचारविपर्ययस्य ।**
**अहो महद्वैशसमा किमन्यदनङ्कुशोऽभूत्कलिकुञ्जरोऽयम् ॥** (३-३६)

एतादृशैर्युक्तियुक्तैर्वचनै स्वदृढव्रतत्व प्रकटितवानिति ।

महाकविना बिल्हणेनेत्थमेव तत्र तत्र नायकस्य धीरोदात्तत्व प्रतिपादितम् ।

अत्रैतिहासिकतत्वसरक्षणपरा डा० बूह्लरादयो विपश्चिद्वरा विप्रवदन्ति— 'महाकविना बिल्हणेन स्वकृतावैतिहासिक तथ्य वितथीकृतमिति'। वस्तुतस्त्वे-तद्दूषणमापातत एव प्रतिभाति न तत्त्वदृष्ट्या। प्रकृतकृतिरितिहासमूलाऽपि काव्यमेव नेतिहास । अत्र कविना प्राधान्येन प्रकाशनीय कवित्वमेव, न त्वितिहासतत्त्वम् । यत्त्वत्रेतिहासतत्त्व प्रकाशित तदानुषङ्गिकत्वेन न प्रधानत्वेन । कल्पनाकाननसञ्चरणपराणामेतादृशानामेव कवीना कृतिमुद्दिश्य—

**अपारे काव्यससारे कविरेव प्रजापति ।**
**यथास्मै रोचते विश्व तथेद परिवर्तते ।।**
**शृङ्गारी चेत्कवि काव्ये जात रसमय जगत् ।**
**स चेत्कविर्वीतरागोनीरस व्यक्तमेव तत् ।।** (अग्निपुराणे)

एतादृश्युक्ति समजनि । कि बहुना, महाकवीनामेतादृशा कृते स्वनायकस्य मर्यादासरक्षणार्थमालङ्कारिकै सुधीभि स्तोकरूपा स्वतन्त्रताऽपि प्रदत्ता । यथा सा साहित्यदर्पणे—

**यत्स्यादनुचित वृत्त नायकस्य रसस्य वा ।**
**विरुद्ध तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ।।** इति ।

अतएव धीरोदात्तनायकेन श्रीरामचन्द्रेण छद्मना वालिहननमनुचितमिति धिया महानुभूतिना भवभूतिना वीरचरिते रामवधार्थमायातो वाली रामेण व्यापादित इति प्रतिपादितम । अपरञ्च, काव्यसाधित वस्तु मिथ्यारूपमितिहास-प्रकाशितमेव तथ्यमित्यत्र का नाम विनिगमना ? इतिहासवर्णितमपि वस्तु वितथ विलोक्यते । यथा वङ्गेतिहासे सिराजुद्दोलाभिधानेन वङ्गाधीशेन कृष्ण-प्रकोष्ठे (Black Hole of Calcutta) बहव आँग्लदेशाभिजना निरुद्धास्तत्र च स्थानस्य सङकुचितत्वाद्बहुसख्यका उपरता अल्पा एवाऽवशिष्टा इति यदि-तिहासे लिखित तत्साम्प्रत मिथ्यैवेति बहुभिर्विद्वद्भि साधितम्। एवविधे व्यतिकरे लोचनगोचरे सति प्रकृतेऽपि प्रकृतचरितनायकस्य तत्सदस्यकविप्रदर्शित वृत्त वितथमितिहासनिर्दिष्टमेव तथ्यरूपमित्यपि सर्वतोभावेन प्रतिपादयितु न शक्यम्। कालान्तरे विस्तृतगवेषणानन्तर प्रकृतकविकृतवृत्तस्य सत्यत्वसिद्धि-रपि सभाव्यते। श्री नागरमहोदयै स्वोपोद्घाते डा० बूह्लरखण्डिता काश्चि-दैतिहासिकघटना डा० बुह्लरमतखण्डनपूर्वक सत्यत्वेन प्रमाणीकृता वर्तन्ते ।

ऐतिहासिकेन विदुषा सम कवेरिय कलहवार्ता नाऽत्रैव पाश्चात्यदेशेऽपि स्फुटमाकर्ण्यते। प्रतीच्यामैतिहासिकोपन्यासलेखकानामादिमो नूतनवाट (New way) प्रकाशक सर् वाल्टर स्काट् (Sir Walter Scott) महाशयोऽपीत्थमेव दूषणभाजन समजनि। आधुनिकानामाङ्ग्लेतिहासज्ञाना फ्रीमैनाभिधान कोविद परमप्रसिद्ध। उपन्यासप्रस्तुतायामितिहासविकृतौ रोष प्रदर्शयता कृतिनाऽमुनाऽभिहित—'यूरोपदेशोद्भूते धर्मयुद्धयात्रायुगे (The age of the Crusades) ये किमपि ज्ञातुमीहन्ते तै स्कॉटकृत 'आइवान हो' (Ivanho) नाम उपन्यासो न पाठ्य इति। अत्राऽपि समाधान पूर्ववदेव बोध्यम्। एवमेवाऽत्र कृतौ महाकविना चरितनायकस्य तत्तत्कार्यकालाना पौर्वापर्यविपर्ययोऽकारीति यद्दूषणमुपन्यस्त तत्रेय वार्ता—नेय कृति प्राधान्येनेतिहास प्रत्युत काव्यमेव। महाकविना स्वलेखनसौविध्यमाचरतेत्थमाचरितमतो नाऽत्र स उपालम्भभाजनम्।

'शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते'। इत्युक्तेरत्र वीरोऽङ्गी रसो **यथायथ**मङ्गरूपाणि रसान्तराणि च बोद्धव्यानि। मङ्गलाचरणरूपे प्रथमश्लोके कृपाणमुपवर्णयता महाकविनाऽस्य महाकाव्यस्य वीररसाश्रयित्व द्योतितमेव।

अत्र सत्स्वप्यलङ्कारान्तरेषु महाकविर्विशेषत उपमोत्प्रेक्षादृष्टान्तार्थान्तरन्याससमासोक्तिवृत्त्यनुप्रासादीन् बाहुल्येन लोचनगोचरीकरोति।

यद्यपि स्वकृत्या कृतसहृदयहृदयसवनन स चाऽय महाकविर्बिल्हण काश्मीरेषु प्राप्तजननस्तथाप्यय कल्याण-चालुक्य-वशस्य षष्ठविक्रमादित्यस्य विक्रमाङ्कदेवापरनामकस्य सभापण्डित आसीत्। भारते वर्षेऽस्य षष्ठविक्रमादित्यस्य शासन १०२६ त ११२७ खृष्टाब्दपर्यन्त स्थितम्।

काश्मीरेषु प्रवरपुरम् (श्रीनगरम्) प्रधाननगरमस्ति। तस्मात्क्रोशत्रये खोनमुषनामक ग्राम महाकविरय स्वजन्मनाऽलङ्कृतवान्। तत्र कौशिकगोत्रोत्पन्ना ब्राह्मणा निवसन्ति स्म। तदन्वयमेवाऽय भूषितवान्। अस्य प्रपितामहो मुक्तिकलश पितामहो राजकलश पिता च ज्येष्ठकलश आसीत्। अस्य मातुर्नाम नागादेवीति। अस्य ज्येष्ठभ्राता-इष्टरामोऽनुजश्चाऽऽनन्दनामाऽऽसीत्। द्वावप्येतौ भ्रातरौ विद्वत्तया तत्र प्रसिद्धावास्ताम्।

काश्मीरेष्वेव सकलवेदशास्त्राण्यधीत्य बाणभट्ट इवाऽयमपि विदेशान्प्रति प्रतस्थे। मथुराया वृन्दावने च शास्त्रार्थविषयेषु पण्डितान्विजित्य क्रमश कान्यकुब्जत प्रयाग समाजगाम। तत काश्या डाहलाधीशस्य कर्णनृपते सभाया

श्रीगङ्गाधरनामान कञ्चित् विशिष्ट पण्डित पराजितवान् । ततो भोजराजधानी धारा प्राप्त । परञ्च भोजस्य दिवङ्गमात्तस्य तत्र गमनमसफलमेवाऽऽसीत् । तत स गुर्जरदेशे समागत्य सोमनाथमहादेवस्य दर्शन कृतवान् । सोमनाथान्निर्गत्य स दक्षिणदेशे चिर बभ्राम । सेतुबन्धरामेश्वरदर्शनानन्तर स कल्याणनगर ययौ । तत्र लब्धविद्यापतिपदवीक स षष्ठ-विक्रमादित्यस्य चालुक्यवशीयस्य सभा यावज्जीव सम्भूषयति स्म ।

**सर्वस्व गृहवर्ति कुन्तलपतिर्गृह्णातु तन्मे पुन—**
**र्भाण्डागारमखण्डमेव हृदये जागर्ति सारस्वतम ।**
**रे क्षुद्रास्त्यजत प्रमोदमचिरादेष्यन्ति मन्मन्दिर**
**हेलान्दोलितकर्णतालकरटिस्कन्धाधिरूढा श्रिय ॥ १ ॥**
**अयि ! किमनिश राजद्वारे समुद्धुरकन्धरे**
**कुवलयदलस्निग्धे मुग्धे विमुञ्चसि लोचने ।**
**अमररमणीलीलावल्गद्विलोचनवागुरा—**
**विषयपतितो न व्यावृत्ति करिष्यति बिल्हण ॥ २ ॥**

उपर्युक्त पद्यद्वय काश्मीरासादित-चौरीसुरतपञ्चाशिकाग्रन्थे प्रारम्भ एवाऽस्ति । एताभ्या पद्याभ्या बिल्हणविक्रमादित्ययो पूर्व कादाचित्क वैमनस्य द्योत्यते । प्राचीनराजसभापण्डिता स्वभावत एव नूतनमहापण्डितप्रवेशे विरोधिनो भवन्तीति नैतदसम्भवम् ।

श्री कृष्णम्माचारियरमहोदयस्त्वेतदेव वैमनस्य पाश्चात्कालिक विमृश्य महाकाव्यस्याऽस्याऽपूर्णत्वे कारणमिति कल्पयति । तन्मते खृष्टीये १०८५ वत्सरे विक्रमादित्यस्य नर्मदातटयात्राऽत्र न वर्णितेत्यस्याऽपूर्णत्वम् । परन्तु नैतन्महाकाव्यमपूर्णम् । खृष्टीय १०८५ वर्षीया घटना महाकाव्यरचनानन्तरभूतेति तस्या अत्र समावेशोऽसम्भव । महाकाव्य परिसमाप्यैवाऽन्तिमेऽष्टादशसर्गे महाकविना स्ववशवर्णन कृतमित्यपूर्णताया कल्पना निराधारैव ।

एवमेव 'इण्डियन एण्टिक्वेरी' पत्रसपादकस्य 'बिल्हण श्लेषालङ्कारस्य परमोपासक इत्यादि समालोचन, श्रीमतो द्विवेदिमहोदयस्य महाकवेरस्य प्राचीनकवीनामनुकरणदोषारोपण, डा० ब्ह्लरमहोदयस्य चैतिहासिकघटनाऽपटुत्वेन दूषण सर्वमिद समालोचनमनालोचनपूर्वकमेव । न कोऽपि निर्दोष इति विचार्यैव महाकविना कालिदासेन कुमारसम्भवे भणित—

**एकोऽहि दोषो गुणसन्निपाते निमज्जतीन्दो किरणेष्विवाङ्क ।** इति

यो महाकवि स्वग्रन्थे काव्यार्थचौर्यं निन्दति स कथ तदेव कुर्यात् ।

ईदृग्भूताना समालोचकाना कृत एव महाकविना बिल्हणेनोक्तम्

**रसध्वनेरध्वनि ये चरन्ति सक्रान्तवक्रोक्ति—रहस्यमुद्रा ।**
**तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषा शुकवाक्यपाठम् ।।** (१-२२)

एतादृशस्य महाकाव्यरत्नस्य काऽपि विशदटीका न विद्यते । चरित-चन्द्रिकाऽभिधाना केवलमेका टिप्पणी कविहार्दभावप्रकाशनऽसमर्था । अत एवाऽयमस्माक टीकालेखने समारम्भ । अस्मदीयायामस्यामभिनवव्याख्याया रमानाम्न्या यथामति कवितात्पर्यप्रकाशनपुरस्सर रसध्वन्यलङ्कारच्छन्द प्रभृतय आलङ्कारिका विषया वैशद्येन प्रतिपादिता । तदधस्तले च हिन्दीभाषामयोऽनुवादोऽपि सविस्तर व्यक्तरूपेण न्यधायि । तत्राऽस्माभि कियती सफलताऽधिगता, विषयेऽत्र सहृदया कोविदा एव प्रमाणम् । यथोक्त कविकुलगुरुणा महाकविना कालिदासेन—

**आपरितोषाद्विदुषा न साधु मन्ये प्रयोगविज्ञानम् ।**
**बलवदपि शिक्षितानामात्मन्यप्रत्यय चेत ।।**

उपयुक्तसमयाभावेन सर्गसप्तक यावदतिसक्षिप्तया विधयाऽत्रत्या काश्चिद्विशेषता प्रकाशिता । भागान्तरे वैशिष्ट्यान्तराणि चोपस्थापयिष्यन्त इति धिया साम्प्रतमेतावतैव विरम्यते ।

## सर्गसप्तकस्थः कथासारः ।

## प्रथमसर्गे—

मङ्गलाचरणप्रस्तावनानन्तर प्रकृतचरितनायकचालुक्यकुलमूलपुरुषस्योत्पत्ति प्रदर्शिता । सा चेत्थ-जातुचिच्चतुर्वदने प्रात सन्ध्यावन्दनपरे सुरपतिर्धराभरापनयनार्थमलौकिकपौरुषस्य कस्यचिन्महापुरुषस्याऽऽवश्यकता निवेदयामास । तदनु वेधा सन्ध्यासलिलपूर्णमात्मचुलुकमालुलोके । तस्माच्च कमलासनचुलुकाल्लोकत्रयत्राणप्रवीण सुभट आविरासीत् । स पुरुष पुरुहूत ‘धृतिमान् भव’ इति प्रस्थाप्य सुरविपक्षक्षयदीक्षितोऽभूत् । तत एव चालुक्यकुल समजनि । यत्र च हारीतमानव्यनामानावादिपूरुषौ बभूवतु । तत्कुलजा युद्धदुर्धर्षा भूपाला अयोध्या स्ववासस्थान चक्रु । केचिच्च विश्वविजयक्रमेण विलासितया च दक्षिणस्या दिशि निवास विदधु । किञ्चित्कालानन्तर तैलपो नामाऽतुलविक्रमो

भूपस्तद्वशावतंसोऽभूत् । ततोऽनुपमशौर्यश्रिय सत्याश्रयो नाम नरपति प्रादुर्बभूव । ततश्च समराङ्गणेषु मुहुर्मुहु प्राप्तजयो जयसिह आविर्भूत । तस्माच्च त्रैलोक्यमल्लापरनामक आहवमल्लाभिधानो विश्रुताऽवदानो नरनायक समजायत । अनुपमविक्रम स नरपालश्चोलदेश मालवराजधानी धाराञ्च जिगाय । डाहलपतिं कर्णञ्च विवर्ण चकार । एवमेव बहुष्वाहवेषु मल्ल स आहवमल्लो द्रविडप्रकाण्ड वीररसस्याऽभाजन विदधे, चोलराज्यश्रियञ्चाऽऽचकर्ष ।

## द्वितीयसर्गे—

प्रक्रान्तविक्रान्तचरित आहवमल्लदेव सर्वा ककुभो विजित्य गुणिगणमण्डिता कल्याणपुरीमात्मराजधानीरूपेण विदधे । समधिगतसम्पदतिशय पूरितार्थिसार्थमनोरथोऽपि स भूपतिस्तनयाभावेन दूयमानमानसोऽभूत् । तत स देव्या सम विमृश्य सकलराज्यकार्यभार मन्त्रिषु विनिवेश्य तनुजाऽऽसादनार्थं शङ्करानुष्ठाननिष्ठो बभूव । जातुचिद्विभाते चन्द्रशेखरपरिचरणपरो नरवर स इमामशरीरिणी गिरमाकर्णयति स्म—"भो नरपते ! कृत तपसा । भगवान्पार्वतीपतिस्त्वयि प्रसादाभिमुख सवृत्त । इय त्वदीया दयिता तनयत्रितयसमन्विता भविष्यति । तत्राऽपि शिवप्रसादाद्द्वितीयस्तनयोऽतुलबलो भविता" इति । अनन्तर नरदेवो व्रतपारणाविधि विदधे । ततश्च शुभे मुहूर्ते देवी सुतमेकमसूत, यो नाम्ना सोमेश्वर सवृत्त । ततो माङ्गलिके लग्ने देव्या गर्भतो लोकोत्तर-गुणगणसमलङ्कृत समस्तशुभलक्षणलक्षित शिवप्रसादीकृतो द्वितीयस्तनय समजनि । निरतिशयहर्षप्रकर्षपरवशो महाराजश्चाऽऽत्मजस्य जातकर्मादिसस्कार सम्पादयामास ।

## तृतीयसर्गे—

नवप्रसूत प्रभूतशुभलक्ष्मपूरितो राजसुत आख्यया विक्रमाङ्कदेव इति ख्यातिमभजत् । स च बालोऽनितरसाधारणगुणान्बाल्य एव प्रादर्शयदकरोच्च मातापितरौ प्रमोदमेदुरमानसौ । अचिरेणैव समयेन विक्रमादित्यो विक्रमाङ्कदेवापरनामा समधिगतसमस्तविद्य सवृत्त । अत्रान्तरे नराधिपस्य जयसिहनामकस्तृतीयस्तनयोऽपि समजायत । अथ राजा प्रतापेनाऽऽदित्यसन्निभो द्वितीयमप्यद्वितीय विक्रमादित्याभिख्य तनूज यौवराज्यालङ्कृत कर्तुमियेष । ज्येष्ठे भ्रातरि स्थितेऽपि स्वयौवराज्याभ्युपगमे महदनौचित्य पश्यन्वाचोयुक्तिपटु स

उक्तिविशेषैर्मुहुर्मुहुराग्रहग्रहग्रहिल स्वपितर न्यषेधत् । इत्थञ्च सोमेश्वर सोमदेवापरनामधेय एव यौवराज्यपदभागजायत । वस्तुतस्तु विक्रमाङ्कदेव एव राजयुवराजयोर्द्वयोरपि भारमादिकमठो भूमिशेषयोरिव विशेषरूपेण बभार । तदनन्तर पितुराज्ञया सर्वत्र रणोत्सवेषु विजयमवाप । एवञ्च स चोलाञ्जिगाय, स्वशरणागत मालवाधीश निष्कण्टक राज्ये समस्थापयत् । बहवो भूपाला कन्यकाप्रदानच्छलतोऽस्य सर्वस्वदान चक्रु ।

## चतुर्थसर्ग—

विक्रमाङ्कदेवो दिग्विजयार्थं प्रयाणमकरोत् । तद्गजा मलय मलयजरहितमकुर्वन् । स केरलदेश जीवितेशदेश प्रापयत् । तद्भयात्सिहलभूपालस्तच्छरण जगाम । एवञ्च विक्रमाङ्कदेवो गाङ्गकुण्डपुर चोलदेश च जिगाय । वेङ्गिभूपाल चक्रकोटपतिञ्च स निर्वीय चकार । एवञ्चाऽपराक्रान्तो महाविक्रान्तो विक्रमाङ्कदेव कृतकार्य सन्ननिवार्यदैवगत्या स्वदेशप्रत्यावर्तनकाले बहुविधान्यपशकुनानि प्रत्यक्षीचकार । ततश्च स तच्छान्त्यर्थं सर्वस्वदानमालोच्य कृष्णानदीतटे विशश्राम । तस्मिन्नेव समये कल्याणपुरात्समायातो दूत एतादृशीमभव्या वार्तामिश्रावयत्—"राजकुमार ! भवज्जनको भावत्क पाण्ड्यचोलसिहलभूपालविजय समाकर्ण्याऽमन्दमानन्दसन्दोहमन्वभूत् । पर नियतिदुर्गतिपरवश स दाहज्वराभिभूत्या दक्षिणापथत्रिपथगा तुङ्गभद्रा प्राप्य सुवर्णदानपूर्वक कण्ठदघ्ने तत्तोये प्रविश्य चन्द्रशेखरपुर प्रययौ" इति । इत्थञ्चाऽकाण्ड एव जनककैलाशवासमाकर्ण्य परितप्त स भृश परिदेवयामास । अथ स सस्थितस्य तातस्योत्तरक्रिया यथाविधि विधाय सत्वरमग्रजालोकनोत्कण्ठया कल्याणप्रयाणमुद्दिश्य जगाम ॥

तत स कियद्भिरपि दिवसै कल्याणपुरी समासाद्याऽग्रे समागतेनाऽग्रजन्मना सम्मानितस्तेनैव सम समानसक्लेश नरेशप्रासाद विवेश । तदनु तावुभावकृत्रिमाभिर्मिथ प्रणयवृत्तिभि कतिचिद्वासरानयापयताम् । गुणगणज्येष्ठोऽपि स ज्यायाँस तातप्रतीकाश प्रतीक्ष्य समीक्ष्य समर्पयामास च तस्मै दिग्विजयोपार्जित समस्त वस्तुजातम् । ततश्चाऽनिवार्यया भवितव्यतया सोमेश्वरो दुर्विनयपरोऽभूद्येन च स भूपो विमले चालुक्यकुले कलङ्करूपो बभूव । यदा विक्रमादित्य आत्मनोऽग्रजस्य दुराग्रह निराकर्तु न शशाक, तदाऽयशोभीत्या भेरीरवेण श्रवणविवर भिन्दन्कल्याणपुराद्विनिर्ययौ ॥

## पञ्चमसर्गे—

विक्रमादित्य कल्याणपुरत्यागसमये स्वाग्रजात्सङ्कटमाशङ्क्य नयविनयोपेत जयसिहाऽपरनामधेय स्वाऽनुज सिहदेवमपि निनाय। अथैतद्वृत्तमसहमानश्चा-लुक्येश्वर सोमेश्वरो विक्रमादित्यस्य पृष्ठत पुष्कल बल व्यसर्जयत्। ततश्च निर्दयप्रहरणपर तद्बलमनिच्छन्नपि महाविक्रमो विक्रमश्चूर्णित चकार। उत्तुङ्ग-शक्ति स तुङ्गभद्रा प्राप, युद्धेच्छया चोलसम्मुखवर्ती च बभूव। एव च स कञ्चित्काल यावद्वनवासमण्डलमध्युवास। स्वबलवाद्यनिनदैर्मलयदेशभूभुजा-मात्मपूर्वविक्रम स्मारयन्विक्रम पुरत उच्चचाल। तस्मिन्नेवान्तरे कोङ्कणदेश-नरेशो जयकेशी प्रार्थितादप्यधिक धन तस्मै समर्पयामास। आलुपपालकश्च तदन्तिके रणचापल त्यक्त्वा समृद्धि चाऽऽप। तत स रणेच्छया चोलाँश्चचाल। विक्रमबलाऽतिक्रमाऽक्षमश्चोलभूपाल सन्ध्यर्थ स्वसन्देशहर विक्रमान्तिक प्राहिणोत्। स दूतो विक्रम बहुश स्तुत्वा चोलभूपालो भवते स्वकुमारी समर्प-यितुमिच्छती" ति निवेदयामास। विक्रमोऽपि तत्प्रार्थनामभ्युपयञ्छस्तुङ्गभद्रानदी-तटमगात्। ततश्चोलपति स्वकन्या विक्रमाय समर्पितवान् ररक्ष चैव विक्रमबलाक्रमणाच्चोलाऽचलाम्।

## षष्ठसर्गे—

अथ चोलपति कन्यादानानन्तर जामातुरभ्यनुज्ञा समवाप्य चचाल। ततो विक्रमादित्य किञ्चित्कालाऽनन्तर दैवहतकस्य दुर्विलसिताद्रणाङ्गणे चोलपते सुरलोकप्रयाणमाकर्णयत्। परिदेवनादनु स चोलराजकुमारे श्रियमभिषेक्तु काञ्ची प्रति समुच्चचाल। तत्र च विक्रमादित्य विलोक्य काञ्चीकामिन्यो बहुविधा शृङ्गारचेष्टाश्चक्रु। ततश्च स दुष्टवर्ग खर्वतेजस विधाय चोलेन्द्र-निर्मापित गाङ्गकुण्डपुर प्रययौ। तत्र च स परिपन्थिसैन्यनिधनपूर्वक चोल-राजकुमार राजपदमधिरोप्य मासपर्यन्त तत्राऽवस्थाय भूयोऽपि तुङ्गभद्रा वव्राज। दिष्टाऽनिष्टतया कतिपुचिद्दिवसेषु गतेपु राजिगाऽभिधान वेङ्गिनाथ प्रकृति-विरोधहतस्य तस्य विक्रमश्यालकस्य राज्यमपाजहार। कुटिलमतिरसौ राजिग पुनर्विक्रमाक्रमणमाशङ्क्य विक्रमाग्रज सोमेश्वर स्वसहायकमकृत। ततो विक्रमादित्ये राजिगवधार्थं कृतप्रयाणे सति सोमेश्वरस्तस्य पृष्ठे त्वरिततरमुपागत। अग्रजेन सम समरकरणे परममक्रम मन्वानो विक्रमोऽश्रुपूर्णनयन उद्यतो न बभूव, युद्धनिराकरणार्थ बहून्यनुनयवचनानि च तत्पार्श्वे विससर्ज। इत्थ च समरा-ऽनुद्यत निद्रापरवश त भगवाश्चन्द्रशेखर क्षात्रधर्मपरिरक्षणार्थं युद्धतत्पर चकार।

ततश्च रोमहर्षणो रण प्रववृते । किमपर द्रविडपतिराकुलमतित्वेन पलायित सोमदेवश्च बन्धनाऽगारे न्यविशत । ततश्च विक्रमस्तुङ्गभद्रा जगाम । अग्रजाय राज्य वितरितु कृतमति स शङ्करेण भूयोऽपि न्यषेधि। इत्थ चाऽनिच्छया स प्रतापाऽतिशयेन राजसिहासनमारुरोह, स्वानुगतमनुज च वनवासमण्डला-खण्डल चकार ।

## सप्तमसर्गे—

अथाऽसौ निर्वापितचोलप्रतापो विक्रमादित्य कल्याणपुर प्रविवेश । अत्रान्तरे शृङ्गारबन्धुर्मीनकेतनसचिवो वसन्त आविर्बभूव ॥ वसन्तर्तोरभिनव-कल्पनो-त्प्रेक्षाकृतवर्णनेनैव सप्तमोऽय सर्ग समाप्तिमगात् । इति

राज्ञो विक्रमाङ्कदेवस्य सम्बन्धे यानि पुस्तकानि लिखितानि ये च लेखा प्रकाशितास्तेषा सूची परिशिष्टे निबद्धा। एभिर्विक्रमाङ्कदेवविषये बहुज्ञात भवति। परन्तु विक्रमाङ्कदेवसूनुना विदुषा सोमेश्वर-तृतीयेण, येनाऽभिलषि-तार्थचिन्तामणिर्मानसोल्लासापरनामको ग्रन्थो व्यरचि[१], तेन विक्रमाङ्काभ्युदयाख्य चम्पूकाव्यमपि विरचित यस्य हस्तलिखित पुस्तक पट्टनस्थजैनभाण्डारे वरीवर्ति । परञ्च पुस्तकमेतत् खण्डितमिति महद्दुःखास्पदम् । अन्यथा तदाधारेण समालोचकाना कवेर्वैतिहासिकादिक मत साधु दुष्ट वेति निर्णय सुतरा सारल्येन सम्भाव्य स्यात्। तत्पुस्तकावलोकनेन तत्र समाप्ति—सूचन पार्श्वतोऽवलोक्याऽ-नुमातु शक्यते यदस्य पुस्तकान्तरमपि कुत्रचिदवश्य भवेदिति। आशासे यद्भविष्यत्काले कोऽपि गवेषणाकुशलो विद्वान् पुस्तकान्तरमस्याऽवाप्य प्रकाश्य च साधुवादाँल्लभेतेति ।

अन्ते चाऽस्मिन्पुस्तकेऽस्मत्कृता प्रकाशनयन्त्रजाता वा ये दोषा गुणग्राहकाणा विदुषा लोचनपथे समागच्छेयुस्ते मर्षणीयास्तेषाञ्च सूचनयाऽनुग्राह्योऽय जन इति सदर्थकमभ्यर्थनम् ।

यतो—

**गच्छतस्खलन क्वापि भवत्येव प्रमादत ।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जना. । इति ।**

—शुभ भूयात्—



---

[१] सोलकियो का प्राचीन इतिहास पृष्ठ १२५–१२६ ।

॥ श्री ॥

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्ति |
|---|---|---|---|
| बहुष्वमर्त्येरद्यापि | वहुष्वमर्त्यैरद्यापि | १० | ११ |
| प्रन्यायकत्वेन | प्रत्यायकत्वेन | १२ | २३ |
| कर्तं न | कर्तु न | १३ | २७ |
| मत्सूक्तिरत्नाति | मत्सूक्तिरत्नानि | १५ | २६ |
| अन्वय | अन्वय | १५ | २५ |
| बहदिक्षूणा | बृहदिक्षूणा | १६ | २५ |
| कष्ठवि | कण्ठवि | २४ | १२ |
| निसृतानीत्यर्थं | नि सृतानीत्यर्थं | २५ | ६ |
| विख्यात अस्तीति | विख्यातोऽस्तीति | २५ | १० |
| परवह्म | परब्रह्म | २६ | १८ |
| इत्यादिरमर. | इत्यमर | २७ | २८ |
| यददर्शन | यददर्शनं | ३० | १० |
| सून्दरस्त्रीत्वेन | सुन्दरस्त्रीत्वेन | ४१ | १४ |
| पार्थिवैनृपै | पार्थिवैर्नृपै | ४८ | २ |
| शीर्षंऽपि | शीर्षेऽपि | ४८ | २१ |
| द्विड्विपक्षाहिता | द्विड्विपक्षाहिता | ५२ | २३ |
| निवारणादृढतया | निवारणाद्दृढतया | ५४ | ७ |
| खङ्ग एव | खङ्ग एव | ५७ | १९ |
| खङ्गरूपी | खङ्गरूपी | ५७ | २६ |
| तिकीर्तिधाराम् | पतिकीर्तिधाराम् | ६८ | २७ |
| ॥०१॥ | ॥१०॥ | ९५ | २१ |
| कान्तिवार्‍िभि | कान्तिवारिभि | ९८ | २ |
| पितृणामपनेतु | पितृणामपनेतु | ११२ | ६ |
| श्रोत्रपथप्रमाथिर्नि | श्रोत्रपथप्रमाथिनी | ११३ | १४ |
| गोद म | गोद मे | ११४ | १७ |
| दष्प्रसहम् | दुष्प्रसहम् | ११९ | ९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्ति |
|---|---|---|---|
| प्रभातपजासमये | प्रभातपूजासमये | १२१ | २६ |
| व्रतपारणाविधि | व्रतपारणाविधि | १२६ | ८ |
| पूर्वपाथिवमथ | पूर्वपार्थिवमथ | १४९ | ४ |
| रासोदगृहम् | रामीद्गृहम् | १४९ | ४ |
| व्यग्र के | व्याघ्र के | १६० | १२ |
| क्षिपतो | क्षिपतो | १६३ | १६ |
| मुञ्चतो | मुञ्चतो | १६३ | १७ |
| नन | ननु | १७२ | १६ |
| कृतस्तेनाऽनचितकार्येण | कृतस्तेनाऽनुचितकार्येण | १७८ | ९ |
| मलयाचल का, | मलयाचल को, | २०८ | ११ |
| विद्रमेषु | विद्रुमेपु | २१६ | ८ |
| पच्छन्तीना | पृच्छन्तीना | २३० | २६ |
| पाण्ड्राजा को | पाण्डचराजा को | २३४ | २ |
| कीति | कीर्ति | २३६ | ३ |
| कीति इव | कीर्तिम् इव (कीर्तिमिव) | २३६ | ६ |
| दिशश एव | दिश एव | २३७ | १४ |
| प्रभृतप्रमोदावहेति | प्रभूतप्रमोदावहेति | २४० | २ |
| जलविन्दवोऽपि | जलबिन्दवोऽपि | २४१ | ५ |
| चित | चित्त | २४४ | १९ |
| स्नना करके | स्नान करके | २४६ | १४ |
| तद्द ख | तद्दु ख | २५८ | २७ |
| तुल्यम | तुल्यम् | २६३ | १२ |
| स्तोमैस्समहै | स्तोमैस्समूहै | २७१ | ८ |
| औषन है । | औषध है । | २७३ | ४ |
| दुराचारेपि | दुराचारेऽपि | २७३ | १३ |
| लक्ष्म्या सम्पात्या | लक्ष्म्या सम्पत्त्या | २७३ | १९ |
| श्रवणरसणि | श्रवणसरणि | २७८ | १३ |
| मौक्तितवर्जिता | मौक्तिकवर्जिता | २७९ | १५ |
| वसम्तेन | वसन्तेन | २७९ | २० |
| शभ | शुभ | २७९ | २६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्ति |
|---|---|---|---|
| मङ्गलध्वनि | मङ्गलध्वनि | २८२ | ९ |
| शब्दशन्यत्वस्य | शब्दशून्यत्वस्य | २८२ | १४ |
| चमचक्षुपा | चर्मचक्षुषा | २८४ | ११ |
| सङ्कऽटेप्यापत्ता | सङ्कटेऽप्यापत्ता | २८५ | ९ |
| लब्धतोरतरु | लब्धतीरतरु | २९० | १९ |
| तुष्यतिस्भ | तुष्यति स्म | ३२७ | ९ |
| वस्तुओ का | वस्तुओ को | ३४१ | १६ |
| समेलनानन्तर | सम्मेलनानन्तर | ३४३ | ११ |
| गलदश्रजलश्चिर | गलदश्रुजलश्चिर | ३४७ | २२ |
| पुरोऽत्रे | पुरोऽग्रे | ३५० | ७ |
| चोलसूना | चोलसूनो | ३६० | १३ |
| नृपयाऽऽहवमल्लदेवस्य | नृपस्याऽऽहवमल्लदेवस्य | ३६९ | १८ |
| गिरिपक्षेऽअसख्याका | गिरिपक्षेऽसख्याका | ३७३ | २२ |
| समुद्र कोरण | समुद्ररूपी रण को | ३७३ | २७ |
| चलन के समान | चलने के समान | ३७४ | २२ |
| मथिता ये | मर्थिता ये | ३७५ | २१ |
| अथिता | अर्थिता | ३७५ | २४ |
| हआ | हुआ | ३७८ | ११ |
| प्रासपङ्क्ति | प्रासपक्ति | ३७८ | १९ |
| तदबल | तद्बल | ३७९ | १२ |
| यस्मात्तत | यस्मात्तत् | ३७९ | ८ |
| भ्रातृयद्ध | भ्रातृयुद्ध | ३८१ | ८ |
| प्रमोदमद्वहिष्यन्तीति | प्रमोदमुद्वहिष्यन्तीति | ३८३ | १० |
| त्रिविगत | त्रिदिवगत | ३८४ | २६ |
| बीरो के | वीरो के | ३८९ | २ |
| प्रकट करन | प्रकट करने | ३८९ | २ |
| द्रततरमाक्रममाणाभ्या | द्रुततरमाक्रममाणाभ्या | ३८९ | १५ |
| कवचश्चवार | कवचश्चचार | ३९५ | ५ |
| कपालगुक्तिमध्ये | कपालशुक्तिमध्ये | ३९९ | २१ |
| आतनात् | आतनोत् | ३९९ | २५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्ति |
|---|---|---|---|
| बहृत | बहूत | ४०३ | ५ |
| महनोय | महनीय | ४०३ | २३ |
| सर्वं | सर्व | ४०५ | ४ |
| हृष | हर्षं | ४०७ | ५ |
| गजितेन | गर्जितेन | ४०७ | २३ |
| तुरगात्तमाना | तुरगोत्तमाना | ४१४ | १९ |
| चन्दानाद्रे | चन्दनाद्रे | ४१९ | १८ |
| चन्द्रनान्द्रे | चन्दनाद्रे | ४१९ | २३ |
| दोलालिलास | दोलाविलास | ४२० | २० |
| नपुण्यमापु | नैपुण्यमापु | ४२९ | १९ |
| सुहृद्वायु | सुहृद्वायु | ४४१ | ७ |
| कामाभिभूतस्सम् | कामाभिभूतस्सन् | ४४३ | १४ |
| सगहीतो | सगृहीतो | ४५३ | ८ |
| पुसान् | पुमान् | ४५७ | १९ |
| सम्प्रत्यधना | सम्प्रत्यधुना | ४५७ | २८ |
| दुमना | दुर्मना | ४५८ | १५ |
| अविनयपथवतिन | अविनयपथर्वातिन | परिशिष्ट (क) ४ | १७ |

॥ श्री ॥

# महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

## प्रथमः सर्गः ।

**भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः ।**
**यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥१॥**

**अन्वयः**

यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनं व्यनक्ति इव, सः ऊर्ध्वगामी भुजप्रभादण्डः इव कंसरिपोः कृपाणः व पातु ।

**व्याख्या**

नृत्यन्ती मुखकमले सुकवीना रसतरङ्गमग्नानाम् ।
वाणी हसीव सरो रमणीय दर्शयति विश्वम् ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिप्राप्त "आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" इति मङ्गलाचरण कर्त्तव्यमिति श्री बिल्हण-कविरादौ स्वेष्टदेवता स्मरन्नाशीर्वादात्मक मङ्गलमाचरति भुजप्रभादण्ड इति ।

य . पाञ्चजन्यस्य विष्णो शङ्खस्य 'शङ्खो लक्ष्मीपते पाञ्च-जन्यश्चक्र सुदर्शनम्' इत्यमर । प्रतिबिम्बस्य प्रतिच्छायाया भङ्ग्या व्याजेन धाराया कृपाणधाराया अम्भसो जलस्य फेन डिण्डिर "डिण्डिरोऽब्धिकफ फेन" इत्यमर । व्यनक्तीवि प्रकटयतीव स प्रसिद्ध ऊर्ध्वगाम्युपरिष्टात्प्रसरणशीलो भुजप्रभादण्ड इव दण्डायमानबाहुकान्तिकलाप इव कसरिपो कृष्णस्य कृपाण करवालो वो युष्मान् पातु रक्षतु । श्री कृष्ण सम्बन्धिन कृपाणस्योर्ध्वप्रसरणशीलत्वरूप समानधर्मसम्बन्धनिमित्तक भुजकान्तिदण्डत्वेनाऽऽहार्यसम्भावनमुत्प्रेक्षेव-पदवाच्या ।

कृष्णस्योन्नतकृपाणप्रतिबिम्बितपाञ्चजन्ये शुभ्रत्वात्फेनोत्प्रेक्षा, सा च विषयस्य भङ्गिपदेनाऽपन्हवादपन्हुतविषया । अत्र भगवत साक्षाद्वर्णनं विहाय भगवत्सम्बन्धिकृपाणस्य वर्णनात्तस्याऽपि लोकोत्तरत्वमभिव्यज्यत इति वस्तुध्वनिरपि । प्रतिनायक-कसालम्बनक-श्रीकृष्णनिष्ठोत्साहप्रतीतेस्तस्य च कविनिष्ठकृष्ण-विषयकभावेऽङ्गत्वात्प्रेयोऽलङ्कार । वीररसस्याऽङ्गत्वाद्रसालङ्कारश्च । काव्येऽस्मिन्वीररसोऽङ्गीति मङ्गलेनैव सूच्यते । सर्गेऽस्मिन्नुपजातिवृत्तम् । पूर्वार्द्धे उपेन्द्रवज्राछन्द उत्तरार्द्धे चेन्द्रवज्रा-छन्द । 'उपेन्द्रवज्रा जतजास्ततो गौ' 'स्यादिन्द्रवज्रा यदि तौ ज गौ ग' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीया वुपजातयस्ता' ।

## भाषा

पूण्य भूमि भारतवर्ष मे ग्रन्थ की निर्विघ्न समाप्ति के ध्येय से ग्रन्थ के आदि मे मङ्गलाचरण करने की प्रथा बहुत प्राचीन काल से चली आ रही है । इसको ध्यान मे रखते हुए महाकवि श्री बिल्हण अपने ग्रन्थ के प्रारम्भ मे मङ्गलाचरण करते है ।

कस के शत्रु श्री कृष्ण के भुजा की दण्डे के ऐसी सीधी ऊपर उठने वाली कान्ति के समान शोभायमान उनकी तलवार आप लोगो का सरक्षण करे, जो धार के पानी मे प्रतिबिम्बित पाञ्चजन्य शख की श्वेत परछाही के मिष से मानो जल के फेन को प्रकट करती है ।

मङ्गलाचरण मे वीररस की झलक होने से यह काव्य वीर-रस वाला है ऐसा सूचित होता है ।

**श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति ।**
**नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥२॥**

## अन्वयः

यः श्रीधाम्नि दुग्धोदधिपुण्डरीके चञ्चरीकद्युतिम् आतनोति सः नीलोत्पलश्यामलदेहकान्तिः भगवान् मुकुन्दः वः भूत्यै अस्तु ।

## व्याख्या

य श्रियो लक्ष्म्या धाम्नि निवासस्थाने 'धामतेजो गृहेमणौ' इत्यमर । दुग्धोदधिरेव क्षीरसागर एव पुण्डरीक सिताम्भोज 'पुण्डरीक सिताम्भोजम्'

इत्यमर । तस्मिन् क्षीरसागराभिन्नसिताम्भोजे चञ्चरीकस्य भ्रमरस्य द्युतिं कान्ति विष्णो कृष्णवर्णत्वादातनोति विस्तारयति, स नीलञ्च तदुत्पलञ्च नीलोत्पलमिन्दीवर 'इन्दीवरञ्च नीलेऽस्मिन्' इत्यमर'। तद्वच्छ्यामला कृष्णा देहस्य शरीरस्य कान्ति शोभा यस्य 'शोभाकान्तिर्द्युतिच्छवि.' इत्यमर । स भगवान् मुकुन्दो विष्णुर्वो युष्माक भूत्यै 'विभूतिर्भूतिरैश्वर्यम्' इत्यमर । ऐश्वर्या-याऽस्तु भवतु । प्रसिद्ध्यनुरोधात्क्षीरोदधिर्भगवतो निवासस्थान पद्मञ्च लक्ष्म्या निवासस्थानम् । शुक्लत्व-साम्याद्दुग्धोदधौ पुण्डरीकत्वारोपादेकस्थान एव लक्ष्मीनारायणयोर्वर्तमानत्वम् । अतो 'दुग्धोदधिपुण्डरीके' इत्यत्र रूपकालङ्कार । चञ्चरीकद्युतिमिवद्युतिमित्यर्थावगमात्पदार्थ-निदर्शना । नीलोत्पलस्येव श्यामल-देहकान्ते सद्भावादुपमा । अतस्तेषा ससृष्टि ।

### भाषा

लक्ष्मी के निवास स्थान क्षीर सागर रूपी श्वेत कमल मे जिनकी सॉवली मूर्ति भौरे के समान शोभित हो रही है, ऐसे नीले कमल के समान साँवली देहकान्ति वाले विष्णुभगवान् आप लोगो की ऐश्वर्यवृद्धि करे ।

**वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य ।**
**श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥३॥**

### अन्वयः

या श्रियः अङ्गरागेण सौभाग्यहेम्नः कषपट्टिका इव विभाव्यते, सा जगत्प्रसूतेः गरुडध्वजस्य वक्षःस्थली जगन्ति रक्षतु ।

### व्याख्या

या श्रियो लक्ष्म्या अङ्गस्य शरीरस्य रागेण काञ्चनसमानवर्णेन प्रतिबिम्बि-तेन हेतुना सौभाग्यहेम्न. सौभाग्यमेव हेम सुवर्णं तस्य श्री-सौभाग्यरूपहिरण्यस्य शुद्ध्यशुद्धिपरिचायिका कषपट्टिकेव कषपाषाण इव विभाव्यते ज्ञायते सा जगतां विश्वेषा प्रसूते कारणस्य गरुडध्वजस्य गरुडवाहनस्य 'गोविन्दोगरुडध्वजः' इत्यमर । विष्णोर्वक्ष स्थल्युरस्थल जगन्ति लोकान् रक्षत्ववतु । सौभाग्य-मेव हेम इति रूपकम् । तस्य कषपट्टिकेवेति उत्प्रेक्षा इत्यनयोरङ्गाङ्गि-भाव-सङ्कर ।

**भाषा**

ससार को उत्पन्न करने वाले गरुडवाहन विष्णु भगवान् का वक्ष स्थल अनेक लोको की रक्षा करे। जिसपर लक्ष्मी के शरीर की सोने के समान कान्ति की छाया पडने से, जो सौभाग्य रूपी सोना कसने की कसौटी के समान अवगत हो रहा है।

**एक-स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम्।**
**यस्याः प्रियार्द्धस्थितिमुद्वहन्त्याः, सा पातु वः पर्वतराजपुत्री ॥४॥**

**अन्वयः**

प्रियार्द्धस्थितिम् उद्वहन्त्याः यस्याः एकः तुङ्गतरः स्तनः परस्य वार्ता प्रष्टुम् इव मुखाग्रम् अगात, सा पर्वतराजपुत्री वः पातु।

**व्याख्या**

प्रियस्य शिवस्यार्द्धस्थितिमर्द्धे स्वदक्षिणाङ्गे स्थितिमुद्वहन्त्या धारयन्त्या यस्या· पार्वत्या एकस्तुङ्गतरोऽत्युच्चस्तन कुच परस्य द्वितीयार्द्ध-देहरूपप्रिय-सम्बन्धि-नोऽर्द्धदेहस्थस्तनस्य वार्तां जीवनवृत्तान्त स्नेहात्प्रष्टुमिव पार्वत्या मुखाग्रमाननसा-मीप्यमगात्प्राप्त, सा प्रसिद्धा पर्वतराजस्य हिमाचलस्य पुत्री कन्या पार्वती वो युष्मान् पातु रक्षतु। वृत्तान्तप्रश्नस्य परस्तनकर्तृक–पार्वतीमुखाग्रकर्मकगमन सम्बन्धि-फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा। अत्राऽर्द्धनारीश्वरो व्यज्यते। उद्वहन्त्या इति पदसामर्थ्यात्पर्वतराजपुत्रीत्यत्र परिकरालङ्कारात्पार्वत्या उद्वहनक्षमत्व गम्यते। तन्त्रशास्त्रदृष्ट्या पार्वत्या आद्य[१]शक्तित्वेन ग्रहण कविसम्मत प्रतिभाति।

**भाषा**

अपने प्रिय के आधे अङ्ग को अपने दक्षिण अङ्ग मे धारण करने वाली हिमालय पर्वत की लडकी पार्वती तुमलोगो का रक्षण करे। जिसका ऊपर

---

[१] अर्धं स्त्रियस्त्रिभुवने सचराचरेऽस्मिन्नर्ध पुमास इति दर्शयितु भवत्या।
स्त्रिपुसलक्षणमिद वपुरादृत यत्तेनाऽसि देवि विदिता त्रिजगच्छरीरा॥
श्री नीलकण्ठदीक्षितविरचिते 'आनन्द सागरस्तवे' श्लो० १००।
"कान्तार्द्धविग्रहे"त्यस्य व्याख्याऽपि भास्करराय-प्रणीते ललिता-सहस्रनाम-सौभाग्य-भास्कराख्यभाष्ये द्रष्टव्या।

उठा हुआ वामाङ्ग मे का एक स्तन जाति के सौहार्द से मानो दक्षिणाङ्ग-स्थित (दबे हुए) दूसरे स्तन की जीवन सबन्धि दु ख सुख की घटना पूछने के लिए पार्वती के मुख के पास पहुँचा है ।

सान्द्रां मुदं यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः ।
कुर्वन्नजस्रं यमुनाप्रवाह—सलीलराधा—स्मरणं मुरारेः ॥५॥

अन्वयः

सोल्लासलक्ष्मीप्रतिबिम्बगर्भः नन्दकः मुरारेः यमुनाप्रवाहसलीलराधा-स्मरणम् अजस्र कुर्वन् वः सान्द्रां मुद यच्छतु ।

व्याख्या

उल्लासेन सहिताया हर्षोत्फुल्लाया लक्ष्म्या प्रतिबिम्बं प्रतिच्छाया गर्भेऽभ्यन्तरे यस्यैवम्भूतो नन्दको नन्दकनामा विष्णो खड्ग 'शखो लक्ष्मीपते पाञ्चजन्यश्चक्र सुदर्शनम् । कौमोदकी गदा खड्गो नन्दक कौस्तुभोमणि' इत्यमर । मुरारे कृष्णस्य यमुनाप्रवाहे सलीलाया विहरन्त्या राधाया स्मरण स्मृतिमजस्र सतत कुर्वन् मुरारिकर्तृक यमुनाप्रवाहान्तर्गतविहरमाणराधाकर्मकस्मरण निरन्तरं हेतुत्वे-नोत्पादयन् कारयन्नित्यर्थ । अन्तर्भावितण्यर्थोऽ य कृ धातु । सान्द्रा घनीभूता मुदमानन्द वो युष्मान् युष्मभ्य वा यच्छतु ददातु । नन्दकस्य यमुनाप्रवाहेण लक्ष्म्याश्च राधया साम्यमिति श्री कृष्णस्य स्मृतिस्सगच्छते । प्रतिबिम्बित-लक्ष्मीके नन्दके दृष्टे सति भगवत सादृश्याद्यमुनाप्रवाहान्तर्गत-लीलासक्तराधि-काया स्मरणात्स्मरणालङ्कार । सादृश्यज्ञानोद्बुद्धसस्कारप्रयोज्य स्मरण स्मरणालङ्कार ।

भाषा

प्रसन्नचित्त लक्ष्मी की परछाही से युक्त नन्दक नाम का विष्णु का खड्ग तुम लोगो को अधिक आनन्द दे। जो यमुना नदी मे लीला करने वाली राधिका का भगवान् को निरन्तर स्मरण कराने वाला है। अर्थात् जो विष्णु को काले रग के खड्गरूपी यमुना नदी मे प्रसन्न लक्ष्मीरूपी कृष्णावतार मे अनुभूत राधिका का सतत स्मरण करा रहा है ।

पार्श्वस्थपृथ्वीधरराजकन्या-प्रकोपविस्फूर्जितकातरस्य ।
नमोऽस्तुते मातरिति प्रणामाः शिवस्य सन्ध्याविषया जयन्ति ॥६॥

**अन्वयः**

पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जितकातरस्य शिवस्य हे मातः ते नमः अस्तु इति सन्ध्याविषयाः प्रणामाः जयन्ति ।

**व्याख्या**

पार्श्वस्था समीपस्था या पृथ्वीधरराजस्य हिमाचलस्य कन्या पुत्री पार्वती तस्या प्रकोपस्य क्रोधस्य विस्फूर्जितेन विलसितेन कातरस्य भीतस्य शिवस्य हे मातर्जगज्जननि ते तुभ्य नमोऽस्त्विति सन्ध्याविषया सन्ध्याकालाधिष्ठातृ-देवताकर्मका प्रणामा जयन्ति सर्वोत्कर्षेण वर्तन्ते । अन्यनायिकाया स्नेहभ्रमात्पार्वत्या प्रकोपोदय । कदाचिच्छङ्कर सन्ध्या प्रति ध्यानावस्थितत्व प्रकटयन्, भवान्या कथमयमन्यनायिकायामनुरक्त इति भावेन नितरा क्रुद्धाया हे मातस्तुभ्य नम इति सन्ध्या प्रणम्य पार्वतीगतसन्देह निवारितवान् ।

**भाषा**

पास ही में बैठी हुई पार्वती के क्रोध के आविर्भाव से डरे हुए शकर भगवान् के, हे माता मै तुमको नमस्कार करता हूँ, ऐसा कह कर सन्ध्याकालीन देवता को किये हुए प्रणाम अत्यन्त महत्व के है । अर्थात् शकर को सन्ध्यारूपी कामिनी मे अनुरक्त समझ कर, पार्वती के अत्यन्त क्रुद्ध होनपर, शकर ने सन्ध्या की अधिष्ठातृ देवता को माता कह कर प्रणाम करके पार्वती का भ्रम दूर करते हुए उसके क्रोध को शान्त कर दिया ।

**वचांसि वाचस्पति-मत्सरेण साराणि लब्धुं ग्रहमण्डलीव ।**
**मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादास्तु सरस्वती वः ॥७॥**

**अन्वयः**

ग्रहमण्डली वाचस्पतिमत्सरेण साराणि वचांसि लब्धुम् इव यस्याः मुक्ताक्षसूत्रत्वम् उपैति सा सरस्वती वः सप्रसादा अस्तु ।

**व्याख्या**

ग्रहमण्डली वाचस्पत्यतिरिक्तग्रहा वाचस्पतौ गुरौ 'बृहस्पति सुराचार्यो गी.पतिर्धिषणो गुरु इत्यमर । वय केवल ग्रहा अय खलु वचसा पतिरगीति मत्सरेणेर्ष्यया, अय सुराचार्य इति मत्सरेण च साराणि श्रेष्ठानि तत्वरूपाणि

वचासि ज्ञानप्रदविशिष्टवाक्यानि लब्धुमिव बृहस्पतितोऽप्यधिक ज्ञान प्राप्तुमिव यस्या सरस्वत्या मुक्ताक्षसूत्रत्व मौक्तिकजपमालात्वमुपैति प्राप्नोति, मुक्ताक्ष--सूत्रव्याजेन सरस्वतीमुपसेवते। सा सरस्वती शारदा वाग्देवता वो युष्मभ्य सप्रसादा प्रसन्ना अस्तु। बृहस्पतिमात्सर्यहेतुकवचस्सारप्राप्तीच्छाया ग्रहमण्डल्या मुक्ताक्षसूत्रत्वारोपे फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षेव-पदवाच्या।

### भाषा

बृहस्पति के अतिरिक्त अन्य ग्रहगण, बृहस्पति ग्रह होते हुए भी वाणी का पति और देवगुरु है, इस ईर्ष्या से, बृहस्पति से भी अधिक ज्ञान की विशिष्ट बाते जानने की इच्छा से, जिस सरस्वती की मोती की जपमाला मे मानो मोती बन कर उसकी सेवा करते है, ऐसी सरस्वती तुम लोगो पर प्रसन्न हो।

**अशेषविघ्नप्रतिषेधदक्ष-मन्त्राक्षतानामिव दिङ्मुखेषु।**
**विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥८॥**

### अन्वयः

**इभाननस्य अशेषविघ्नप्रतिषेधदक्षमन्त्राक्षतानाम् इव करशीकराणा दिङ्मुखेषु विक्षेपलीला वः प्रीति करोतु।**

### व्याख्या

इभस्य गजस्याऽऽनन मुखमिवाऽऽनन मुख यस्य तस्य गणेशस्याऽशेषाश्चते विघ्ना प्रत्यूहा 'विघ्नोऽतराय प्रत्यूह' इत्यमर। तेषा प्रतिषेधे निवारणे दक्षाणा समर्थाना मन्त्राक्षतानामिवाऽभिमन्त्रिताक्षतानामिव, करशीकराणा वमथूना शुण्डोत्क्षिप्ताम्बुकणाना 'शीकरोऽम्बुकणा स्मृता'। वमथु करशीकर। इत्यमर। दिङ्मुखेषु सर्वदिक्षु विक्षेपलीला गजाना स्वाभाविकीय जलक्रीडा वो युष्मान् प्रीतिमानन्द करोतु वितरतु। करशीकरेषु मन्त्राक्षतत्वस्योत्प्रेक्षणाद्व-स्तूत्प्रेक्षा।

### भाषा

हाथी के ऐसे मुखवाले श्री गणेश जी के सम्पूर्ण विघ्नो को दूर करने मे समर्थ अभिमन्त्रित अक्षतो के समान, समग्र दिशाओ मे अर्थात् चारो ओर सूँड से छोडे हुए जल कण तुम लोगो को आनन्द दे।

अथ प्रस्तावनामवतारयति कविः—

**अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्म-भूमिः ।**
**वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥९॥**

### अन्वयः

श्रवणामृतस्य अनभ्रवृष्टिः सरस्वतीविभ्रमजन्मभूमिः पदानां सौभाग्य-लाभप्रतिभूः वैदर्भरीतिः कृतिनाम् उदेति ।

### व्याख्या

श्रवणस्य कर्णस्य यदमृतमानन्ददायिवस्तु तस्य श्रवणामृतस्य कर्ण-पीयूष-स्याऽभ्राणा मेघाना 'अभ्र मेघो वारिवाहस्तनयित्नुर्बलाहक' इत्यमर । वृष्टि-र्वर्षणमभ्रवृष्टिर्नाभ्रवृष्टिरनभ्रवृष्टिर्मेघमन्तरैव वर्षणरूपा सरस्वत्या वाग्देवताया विभ्रमस्य विलासस्य जन्मभूमिरुत्पत्तिस्थान 'स्त्रीणा विलास विव्वोकविभ्रमाल-लित तथा' इत्यमर । पदाना शब्दाना सौभाग्यलाभस्य सौन्दर्यप्राप्ते प्रतिभू प्रतिलग्निका वैदर्भरीति गौडीपाञ्चालीवैदर्भीति रीतित्रय एकतमा 'माधुर्य व्यञ्जकैर्वर्णै रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरुच्यते' । कृतिना विशिष्टकाव्यरचनाकुशलाना पुण्यवता कवीनामुदेति प्रादुर्भवति । केवल भाग्यवन्त कुशलाश्च तथाविधालौकिक-गुणविशिष्ट-वैदर्भरीतौ काव्य रचयितु प्रभवन्तीति भाव । वैदर्भरीतौ श्रवणामृतानभ्रवृष्टेर्वाणीविलासजन्मभूमे सौभाग्यलाभप्रतिभूत्वस्य चाऽऽरोपाद्रूपकालङ्कार । 'तद्रूपकमभेदो य उपमानो-पमेययो ।

### भाषा

वैदर्भीरीति का आविर्भाव उत्कृष्ट और अच्छे काव्य की रचना करने में कुशल, पुण्यात्मा कवियो मे ही होता है । अर्थात् वैदर्भीरीति मे रचना हर एक कवि नही कर सकता । यह वैदर्भीरीनि श्रवणेन्द्रिय को आनन्द देनेवाले अमृत की बिना मेघ की वर्षा है, वाणी के विलास का जन्म स्थान है और पदो को यथोचित स्थान प्राप्त होकर उनके सौन्दर्यवृद्धि की जामिन है ।

**जयन्ति ते पञ्चमनाद-मित्र-चित्रोक्तिसन्दर्भविभूषणेषु ।**
**सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥१०॥**

**अन्वयः**

सरस्वती पञ्चमनादमित्रचित्रोक्तिसन्दर्भविभूषणेषु यद्वदनेषु नित्यं वीणा वादयन्ती इव आभाति ते जयन्ति ।

**व्याख्या**

सरस्वती वागधिष्ठातृदेवता पञ्चमनादस्य पञ्चमस्वरस्य पिकस्य वा 'पिका गायन्ति पञ्चमम' मित्राणि समानानि चित्राणा रसालङ्कारादिना चमत्कारिणी-नामुक्तीना काव्याना सन्दर्भा समूहा सम्यग्विरचनानि वा विभूषणान्यलङ्कर-णानि येषा तेषु येषा कवीना वदनेषु मुखेषु नित्य निरन्तर वीणा कच्छपी वादयन्तीव सारयन्तीवाऽऽभाति चकास्ति ते कवीश्वरा जयन्ति सर्वोत्कर्षेण वर्तन्ते । कविवदने सरस्वत्या वीणावादनस्योत्प्रेक्षणात्क्रियास्वरूपधर्मोत्प्रेक्षा । अभेदसम्बन्धातिरिक्तसम्बन्धेन वीणावादनस्य कविवदने सम्भाव्यमानत्वात् ।

**भाषा**

वे कवीश्वर धन्य है, जिनके कोयल के शब्द के समान कर्णेन्द्रिय को सुख देने वाली, रस अलङ्कार आदि से युक्त, चमत्कार पैदा करने वाली उक्तियो से अथवा कविता समूहो से विभूषित मुखो मे, सरस्वती अपनी कच्छपी बीन बजाती सी सदैव शोभित होती है ।

**साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।**
**यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति ॥११॥**

**अन्वयः**

हे कवीन्द्राः साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत । यत् अस्य लुण्ठनाय काव्यार्थचौराः दैत्याः इव प्रगुणीभवन्ति ।

**व्याख्या**

हे कवीन्द्रा कविश्रेष्ठा साहित्यमेव साहित्यशास्त्रमेव पाथसामुदकाना 'कबन्धमुदक पाथ' इत्यमर । निधि समुद्रस्तस्य मन्थन चिराभ्यासस्तस्मा-दुत्तिष्ठतीति साहित्यपाथोनिधिमन्थनोत्य साहित्यशास्त्ररूपसमुद्रालोडनोत्पन्न कर्णयो श्रोत्रयोरमृत पीयूष रक्षत विनाशात्परैर्हरणाद्वा गोपायत । यद्यस्मा-त्कारणादस्याऽमृतस्य लुण्ठनायाऽपहरणाय काव्यार्थस्य काव्यरूपद्रव्यस्य चौरास्त-

स्करा दैत्या इव समुद्रमन्थनाविर्भूतामृतापहरणचित्ता दैत्या इव प्रगुणीभवन्ति बहुलीभवन्ति सर्वतो वर्धन्ते तीव्रा लोलुपाश्च सन्तीत्यर्थ । काव्यार्थचौरेषु दैत्यसादृश्यादुपमा । 'साधर्म्यमुपमाभेदे' इतिलक्षणात् ।

### भाषा

हे कवियो मे श्रेष्ठ कविगण, साहित्यरूपीसमुद्र के मथन करने से अर्थात् चिरकाल तक अभ्यास करने से उत्पन्न और कान को सुख देनेवाले काव्यरूपी अमृत की सदैव रक्षा करते रहिए। क्योकि इस काव्यरूपी अमृत की चोरी करने के लिए, समुद्रमन्थन के समय अमृत की चोरी करने मे लालायित दैत्यो के समान बहुत से काव्य रूपी धन के चोर एकत्रित हो गए है।

**गृण्हन्तु सर्वे यदि वा यथेष्टं नास्ति क्षतिः कापि कवीश्वराणाम्।**
**रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥१२॥**

### अन्वयः

यदि वा सर्वे यथेष्टं गृण्हन्तु। कवीश्वराणां का अपि क्षतिः न अस्ति। अमर्त्यैः बहुषु रत्नेषु लुप्तेषु अद्य अपि सिन्धुः रत्नाकरः एव।

### व्याख्या

यदि वा अथवा पक्षान्तरे सर्वे काव्यार्थचौरा यथेष्टमिष्टमनतिक्रम्य यथास्यात्तथा यथेष्ट यथेच्छ गृण्हन्तु काव्यरूप कर्णामृत स्वोपयोगे समानयन्तु । तथापि कवीश्वराणा कवीन्द्राणा काऽपि काचिदपि क्षतिर्हानिर्नास्ति न सम्भवति । अमर्त्यैर्देवै "अमरानिर्जरादेवा—आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धस' इत्यमर । बहुष्वसख्यातेषु रत्नेषु लुप्तेषु अपहृतेषु सत्स्वप्यद्यापि साम्प्रतमपि सिन्धु समुद्र 'उदन्वानुदधि सिन्धु सरस्वान् सागरोऽर्णव' इत्यमर । रत्नाना मणीनामाकरो निधिरेव प्रसिद्ध । देवै प्रचुररत्नानि गृहीतानि तथापि समुद्रस्य रत्नाकरत्वप्रयुक्त माहात्म्य पूर्ववदेव । अत्र दृष्टान्तालङ्कार 'दृष्टान्तस्तु सधर्मस्य वस्तुन' प्रतिबिम्बनम्' ।

### भाषा

अथवा काव्यार्थ चोर काव्य रूपी द्रव्य की चोरी यथेच्छ करते रहे, इसमे श्रेष्ठ कवियो की कोई क्षति नही है। देवताओ ने समुद्र मे से बहुत से रत्न निकाल लिए तो भी समुद्र अभी भी रत्नाकर ही कहा जाता है।

सहस्रशः सन्तु विशारदानां वैदर्भलीलानिधयः प्रबन्धाः ।
तथापि वैचित्र्यरहस्यलुब्धाः श्रद्धां विधास्यन्ति सचेतसोऽत्र ।।१३।।

**अन्वय**

(यद्यपि) विशारदाना वैदर्भलीलानिधयः प्रबन्धाः सहस्रशः सन्तु । तथापि वैचित्र्यरहस्यलुब्धाः सचेतसः अत्र श्रद्धां विधास्यन्ति ।

**व्याख्या**

यद्यपि विशारदाना काव्यनिर्माणकलाप्रवीणाना महाकवीना वैदर्भी लीलेति वैदर्भलीला विदर्भदेशप्रसिद्धो दाक्षिणात्याना कविताविलासस्तस्य निधय आकर-भूता प्रबन्धा कृतयस्सहस्रशोऽगणितास्सन्तु नाम 'नामेति सम्भावनायाम्' । तथापि वैचित्र्य चमत्कारो ध्वन्यलङ्कारसन्निवेशजन्यस्तस्य रहस्ये मर्मणि लुब्धा लोलुपास्सचेतस काव्यानुभवानुकूलचेतसा सह वर्तमाना इति सचेतस सहृदया विद्वास अत्र विक्रमाङ्कदेवचरितनाम्नि काव्ये श्रद्धा सधा 'सधा प्रतिज्ञा मर्यादा श्रद्धा सप्रत्यय' स्पृहा' इत्यमर । विशेषप्रीतिमित्यर्थ । विधास्यन्ति करिष्यन्ति ।

**भाषा**

यद्यपि काव्यनिर्माणकला मे प्रवीण महाकवियो के विदर्भ देशीय दाक्षिणात्यो की वैदर्भीरीति के असख्य काव्य भले ही विद्यमान हो तो भी ध्वनि, अलङ्कार आदि के सन्निवेश से उत्पन्न होनेवाली विचित्रता के मर्म को समझकर मोहित होनेवाले सहृदय विद्वद्गण, इस विक्रमाङ्कदेवचरित नामक काव्यपर विशेष प्रेम करेगे ।

कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागरुधूपवासः ।।१४।।

**अन्वयः**

कवीनां गुणः साहित्यविद्याश्रमवर्जितेषु अनार्द्रेषु कुण्ठत्वम् आयाति । अङ्गनानाम् अनार्द्रेषु केशेषु कृष्णागरुधूपवासः कि कुर्यात् ।

### व्याख्या

कवीना काव्यरचयितॄणा गुण प्रकर्ष साहित्यविद्याया साहित्यविद्योपार्जने तदनुशीलने च य श्रमो निरन्तराभ्यासस्तेन वर्जितेषु रहितेष्वनार्द्रेष्वरसिकेषु प्राणिषु कुण्ठत्व स्वप्रभावराहित्यमायाति प्राप्नोति हृदयङ्गमो न भवतीत्यर्थ । सहृदया पण्डिता साहित्यविद्याया कृतभूरिश्रमा एव काव्यस्य यथार्थमाहात्म्य जानन्ति न तु मतिहीना अविद्वास इति भाव । अङ्गनाना कामिनीनामनार्द्रेषु तैलादि-स्निग्धपदार्थाननुलिप्तेषु केशेषु कचेषु कृष्णागरोश्चन्दनकाष्ठविशेषस्य कस्तूरी मिश्रितसुगन्धद्रव्यस्य वा धूपवास सुगन्ध (अग्नौ सुगन्धद्रव्य प्रक्षिप्य तद्धूमोपर्या-र्द्रकेशानामनार्द्रीकरण लोके प्रसिद्धम् ।) कि कुर्याद्विडम्बनायैवेत्यर्थ । न तस्य किञ्चिदुपयुक्त फलम् । अत्र दृष्टान्तालङ्कार ।

### भाषा

कवियो का गुण (वैशिष्ट्य) साहित्यविद्या का अभ्यास करने मे परिश्रम न करने वाले तथा नीरस मनुष्यो पर अपना प्रभाव नही डाल सकता । स्त्रियो के स्निग्धता रहित सूखे हुए केशो मे चन्दनविशेष या कस्तूरीमिश्रित सुगन्धित द्रव्यो का धूप क्या कर सकता है । अर्थात् सूखे हुए केशो को सुगन्धित धूप देने से उनमे सुगन्ध नही आ सकती ।

**प्रौ[१]ढिप्रकर्षेण पुराणरीति-व्यतिक्रमः श्लाघ्यतमः पदानाम् ।**
**अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि[२] ॥१५॥**

### अन्वयः

पदाना प्रौढिप्रकर्षेण पुराणरीतिव्यतिक्रमः श्लाघ्यतमः । अत्युन्नति-स्फोटितकञ्चुकानि कान्ताकुचमण्डलानि वन्द्यानि ।

---

[१] "अत्र 'प्रौढि' पद प्राचीनाऽलङ्कारिकस्वीकृतगुणविशेषमात्रपरमितिव्याख्या-तु नोचितम् । तादृशार्थकरणे सङ्कुचितार्थप्रत्यायकत्वेन कवेरभिप्राय स्फुटो न स्यात् । अत्र तु 'प्रौढि' शब्देन कविप्रतिभाविशेषरतन्मूलको ध्वन्यलङ्कारादि-सन्निवेशश्च विवक्षित इति ।"

[२] भावोऽयमत्रापि प्रदर्शित । अस्त्यप्रतिसमाधेय स्तनद्वन्द्वस्य दूषणम् । स्फुटता कञ्चुकाना यन्नायात्यावरणीयताम् ॥ (सर्ग–८ श्लोक ४५)

### व्याख्या

पदाना शब्दाना रसगुणालङ्कारादिप्रत्यायकत्वेन चमत्कारित्व प्रौढिस्तस्याः प्रकर्षेणोत्कटत्वेन पुराणी प्राचीना या रीतिरथवा पुराणाना कवीना या रीति· परिपाटी तस्या व्यतिक्रम परित्याग श्लाध्यतम प्रशस्यतमो भवति। अत्युन्नत्या स्फोटितानि दार्ढ्यातिशयात्त्रोटितानि विदारितानीत्यर्थ कञ्चुकानि कुचावरणाशुकानि यैस्तानि कान्ताना प्रेयसीना कुचमण्डलानि स्तनमण्डलानि वन्द्यानि स्तुत्यानि भवन्ति। अत्र दृष्टान्तालङ्कार ।

### भाषा

प्रौढि प्रकर्ष से अर्थात् रस गुण अलङ्कार आदि की विशिष्ट चमत्कृति के प्राबल्य से, प्राचीनकाल से प्रचलित अथवा प्राचीन कवियो द्वारा प्रयुक्त पद-विन्यास का यदि त्याग किया जाए तो वह प्रशसनीय है। अत्यन्त उच्चता तथा काठिन्य से चोली को फाड देने वाले रमणियो के स्तनमण्डल सराहना करने योग्य होते है।

**व्युत्पत्तिरावजितकोविदाऽपि न रञ्जनाय क्रमते जडानाम्।**
**न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टङ्किकायाः ॥१६॥**

### अन्वयः

आवर्जितकोविदा अपि व्युत्पत्तिः जडानां रञ्जनाय न क्रमते। मौक्तिकच्छिद्रकरी शलाका टङ्किकायाः कर्मणि न प्रगल्भते।

### व्याख्या

आवर्जिता आकृष्टा कोविदा पण्डिता 'विद्वान्विपश्चिद्दोषज्ञ सत्सुधी कोविदो बुध। धीरो मनीषी ज्ञ प्राज्ञ सख्यावान्पण्डित कवि'। इत्यमर। यया साऽऽवर्जितकोविदाऽपि पण्डितानामाकर्षिकाऽपि विशिष्टेत्यर्थ। व्युत्पत्तिर्नूतनकल्पना लौकिकरचनाकौशल जडाना मूर्खाणा रञ्जनाय प्रसादार्थं न क्रमते न समर्था भवति। मौक्तिकेषु मुक्तासु च्छिद्र रन्ध्र 'छिद्र निर्व्यथन रोक रन्ध्र श्वभ्र वपा सुषि·' इत्यमर। करोतीति रन्ध्रकरी शलाका सूची टङ्किकाया· पाषाणदारणलोहकीलस्य 'टङ्क पाषाणदारण' इत्यमरः। कर्मणि कठिनपाषाणविदारण कर्तुं न प्रगल्भते न समर्था भवति। अत्र दृष्टान्तालङ्कार ।

### भाषा

पण्डितो को भी आकर्षित करने वाली नवीन कल्पना या काव्यरचना की कुशलता मुर्खो को आनन्दित नही कर सकती। मोती मे छेद करने की सुई टाकी का काम नही कर सकती। अर्थात् सूक्ष्म बातो को कुशाग्रबुद्धि ही समझ सकता है। स्थूल बुद्धिवालो को उनसे कोई सुख नही मिलता।

**कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु।**
**न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ॥१७॥**

### अन्वयः

ये कवीनां कथासु लब्धरसाः ते कथान्तरेषु न अनुरज्यन्ति। ग्रन्थिपर्णप्रणयाः कस्तूरिकागन्धमृगाः तृणेषु न चरन्ति।

### व्याख्या

ये जना. कवीना क्रान्तदर्शिना कवीना कथासु रचनासु लब्ध प्राप्तो रस आनन्दो यैस्ते लब्धरसा अनुभूताल्हादास्ते कथान्तरेष्वन्यासु कुकविरचनासु नाऽनुरज्यन्ति नाऽनुरक्ता भवन्ति। ग्रन्थिपर्णोनाम सुगन्धिक्षुपविशेष 'ग्रन्थिपर्णं शुक बर्हपुष्प स्थौणेयकुक्कुरें' इत्यमर। 'गठिवन' 'भटोरा' इति भाषाया ख्यात। तस्मिन् प्रणय· स्नेहो येषा ते, कस्तूरिकाया गन्धो येषु ते मृगा हरिणा कस्तूरिमृगास्तृणेषु घासेषु 'शष्प बालतृण घास.' इत्यमर.। न चरन्ति न भक्षणप्रीतिं जनयन्ति। अत्र दृष्टान्तालङ्कार।

### भाषा

जो लोग अच्छे कवियो के काव्यो को पढकर आनन्द प्राप्त कर चुके है वे अन्य छोटे मोटे कवियो के काव्यो मे आनन्द नही प्राप्त कर सकते। गठिवन नाम के सुगन्धित पौधे को खाने के प्रेमी कस्तूरिमृग अन्य घासपात नही चरते।

**जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः।**
**प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नांकुरज्योतिषि किं करोति ॥१८॥**

### अन्वयः

जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु वराकाः के। प्राप्ताग्निनिर्वापणगर्वम् अम्बु रत्नाङ्कुरज्योतिषि कि करोति।

## व्याख्या

जडेषु ज्ञानरहितेषु मूर्खेषु जातस्समुत्पन्न प्रतिभाया बुद्धिप्रागल्भस्याऽभिमानोऽहङ्कारो येषु ते सञ्जातवैदुष्याहङ्कारा खला नीचा कवय कवीन्द्राणा महाकवीनामुक्तिषु प्रतिस्पर्द्धिनीषु रचनासु वराका के गणनारहिता अकिञ्चित्कराश्चेत्यर्थ । सभासु प्रवर्तमानासु ते पराजिता एव भवन्तीति भाव । तेषा कवीन्द्राणा यथार्थतत्व महत्वञ्च ते न जानन्तीति दिक् । प्राप्तो लब्धोऽग्निनिर्वापणस्य वन्हिप्रशामकत्वस्य गर्वो दर्पो 'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नति । दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेक स्मयो मद' इत्यमर । येन तदम्बु जल रत्नस्य मणेरङ्कुर इव ज्योति प्रकाशस्तस्मिन् कि करोति न किमपीत्यर्थ॰ । जल वन्हिनिर्वापणे क्षममपि रत्नतेजसो निवारणाय नाऽलमिति । बुद्धिस्तात्कालिकीज्ञेया मतिरागामिगोचरा । प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा विदु.' । अत्र दृष्टान्तालङ्कार । किं करोति न किमपि कर्तुं शक्नोतीत्यर्थाक्षेपादर्थापत्तिरलङ्कारश्च ।

## भाषा

मूर्खमण्डली मे जिन खलो को नई नई उपज वाली बुद्धि से युक्त होने का गर्व हो गया है उन बिचारे मूर्ख कवियो की श्रेष्ठकवियो की कविताओ को समझने मे या उनसे अपनी कविताओ की तुलना करने मे कौन गिनती है । अर्थात् प्रसङ्ग आने पर अच्छे कवियो के सन्मुख उन्हे हार माननी पडती है । आग को बुझा देने का अभिमान रखने वाला जल, रत्न के अङ्कुर के समान तेज (किरणो) का क्या बिगाड सकता है । अर्थात् रत्न पर कितना ही पानी पडे तो भी उसकी चमक दूर नही हो सकती, वैसे ही मूर्खों की प्रतिभा से श्रेष्ठ कवियो की प्रतिभा दब नही सकती ।

**उल्लेखलीला-घटनापटूनां सचेतसां वैकटिकोपमानाम् ।**
**विचारशाणोपलपट्टिकासु मत्सूक्तिरत्नान्यतिथीभवन्तु ॥१६॥**

## अन्वय

मत्सूक्तिरत्नाति उल्लेखलीला-घटनापटूनां वैकटिकोपमानां सचेतसां विचारशाणोपलपट्टिकासु अतिथीभवन्तु ।

### व्याख्या

मम सूक्तय कविता एव रत्नानि मत्सूक्तिरत्नान्युल्लेखस्य कवितालेखनस्य वैकटिकपक्षे रत्नोत्कर्षणस्य या लीला वैशिष्ट्य तस्या घटनाया सम्पादने पटूना चतुराणा वैकटिकानामुपमा सादृश्य येषु तेषा रत्नपरीक्षकतुल्याना सचेतसा सहृदयाना महाकवीना विचारा एव शाणोपला रत्नशुद्धिपरिचायकपाषाण विशेषा "शाणस्तु निकष कष" इत्यमर । तेषा पट्टिकास्वतिथीभवन्तु । अतिथि-रूपेणैकत्रीभवन्तु । शाणोपलपट्टिकासूल्लिखनेन रत्नकान्तिपरीक्षणदक्षाणा वैकटिकानामिवोत्तमकाव्यकरणे विचारणे च कुशलाना महाकवीना विचारार्थ-मस्मत्काव्य भवत्विति भाव । वैकटिकेन सहृदयस्य सादृश्यप्रतीत्योपमा । विचारेषु शाणोपलपट्टिकारोपाद्रूपकञ्च ।

### भाषा

सान पर चढाकर रत्नो की परीक्षा करने मे कुशल जौहरी लोगो के समान, उत्तम काव्य बनाने मे कुशल सहृदय काव्यज्ञो की विचार रूपी सान पर परीक्षार्थ मेरे श्लोक या काव्य उपस्थित हो। अर्थात् मेरे काव्य की उच्चकोटि के सहृदय कविलोग परीक्षा कर देखे कि मेरा काव्य कैसा है ।

**न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः ।**
**द्वेष्यैव केषामपि चन्द्रखण्ड-विपाण्डुरा पुण्ड्रकशर्कराऽपि ॥२०॥**

### अन्वय

दुर्जनानाम् इह कः अपि दोषः न । हि तेषां स्वभावः गुणासहिष्णुः । केषाम् अपि चन्द्रखण्ड-विपाण्डुरा पुण्ड्रकशर्करा द्वेष्या एव ।

### व्याख्या

दुर्जनाना खलानामिहाऽस्मिन्परेषा निन्दाकरणे कोऽपि दोषो नाऽस्ति । हि यस्मात्कारणात्तेषा खलाना स्वभाव प्रकृतिरेव गुणाना सद्गुणानामसहिष्णुरसहन-शीलो मात्सर्ययुक्त इत्यर्थ । केषामपि केषाञ्चिज्जनाना चन्द्रखण्ड इव कर्पूर-खण्ड इव विपाण्डुरा शुभ्रा पुण्ड्रकाणा बृहदिक्षूणा शर्करा बृहदिक्षुनिर्मितशर्करा प्रकृत्यैव सुमधुराऽपि द्वेष्यैवाऽरुचिकारिण्येव भवति । 'पित्तेन दूने रसने सिताऽपि तिक्तायते हसकुलावतस ।' इति श्रीहर्ष । अत्र दृष्टान्तालङ्कार ।

**भाषा**

दुर्जनो मे दुसरो की निन्दा करना यह दोप नही कहा जा सकता। क्यो कि दूसरो के अच्छे गुणो की निन्दा करना उनका स्वभाव ही होता है। कुछ लोग ऐसे भी है जिनको कपूर की डली के ऐसी पौढे से बनी सफेद चीनी भी अच्छी नही लगती।

**सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।**
**न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥२१॥**

**अन्वयः**

कविताविलासाः कुङ्कुमकेसरणा नून सहोदराः भवन्ति। यत् मया तेपा प्ररोहः शारदादेशम् अपास्य अन्यत्र न दृष्टः।

**व्याख्या**

कवितायाः सत्कवितायाः विलासा विभ्रमा कुङकुमस्याऽग्निशिखस्य 'अथ कुङकुमम्। कश्मीरजन्माग्निशिख वर वाह्लीकपीतने' इत्यमर। केसरा किञ्जल्का 'किञ्जल्क केसरोऽस्त्रियाम्' इत्यमर। तेषा नून निश्चयेन सहोदरा एकदेशजन्यत्वाद्भ्रातरो भवन्ति सन्ति। यद्यस्मात्कारणान्मया कविना बिल्हणेन तेषा कविताविलासाना कुङकुमकेसराणाञ्च प्ररोहोऽङकुर उद्गम इत्यर्थ। शारदाया सरस्वत्या आदेश प्रसाद पक्षे शारदाया सरस्वत्या देश कश्मीरमपास्य विहायाऽन्यत्राऽन्यस्मिन् पुरुषे शारदाप्रसाद रहित इत्यर्थ पक्षेऽन्यस्मिन् देशे न दृष्टो नाऽवलोकित। शारदाप्रसाद विना न कविताविलासोद्गम। कश्मीरदेश विहाय नान्यत्र कुङकुमकेसरोद्गम इति भाव।

**भाषा**

उत्तम कविता के विलास और केसर दोनो निश्चय ही सगे भाई है। शारदा के आदेश बिना अर्थात् सरस्वती की कृपा बिना अच्छी कविता की उत्पत्ति और शारदा देश बिना अर्थात् कश्मीर बिना केसर की उत्पत्ति, अन्यत्र होती हुई मैन नही देखी है।

**रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्तिरहस्यमुद्राः।**
**तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥२२॥**

**अन्वयः**

सक्रान्तवक्रोक्तिरहस्यमुद्राः ये रसध्वनेः अध्वनि चरन्ति ते अस्मत्प्रबन्धान् अवधारयन्तु । शेषाः शुकवाक्यपाठं कुर्वन्तु ।

**व्याख्या**

सक्रान्ता सङ्गता वक्रोक्तीना विचित्रोक्तीना रहस्यस्य तत्वस्य मुद्राऽभिनिवेशो येषु ते, ये सहृदया रसध्वनेरध्वनि मार्गे चरन्ति विहरन्ति, वक्रोक्ति रहस्यज्ञातारो रसध्वनिमार्गाच्च ये न बहिर्भूता इत्यर्थ । तेऽस्मत्प्रबन्धानस्मद्विरचितकाव्यान्यवधारयन्तु मदीयकाव्यस्य यथार्थज्ञाने समर्था भवन्तु । अन्ये तदितरे शुकवत्तदर्थज्ञानमन्तरैव वाक्यपाठ शब्दोच्चारणमेव कुर्वन्तु । काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यमस्मत्काव्यतत्वमिति भाव. ।

**भाषा**

जो विचित्र उक्तियो के सम्पूर्ण रहस्यो को अच्छी तरह जानने वाले है और रसध्वनि के मार्ग का अवलम्बन करने वाले है वे विद्वान् कविलोग मेरे काव्य को समझे । इनसे अतिरिक्त अन्य कवि सुग्गे के ऐसे (बिना अर्थ रहस्य समझे) इस काव्य का केवल पाठ किया करे ।

**अनन्यसामान्यगुणत्वमेव भवत्यनर्थाय महाकवीनाम् ।**
**ज्ञातुं यदेषां सुलभाः सभासु न जल्पमल्पप्रतिभाः क्षमन्ते ॥२३॥**

**अन्वयः**

महाकवीनाम् अनन्यसामान्यगुणत्वम् एव अनर्थाय भवति यत् सभासु सुलभाः अल्पप्रतिभाः एषा जल्पं ज्ञातुं न क्षमन्ते ।

**व्याख्या**

महाकवीना कविश्रेष्ठानामन्येषु यत्सामान्यं साधारणत्व सकलजनवृत्तित्व तदन्यसामान्य नास्त्यन्यसामान्यमनन्यसामान्य-मनन्यसामान्यञ्चतद्गुणत्वञ्चेत्यनन्यसामान्यगुणत्व विशेषगुणवत्त्वमेवाऽनर्थायाऽनिष्टोत्पत्त्यर्थं भवति जायते । इष्ट तु महाकवीनामाशयज्ञान तत आनन्दानुभूति सा तु साधारणबुद्धिमता न भवतीत्येवाऽनर्थ । यद्यस्मात्कारणात्सभासु सर्वसभासु सुलभा, सुखेन लभ्या स्वोद्योगेनैवाऽऽनन्दार्थमेकत्रीभूता इत्यर्थः । विशिष्टजनोपस्थितिः सभास्वनाया-

सेनैव सर्वत्र न भवति यतस्ते मानिन अनाहूता यत्र तत्र न गच्छन्तीति । अल्पप्रतिभा मन्दमतयो जना एषा महाकवीना जल्प सारगर्भं वचो ज्ञातु बोद्धुं न क्षमन्ते न समर्था भवन्ति । सकलमन्दजनाज्ञेयत्व महाकविकृतीनामित्येव तेषा महाकवीना महान्दोष । अत्र व्याजस्तुतिरलङ्कार. 'व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।'

### भाषा

महाकवियो का विशिष्टगुण ही उनके लिए अनिष्टकारक हो जाता है । क्यो कि सभाओ मे सुलभता से प्राप्त हो सकने वाले छोटी बुद्धि के कवि, इन महाकवियो की उक्तियो का अर्थ भी समझने मे असमर्थ होते है ।

**अलौकिकोल्लेखसमर्पणेन विदग्धचेतः—कषपट्टिकासु ।**
**परीक्षितं काव्यसुवर्णमेत—ल्लोकस्य कण्ठाभरणत्वमेतु ॥२४॥**

### अन्वयः

विदग्धचेतःकषपट्टिकासु अलौकिकोल्लेखसमर्पणेन परीक्षितम् एतत् काव्यसुवर्ण लोकस्य कण्ठाभरणत्वम् एतु ।

### व्याख्या

कषाणा निकषोपलाना 'शाणस्तु निकष कष' इत्यमर । पट्टिका कषपट्टिका विदग्धाना पण्डिताना चेतास्येव कषपट्टिकास्तासु विदग्धचेत कषपट्टिकास्वलौकिका लोकोत्तरा य उल्लेखाश्चमत्कृतकृतय पक्षे श्रेष्ठतासूचयित्र्य सुवर्णरेखास्तेषा समर्पणेन प्रदानेन परीक्षित निर्धारितमेतत्काव्यरूपसुवर्णं (सुन्दरवर्णयुक्तकाञ्चन शोभनाक्षरसमेत काव्यञ्च) लोकस्य सर्वजनस्य कण्ठाभरणत्व कण्ठभूषणत्वमेतु प्राप्नोतु । यथा कषपट्टिकाया सुपरीक्षित शुद्धमुत्तम स्वर्णं जनस्य कण्ठस्थ सदलङ्कारत्व प्राप्नोति तथैव विद्वच्चेत सु परीक्षित-मिदकाव्य जनस्य कण्ठस्थ सद् भूषण भवत्विति भाव. । काव्ये सुवर्णाभेदारोपस्य विदग्धचेत सु कषपट्टिकारोपे कारणत्वात्परम्परितरूपकम् । 'यत्र कस्यचिदारोप' परारोपणकारणम् । तत्परम्परितम् ।'

### भाषा

विद्वानो की चित्त रूपी कसौटी पर (कसे जान पर) असाधारण सदुक्ति रूपी अच्छे कस के आने से जाचा हुआ यह काव्य रूपी सुवर्ण (सोना या

सुन्दराक्षर युक्त काव्य) मनुष्यो के कण्ठ का आभूषण बने। अर्थात् जिस प्रकार जचे हुए शुद्ध सोने का बना गोफ (गले का आभूषण) गले की शोभा बढाता है वैसे ही विद्वानो द्वारा परीक्षित यह मेरा उत्तम काव्य साधारण लोगो द्वारा कण्ठस्थ किया जाकर उनकी कण्ठ की शोभा को बढावे।

**किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण।**
**किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥२५॥**

**अन्वयः**

चारुचारित्रविलासशून्याः भूपाः कविसंग्रहेण किं कुर्वन्ति। गुञ्जाफल-भूषणाना वनेचराणा सुवर्णकारेण जातु किम्।

**व्याख्या**

चारु सुन्दर सत्काव्यपरिचयेन सहृदयहृदयसवादि चारित्र चरित तस्य विलास उत्कर्षस्तेन शून्या रहिता काव्यमहत्वासवेदिनो दुश्चरिता भूपा राजान· कवीना सग्रहेणाऽऽश्रयप्रदानेनाऽऽश्रय प्रदाय स्वराजसभाया स्थापनेनेत्यर्थ कि कुर्वन्ति न किमपीत्यर्थ। दुश्चरिताना राज्ञा कवि सग्रहेण न कोऽपि लाभ। ये कविमहत्वमेव न विदन्ति तेषा कृते कवयो निष्प्रयोजनका इति भाव। गुञ्जाफल कृष्णलाफल 'कार्काचची गुजे तु कृष्णला' इत्यमर। एव भूषणमलङ्कारो येषा तेषा वनेचराणामारण्यकाना। सुवर्णकारेण स्वर्णभूषणनिर्माणकेन जातु कदाचिदपि कि, कि प्रयोजन, न किमपीत्यर्थ। सुवर्णकारा सुवर्णस्य भूषणानि निर्मान्ति तानि तु वनेचरा न समाद्रियन्ते यतस्तेषा कृते गुञ्जैव महद्भूषणमिति सुवर्णकारास्तेषा कृते निष्प्रयोजनकास्तथैव कवय सुचरित्रमेव राजान भजन्ते न दुश्चरितम्। दुश्चरिताना राज्ञा कृते ते कवयो निष्प्रयोजनका इति भाव। अत्र दृष्टान्तालङ्कार·।

**भाषा**

जो राजा असच्चरित्र है वे अपने दरबार मे कवियो का सग्रह कर क्या करेगे। गुज के गहनो को पहनने वाले जगली लोगो को सोने के आभूषणो को बनाने मे कुशल सोनारो का क्या काम पड सकता है अर्थात् जिस प्रकार गुज के गहने पहनने वालो के लिये सोनार किसी काम का नही उसी प्रकार कुचरित्र राजा के लिये कवि भी किसी काम का नही। क्योकि कवि सुचरित्र

राजा के यहाँ रह कर ही अपने काव्यो से उसका गुणगान कर उसकी यश पताका फहराता है ।

**पृथ्वीपतेः सन्ति न यस्य पार्श्वे**
**कवीश्वरास्तस्य कुतो यशांसि ।**
**भूपाः कियन्तो न बभूवुरुर्व्या जानाति**
**नामाऽपि न कोऽपि तेषाम्[१] ॥२६॥**

**अन्वयः**

यस्य पृथ्वीपतेः पार्श्वे कवीश्वराः न सन्ति तस्य यशांसि कुतः । उर्व्यां कियन्तः भूपाः न बभूवुः तेषा नाम अपि कः अपि न जानाति ।

**व्याख्या**

यस्य पृथ्वीपते राज्ञ पार्श्वे कवीश्वरा कवीन्द्रा न सन्ति न शोभन्ते तस्य भूपस्य यशासि कीर्तय 'यश कीर्ति समज्ञा च स्तवस्तोत्र स्तुतिर्नुति' इत्यमर. । कुतो, न कुतोऽपीत्यर्थ । यशस प्रख्यापकानामभावात्कुतो यश·प्रतिष्ठेतिभाव· । उर्व्यां महीमण्डले कियन्त कतिसख्याका भूपा राजानो न बभूवुर्न जाता (पर) तेषा नामाऽपि सज्ञामपि कोऽपि मनुष्यो न जानाति । काव्यैकनिबद्धमेव राज्ञा यशश्चिरस्थायि भवतीति राज्ञा यशसोऽपयशसो वा कवीश्वरा एव निदानमिति भाव ।

**भाषा**

जिस राजा के पास मे (दरबार मे) अच्छे कवि नही है उसका यश कहाँ से फैल सकता है । इस पृथ्वी पर क्या कितने ही राजा ऐसे नही हुए है जिनका नाम भी कोई मनुष्य नही जानता है ।

---

[१] भावोऽयमत्राऽपि प्रदर्शित ।
भुजवनतरुच्छाया येषा निषेव्य महौजसा,
जलधिरशना मेदिन्यासीदसावकुतोभया ।
स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रह,
प्रकृतिमहते कुर्मस्तस्मै नम कविकर्मणे ॥ राजतरङ्गिण्याम् ।

**लङ्कापतेः सङ्कुचितं यशो यद् यत्कीर्तिपात्रं रघुराजपुत्रः ।**
**स सर्व एवाऽऽदिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥२७॥**

### अन्वयः

यत् लङ्कापतेः यशः सङ्कुचित यत् रघुराजपुत्रः कीर्तिपात्रं, सः सर्वः एव आदिकवेः प्रभावः, क्षितीन्द्रैः कवयः न कोपनीयाः ।

### व्याख्या

यल्लङ्कापते रावणस्य यश कीर्ति 'यश कीर्ति समज्ञा च स्तव स्तोत्र स्तुतिर्नुति' इत्यमर'। सङ्कुचितमविस्तृत नष्टमित्यर्थ । यद्रघुराजस्य दशरथस्य पुत्रो राम कीर्तिपात्र यशोभाजन जात स सर्व एवाऽऽदिकवेर्वाल्मीके प्रभाव' कौशल कार्यमित्यर्थ । अत क्षितीन्द्रै राजभि कवयो न कोपनीया न क्रोधनीया. नापमाननीया इतिभाव । यदिति वाक्यार्थपरामर्शक ।

### भाषा

रावण की कीर्ति जो न फैल सकी अर्थात् नष्ट हो गई और दशरथ जी के पुत्र राम जी, जो कीर्ति के पात्र हुए, यह सब आदि कवि बाल्मीकि का ही प्रताप है। इसलिए राजाओ को कभी भी कवियो को कुपित न करना चाहिये।

**गिरां प्रवृत्तिर्मम नीरसाऽपि मान्या भवित्री नृपतेश्चरित्रैः ।**
**के वा न शुष्कां मृदमभ्रसिन्धु-सम्बन्धिनीं मूर्द्धनि धारयन्ति ॥२८॥**

### अन्वयः

मम नीरसा अपि गिरां प्रवृत्तिः नृपतेः चरित्रैः मान्या भवित्री । के वा शुष्काम् अभ्रसिन्धुसम्बन्धिनी मृदं मूर्द्धनि न धारयन्ति ।

### व्याख्या

मम मदीया नीरसाऽपि रसरहिताऽपि गिरा वाचा प्रवृत्ति प्रवर्तन व्यापारो वा नृपते राज्ञो विक्रमाङ्कदेवस्य चरित्रैश्चरितैर्हेतुभिर्मान्या पूज्या भवित्री भाविनी । प्रकृत्या चारु राज्ञश्चरितमत्र वर्णितमिति हेतोरिद काव्य विदुषा रसनीयत्वमुपयास्यत्वेवेति भाव । के वा मनुष्या. शुष्का रसरहितामभ्रसिन्धोर्जान्हव्या. सम्बन्धिनी तटगता मृद मृत्तिका मूर्द्धनि शिरसि न धारयन्ति नाऽवतसयन्ति ।

गङ्गासम्बन्धादेव मृदोऽप्यभ्यर्हितत्व न तु स्वत । अत्र दृष्टान्तालङ्कार । अन्यसम्बन्धेन श्लाघ्यत्वकथनादुदात्तालङ्कारश्च । 'लोकातिशय-सम्पत्तिवर्णनोदात्तमुच्यते । यद्वापि प्रस्तुतस्याङ्ग महता चरित भवेत्' ।

### भाषा

मेरी नीरस वाणी का भी व्यापार (यह काव्य) राजा विक्रमाङ्कदेव के चरितो के कारण आदरणीय होगा । कौन मनुष्य गङ्गा की नीरस मिट्टी (सूखी मिट्टी) को अपने मस्तक पर धारण नही करते अर्थात् नही लगाते । अर्थात् गङ्गा का सम्बन्ध होने से सूखी मिट्टी भी जैसे आदरणीय होती है वैसे ही महाराज विक्रमाङ्कदेव का सन्बन्ध होने से मेरा नीरस काव्य भी आदरणीय होगा ।

**कर्णामृतं सूक्तिरसं विमुच्य दोषे प्रयत्नः सुमहान्खलानाम् ।**
**निरीक्षते केलिवनं प्रविश्य क्रमेलकः कण्टक-जालमेव ॥२९॥**

### अन्वयः

खलानां कर्णामृत सूक्तिरसं विमुच्य दोषे सुमहान् प्रयत्नः । क्रमेलकः केलिवनं प्रविश्य कण्टकजालम् एव निरीक्षते ।

### व्याख्या

खलाना पिशुनाना 'पिशुनो दुर्जन खल' इत्यमर । कर्णयोरमृत श्रुतिरसायन सूक्तिरस सुभाषितानन्द विमुच्य परित्यज्य दोषे दोषान्वेषणे (एव) सुमहान्विशेष प्रयत्न प्रयासो भवति । क्रमेलक उष्ट्र केलिवन क्रीडोद्यान प्रविश्य गत्वा कण्टकाना कण्टकीवृक्षाणा जाल समूहमेव निरीक्षते पश्यत्यन्विष्यतीत्यर्थ । तेषा कृते कण्टकीवृक्षाणामेव प्रियत्व न तु सुगन्धिपुष्पादिभिरुद्यानरमणीयताया इति भाव । अत्र दृष्टान्तालङ्कार ।

### भाषा

खललोग कान को अमृत के समान सुख देने वाले अच्छे सुभाषितो के रस का आस्वादन छोडकर उनमे दोष देखने मे ही अत्यन्त प्रयत्न शील रहते है । सुन्दर बाग में जाकर उसकी पुष्पवृक्ष आदि की शोभा से आनन्द न प्राप्तकर ऊट, काँटे की झाडियो की ही खोज मे रहता है । अर्थात् ऊँट को जिस प्रकार अच्छे बाग मे जाकर भी काँटे की झाडी ही प्रिय मालुम होती है वैसे खलो को

**भाषा**

किसी एक कमल के, आसन बनकर अत्यधिक सेवा करने से प्रसन्न होकर ब्रह्मा ने सम्पूर्ण कमल जाति को ही लक्ष्मी का निवास स्थान बना दिया, ऐसा मैं सोचता हूँ ।

**ब्रह्मर्षिभिर्ब्रह्ममयीममुष्य सार्द्ध कथां वर्धयतः कदाचित् ।**
**त्रैलोक्यबन्धोः सुरसिन्धुतीरे प्रत्यूषसन्ध्यासमयो बभूव ॥३३॥**

**अन्वयः**

कदाचित् सुरसिन्धुतीरे ब्रह्मर्षिभिः सार्द्ध ब्रह्ममयीं कथां वर्धयतः त्रैलोक्यबन्धोः अमुष्य प्रत्यूषसन्ध्यासमयः बभूव ।

**व्याख्या**

कदाचित्कस्मिश्चित्समये सुरसिन्धो स्वर्गङ्गायास्तीरे तटे ब्रह्मर्षिभि श्रेष्ठ-मुनिभिस्सार्द्धं सह ब्रह्ममयी परब्रह्मविषयिणी कथा वार्ता वर्धयतो विकास नयतस्त्रैलोक्यस्य बन्धुर्मित्र तस्य त्रैलोक्यहितकारकस्याऽमुष्य ब्रह्मण प्रत्यूषस्य प्रात कालस्य 'प्रत्यूषोऽहर्मुख कल्यमुष प्रत्युषसी अपि' इत्यमर । सन्ध्याया सन्ध्यावन्दनादेस्समय कालो बभूव जात । कथारसे मग्नाना तेषा समयज्ञाना-भावात्प्रात कालसन्ध्यावन्दनावसर सम्प्राप्त इति भाव ।

**भाषा**

किसी समय आकाशगङ्गा के किनारे ब्रह्मर्षियो के साथ परब्रह्मसम्बन्धि कथा का विस्तार करते करते तीनो लोको के मित्र अर्थात् हित चाहने वाले ब्रह्मा जी का प्रात काल का सन्ध्यावन्दन करने का समय उपस्थित हो गया । अर्थात् परब्रह्म की चर्चा मे इतने लीन हो गये थे कि बाते करते करते सब रात बीत गई ।

**मृणालसूत्रं निजवल्लभायाः समुत्सुकश्चाड्षु चक्रवाकः ।**
**अन्योन्यविश्लेषणयन्त्रसूत्र-भ्रान्त्येव चञ्चुस्थितमाचकर्ष ॥३४॥**

**अन्वय**

निजवल्लभायाः चाटुषु समुत्सुकः चक्रवाकः अन्योन्यविश्लेषणयन्त्रसूत्र-भ्रान्त्या इव चञ्चुस्थितं मृणालसूत्रम् आचकर्ष ।

### व्याख्या

(प्रत्यूषे) निजवल्लभाया. स्वप्रियायाश्चाटुषु चाटुकरणेषु प्रेमालापादिव्यवहारेषु समुत्सुक समुत्कण्ठितश्चक्रवाक कोक 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वय नामक, इत्यमर । अन्योन्यस्य परस्परस्य यद्विश्लेषणं वियोगस्तस्य यन्त्रसूत्र तद्घटकयन्त्रस्य सूत्र तस्य भ्रान्त्या भ्रमेण इव परस्पररात्रिवियोगकारकयन्त्रसूत्रभ्रमादिव चञ्चुस्थित स्वप्रियायास्त्रोटिस्थित 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमर । मृणालसूत्र बिसतन्तुमाचकर्षाऽऽकृष्टवान् । रात्रौ चक्रवाक मिथुनस्य वियोगो जायत इति कविप्रसिद्धि । प्रत्यूषे जाते चक्रवाकस्य स्वप्रियया सह सयोगो जात । स्वप्रियाचञ्चुस्थित वार्तालापबाधक मृणालतन्तु निरीक्ष्यैतदेवाऽस्मद्रात्रिवियोगकारणमिति भ्रमादत परमपि सूत्रेणाऽनेन वियोगो न कृत स्यादिति धिया तदाचकर्षेतिभाव । चक्रवाककर्तृकचञ्चुस्थितमृणालसूत्राकर्षणे मृणालसूत्रेऽन्योन्यविश्लेषणयन्त्रसूत्रस्य भ्रान्तेर्हेतुत्वेन सम्भावनप्रतिपादनादुत्प्रेक्षालङ्कार ।

### भाषा

(प्रात काल हो जाने पर, रातभरके वियोग के अनन्तर सयोग होने से) अपनी स्त्री चकई से उत्सुकता से रस भरी मीठी मीठी बाते कहने और सुनने की अभिलाषा से, चकई की चोच मे विद्यमान कमल के डण्डे के डोरे को मानो परस्पर वियोग कराने वाले किसी यन्त्र विशेष का यह सूत्र है ऐसे भ्रम से, चकवे ने खीच लिया। (चकवा चकई का रातभर वियोग रहता है ऐसी कविप्रसिद्धि है।)

**आरक्तमर्घ्यार्पणतत्पराणां सिद्धाङ्गनानामिव कुङ्कुमेन ।**
**बिम्बं दधे बिम्बफलप्रतिष्ठां राजीविनीजीवितवल्लभस्य ॥३५॥**

### अन्वयः

अर्घ्यार्पणतत्पराणा सिद्धाङ्गनानां कुङ्कुमेन इव आरक्तं राजीविनीजीवितवल्लभस्य बिम्बं बिम्बफलप्रतिष्ठां दधे ।

### व्याख्या

अर्घ्यस्य पूजोपचारमिश्रितजलस्य 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्य पादाय वारिणि' इत्यादिरमर. । अर्पणे प्रदाने तत्पराणा लग्नाना सिद्धाङ्गनाना देवयो-

निविशेषवनितानां कुङ्कुमेनेवाऽग्निशिखेनेव कुङ्कुममिश्रितजलरूपार्घ्यस्य रक्तकान्त्येवाऽऽरक्तमासमन्ताद्रक्तवर्णं राजीविन्या कमलिन्या जीवितं जीवनं तस्य वल्लभः स्वामी तस्य सूर्यस्य बिम्बं मण्डलं 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । बिम्बफलस्य कुन्द्रू इति लोके प्रसिद्धस्य रक्तवर्णशाकफलस्य प्रतिष्ठा सवर्णत्वात्सारूप्यं दधे दधार । कुङ्कुमसयुक्ताम्बुरूपार्घ्यस्य सूर्यबिम्बे प्राप्त्याऽर्घ्यस्य रक्तत्वात्सूर्य-बिम्बस्याऽपि रक्तत्वं जातमिति भावः । प्रातः-कालिकसूर्यबिम्बस्य बिम्बफलस्य च सादृश्यदर्शनादुपमा । सूर्यबिम्बस्य रक्तत्वे कुङ्कुमस्य कारणत्वेन सम्भावनाद्धेतूत्प्रेक्षा ।

## भाषा

अर्घ्य देने मे तत्पर सिद्धाङ्गनाओ के अर्घ्य के केसर से मानो लाल भया हुआ कमलिनी के जीवन के स्वामी सूर्य का मण्डल (पके हुए) कुन्द्रू के समान लाल दिखाई देने लगा ।

**सुधाकरं वार्धकतः क्षपायाः संप्रेक्ष्य मूर्द्धानमिवानमन्तम् ।**
**तद्विप्लवायेव सरोजिनीनां स्मितोन्मुखं पङ्कजवक्त्रमासीत् ॥३६॥**

## अन्वयः

क्षपायाः वार्धकतः आनमन्तं मूर्द्धानम् इव सुधाकरं सम्प्रेक्ष्य सरोजिनीनां पङ्कजवक्त्रं तद्विप्लवाय इव स्मितोन्मुखम् आसीत् ।

## व्याख्या

क्षपाया रजन्या वृद्धस्य भावो वार्द्धकं तस्माद्वार्धकतो रजन्या गतप्रायत्वाद्वृद्धावस्थात आनमन्तमधोगच्छन्तं (अस्तोन्मुखत्वात्) मूर्द्धानमिव शिर इव सुधाकरं चन्द्रं सम्प्रेक्ष्य दृष्ट्वा सरोजिनीनां कमलिनीनां पङ्कजमेव वक्त्रं मुखं, तस्य चन्द्रस्य सरोजिनीरिपुत्वात् तस्याः क्षपायाश्च रिपुस्त्रीत्वात् विप्लवायेव विडम्बनाया इव स्मितोन्मुखमीषद्धास्ययुक्तं विकासयुक्तं वाऽऽसीद्बभूव । यथा काचिन्नायिका स्वरिपुमस्तोन्मुखं स्वरिपुस्त्रियश्च वृद्धावस्थाप्रयुक्तां नमदाननत्वादिदुरवस्थां वीक्ष्य सुखमनुभवन्ती तद्विडम्बनाय स्मेरानना भवति तथैवैषा कमलिनी गतप्रायां रात्रिं अस्तोन्मुखं चन्द्रञ्च वीक्ष्य विकसिताभूदिति भावः । कमलिनी रात्रौ न विकसतीति प्रसिद्धम् । अत्राऽप्रस्तुत-व्यवहारस्य कमलिनीव्यवहारे समारोपात्समासोक्त्यलङ्कारः । चन्द्रे च वार्धक्यप्रयुक्तनम्रीभूतरात्रिरूपनायिकाशीर्षस्योत्प्रेक्षणाद्वस्तूत्प्रेक्षा । पङ्कजे वक्त्रत्वाभेदाद्रूपकम् । अतः उत्प्रेक्षारूपकमूला समासोक्तिः । इति त्रयाणामङ्गाङ्गीभावसङ्करः ।

**भाषा**

वृद्धावस्था के कारण रात्रि रूपी कामिनी के चन्द्ररूपी मस्तक को लटका हुआ देखकर चन्द्र के अस्तोन्मुख होने से और उसकी (रात्रि की) वृद्धावस्था की बुरी हालत से प्रसन्न होकर कमलिनी मानो उसे चिढाने के लिये मुस्कुराने लगी। अर्थात् रात समाप्त होने से और चन्द्रमा के अस्तोन्मुख होने के कारण नीचे लटक जाने से कमलिनी धीरे २ खिलने लगी। कमलिनी रात को नही खिलती यह बात प्रसिद्ध है।

**ज्ञात्वा विधातुश्चुलुकात्प्रसूतिं तेजस्विनोऽन्यस्य समस्तजेतुः।**
**प्राणेश्वरः पङ्कजिनीवधूनां पूर्वाचलं दुर्गमिवारुरोह ॥३७॥**

**अन्वयः**

पङ्कजिनीवधूना प्राणेश्वरः विधातुः चुलुकात् समस्तजेतुः अन्यस्य तेजस्विनः प्रसूति ज्ञात्वा इव दुर्गं पूर्वाचलम् आरुरोह।

**व्याख्या**

पङ्कजिन्यो नलिन्यस्ता एव वध्वस्तासा प्राणेश्वरो जीवितेश्वरस्सूर्यो विधातुर्ब्रह्मणश्चुलुकाज्जलपूरिताञ्जले' समस्तस्य राजवर्गस्य जेतुर्जयशीलस्याऽन्यस्य कस्यचित्तेजस्विन प्रतापिनश्चालुक्यवशमूलपुरुषस्य प्रसूतिमुत्पत्ति ज्ञात्वेव विज्ञायेव सकलजेतुरन्यतेजस्विनो भयादात्मरक्षार्थं दुर्गं दुष्प्राप्यस्थान दुर्गरूप वा पूर्वाचलमुदयाचलमारुरोह गतवानिति। सूर्योदयो जात इति भाव। अत्र पद्मिन्या वधूतादात्म्यारोप सूर्ये प्राणेश्वरस्याऽभेदारोपे कारणत्वात्परम्परित रूपकम्। पूर्वाचले दुर्गाभेदाद्रूपकम्। सूर्यस्य दुर्गारोह अन्यतेजस्विन उत्पत्तिज्ञानस्य कारणत्वेनोत्प्रेक्षणादुत्प्रेक्षा। सूर्यवृत्तान्ते तादृशाप्रकृतान्यपुरुषवृत्तान्ताभेदसमारोपात्समासोक्ति। अत एतेषा सङ्कर।

**भाषा**

ब्रह्मा के चुल्लू से सबको जीतने वाले चालुक्य वश के मूल पुरुप रूपी किसी दूसरे तेजस्वी की उत्पत्ति होने वाली है ऐसा मानो जानकर कमलिनी रूपी ललनाओ के पति सूर्य भय से पूर्वाचल रूपी अगम्य किले पर चढ गये। अर्थात् जिस प्रकार प्रतापी, वीर ओर सबको जीतने वाले योद्धा के आने पर कोई प्रतापी भय से दुर्गाश्रय कर लेता है उसी प्रकार चालुक्य वश के प्रतापी मूल पुरुप की ब्रह्मा जी के चुल्लू से उत्पत्ति होने वाली है ऐसा मानो जान कर

प्रतापी सूर्य ने उदयाचल रूपी अभेद्य किले का आश्रय लिया। अर्थात् सूर्य पूर्वाचल पर उदित हुआ।

**जगाम याङ्गेषु रथाङ्गनाम्नां परस्परादर्शनलेपनत्वम्।**
**सा चन्द्रिका चन्दनपङ्ककान्तिः शीतांशुशाणाफलके ममज्ज ॥३८॥**

### अन्वयः

या रथाङ्गनाम्नाम् अङ्गेषु परस्परादर्शनलेपनत्वं जगाम सा चन्दनपङ्क-कान्तिः चन्द्रिका शीतांशुशाणाफलके ममज्ज।

### व्याख्या

या रथस्याऽङ्ग चक्र नाम येषा तेषा रथाङ्गनाम्ना चक्रवाकपक्षिणामङ्गेष्ववयवेषु परस्परस्याऽन्योन्यस्य यददर्शन तदेव लेपन तस्य भावस्तत्वमन्योन्यादर्शनप्रयोज-कलेपनद्रव्यत्व जगाम प्राप्तवती, रात्रौ चन्द्रिकया निखिललोके नितान्त धवलितेऽपि चक्रवाकयुगलस्याऽन्योन्यदर्शन न सम्भवतीति कविलोकप्रसिद्धम्। तत्रोत्प्रेक्ष्यते तेषा पक्षिणामङ्गेषु चन्द्रिकारूपविलेपनद्रव्यविशेषेण लेपस्य जायमानत्वाद्विवि-क्तत्वेनाऽङ्गानामविभावनम्। सा चन्दनपङ्कस्य कान्तिरिव कान्तिर्यस्या सा चन्द्रिका (प्रात कालसमये) शीताशुश्चन्द्र शाणाफलकमिवेत्युपमितसमास, चन्द-नघर्षणोपलमिव तस्मिन् ममज्ज तिरोहिता बभूव। जाते प्रत्यूषे चन्द्रस्य निष्प्रभ-त्वात्तस्य शरीरे चन्द्रिका समाविष्टा सती नाऽन्यत्र परिदृश्यते। चन्दनस्य यथा शाणोपरि घर्षणेन चन्दनाऽभावेऽपि तत्कान्ति शाणोपरि दृश्यते तथैव साम्प्रत चन्द्रिकाया सर्वत्राऽभाव सजात किन्तु तत्स्वरूप शाणफलकसदृशवर्तुलाकार-चन्द्रोपरि केवल परिदृश्यते। अत इद ज्ञायते यच्चन्द्रिकाऽस्मिन्सुधाशावेव प्रविष्टा सती निमग्ना जाताऽदृश्यत्त्व गतेत्यर्थ। चन्द्रिकायाश्चन्दनपङ्केन सह सादृश्यादुपमा।

### भाषा

रात को चकवा और चकई का वियोग होता है और वे परस्पर देख नही सकते ऐसी कविप्रसिद्धि है। अत कवि कल्पना करते है कि चकवा और चकई के अङ्गो को अदृश्य कर देने वाले लेप के समान एक दूसरे को परस्पर देखने मे बाधक, चन्दन के द्रव के समान शोभावाली चादनी, चन्दन घिसने के गोल होरसा के सदृश चन्द्र मे प्रविष्ट हो गई अर्थात् प्रात काल मे चाँदनी अन्यत्र कही न दिखाई

देकर केवल चन्द्र मे दिखाई देती थी जैसे चन्दन हटा लिये जाने पर भी होरसे पर चन्दन की आभा दिखाई पडती ही है ।

**सन्ध्यासमाधौ भगवाँस्थितोऽथ शक्रेण बद्धाञ्जलिना प्रणम्य ।**
**विज्ञापितः शेखरपारिजात-द्विरेफनादद्विगुणैर्वचोभिः ॥३९॥**

**अन्वयः**

अथ सन्ध्यासमाधौ स्थितः भगवान् बद्धाञ्जलिना शक्रेण प्रणम्य शेखरपारिजातद्विरेफनादद्विगुणैः वचोभिः विज्ञापितः ।

**व्याख्या**

अथाऽनन्तर 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमर । सन्ध्यासमाधौ सन्ध्याकालिकध्यानयोगे स्थितो लग्नो भगवान् ब्रह्मा बद्धोऽञ्जलिर्यस्य तेन कृताञ्जलिना शक्रेणेन्द्रेण प्रणम्य नमस्कृत्य शेखरे शिरसि शिरोभूषणरूपो य पारिजातो देवकुसुमविशेषस्तस्मिन्ये द्विरेफा भ्रमरा 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय' इत्यमर । तेषा नादेन झङ्कारेण द्विगुणैर्द्विगुणीभूतैरुपचीयमानैर्वचोभिर्वचनैर्विज्ञापितो निवेदित ।

**भाषा**

इस के अनन्तर सन्ध्याकाल के ध्यान मे मग्न ब्रह्मा जी को इन्द्र ने हाथ जोडकर प्रणाम कर के, अपने मस्तक पर शोभा के लिये धारण किये हुए पारिजात के फ्लो पर गूँजने वाले भौरो की झङ्कार से प्रतिध्वनित, दूने ऊँचे स्वर मे निवेदन किया ।

**इतः परं शक्रश्चतुर्भिः श्लोकैः स्वीयमैश्वर्यं निरूपयन् ब्रह्माणं स्तौति—**

**आस्ते यदैरावणवारणस्य मदाम्बुसङ्गान्मिलितालिमाला ।**
**साम्राज्यलक्ष्मीजयतोरणाभे दन्तद्वये वन्दनमालिकेव ॥४०॥**

**अन्वयः**

यत् ऐरावणवारणस्य साम्राज्यलक्ष्मीजयतोरणाभे दन्तद्वये मदाम्बुसङ्गात् मिलितालिमाला वन्दनमालिका इव आस्ते । (अत्र यच्छब्दो

वाक्यार्थं परामृशन् तच्छब्देन सह नित्यसाकाङ्क्षत्वात् 'स्वर्गमिन् स सर्वोऽपी'त्यादि-त्रिचत्वारिंशत्तमे पद्ये तच्छब्देन सहाऽन्वेति । )

### व्याख्या

यदैरावणनाम्नो वारणस्येन्द्रहस्तिन 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभा' इत्यमर । साम्राज्यलक्ष्म्या सार्वभौमश्रियो जयसूचक तोरण बहिर्द्वार तस्याऽऽभा कान्तिरिवाऽऽभा यस्य तत्तस्मिन् दन्तद्वये रदनयुग्मे 'रदना दशना दन्ता रदा' इत्यमर । मदाम्बुसङ्गान्मदजलसंसर्गान्मिलिता समागताऽलिमाला भ्रमर-पङ्क्तिर्वन्दनमालिकेव चूताशोकादिपत्रमालेव' वन्दनवार इति लोके प्रसिद्धा । आस्ते शोभते—स सर्व एव त्वत्पादसेवारजसा प्रभाव इत्यग्रिमेण श्लोकेनाऽन्वय । आम्राऽशोकपल्लवै सग्रथिता माला मङ्गलकार्येषु द्वारोपरि निबध्यते । दन्तद्वये विजयतोरणसाम्यादलिमालिकायाश्च वन्दनमालिकासाम्यादुपमा ।

### भाषा

यह जो (मेरे) ऐरावण नामक हाथी के, सब भुवनों की विजय श्री के बाहरी फाटक के समान शोभा देने वाले दोनो दातो पर, मदजल के चूने से एकत्रित भौरे बन्दनवार से दिखाई देते है (वह आपकी चरण सेवा की धूलि का ही प्रभाव है) इसका ४३ वे श्लोक से सम्बन्ध है ।

**यदातपत्रं मम नेत्रपद्म-सहस्रलोलालिकदम्बनीलम् ।**
**कुरङ्गनाभीतिलकप्रतिष्ठां मुखे समारोहति राजलक्ष्म्याः ॥४१॥**

### अन्वयः

यत् मम नेत्रपद्मसहस्रलोलालिकदम्बनीलम् आतपत्रं राजलक्ष्म्याः मुखे कुरङ्गनाभीतिलकप्रतिष्ठां समारोहति (स त्वत्पादसेवारजसा प्रभाव इत्य-ग्रिमेण श्लोकेनाऽन्वितम् ) ।

### व्याख्या

यच्छब्दो वाक्यार्थपरामर्शक । मम मदीय नेत्राण्येव नयनान्येव पद्मानि कमलानि तेषा सहस्रमिन्द्रस्य सहस्राक्षत्वात् । तस्मिन्यल्लोलालीना चञ्चल-भ्रमराणा लोलालित्वेनाध्यवसितकृष्णवर्णकनीनिकाना च कदम्ब समूहस्तद्वन्नील, आतपत्रञ्छत्र राजलक्ष्म्या राज्यश्रियो मुखे वक्त्रे कुरङ्गनाभी कस्तूरी तस्या स्तिलकस्य भालभूषणाङ्कविशेषस्य प्रतिष्ठा स्थितिसमता समारोहति प्राप्नोति ।

(स त्वत्पादसेवारजसा प्रभाव इत्यग्रे सम्बन्ध ) नीलभ्रमरसमूहेन नीलच्छत्रस्य साम्यादुपमा । नेत्रेषु पद्मत्वारोपाद्रूपकम् । कृष्ण चञ्चलताराणा लोलालित्वेनाध्यवसितत्वादतिशयोक्ति । अत्रैतेषामङ्गाङ्गिभावसङ्कर. ।

### भाषा

यह जो मेरे सहस्रनेत्र रूपी सहस्र कमलो मे स्थित चञ्चल पुतलियो के स्वरूप चञ्चल भ्रमर समूह की नीलिमा के समान नीले रग का छत्र, राज्य श्री के मुखपर कस्तूरी के तिलक की शोभा दे रहा है । (वह आपकी चरण सेवा की धूली का प्रभाव है। यह ४३ वे श्लोक से सम्बन्धित है ।)

**यन्नन्दने कल्पमहीरुहाणां छायासु विश्रम्य रतिश्रमेण ।**
**गायन्ति मे शौर्यरसोर्जितानि गीर्वाणसारङ्गदृशो यशांसि ॥४२॥**

### अन्वयः

यत् गीर्वाणसारङ्गदृशः रतिश्रमेण नन्दने कल्पमहीरुहाणा छायासु विश्रम्य मे शौर्यरसोर्जितानि यशासि गायन्ति (स त्वत्पादसेवारजसा प्रभाव इत्यग्रिमेण श्लोकेन सम्बन्धः)

### व्याख्या

यदिति वाक्यार्थपरामर्शक', "स्वामिन् स सर्वोपी"त्यत्र तच्छब्देनाऽन्वेति । सारङ्गस्य मृगस्य दृगिव दृग् नेत्र यासा ता गीर्वाणाना देवाना सारङ्गदृशो मृगनयन्यः कान्ता रतिश्रमेण सम्भोगजनितपरिश्रमेण खिन्ना सत्यो नन्दने नन्दन्नामकेन्द्रोद्याने 'हय उच्चै श्रवासूतो मातलिर्नन्दन वनम्' इत्यमर । कल्पमहीरुहाणा कल्पवृक्षाणा छायासु विश्रम्य श्रम निवार्य मे ममेन्द्रस्य शौर्यरसेन वीररसेनोर्जितानि प्रवृद्धानि यशासि स्तोत्राणि गायन्ति भजन्तीत्यर्थ. ।

### भाषा

यह जो सम्भोग से थकी हुई मृगनयनी देवियाँ नन्दन वन मे कल्पवृक्षो की छाया मे विश्राम कर मेरे वीररस से परिवर्द्धित यशो का गान करती है (वह आपकी चरण सेवा की धूलि का प्रभाव है—यह ४३ वे श्लोक से सम्बन्धित है ।)

**किं वा बहूक्तैः पुरुहूत एष पात्रं महिम्नो यदनङ्कुशस्य ।**
**स्वामिन् स सर्वोऽपि शिरोधृतानां त्वत्पादसेवारजसां प्रभावः ॥४३॥**

### अन्वयः

वा बहूक्तैः किम् । यत् एषः पुरुहूतः अनङ्कुशस्य महिम्नः पात्रं, स्वामिन्, सः सर्वः अपि शिरोधृतानां त्वत्पादसेवारजसां प्रभावः (अस्ति) ।

### व्याख्या

वाऽथवा बहून्युक्तानि कथितानि तै बहुकथनै कि, कि प्रयोजनम् न किमपीत्यर्थ । यदिति वाक्यार्थपरामर्शक । एष सन्मुखस्थ पुरुहूत इन्द्रो 'इन्द्रो मरुत्वान्मघवा बिडौजा पाकशासन । वृद्धश्रवा सुनाशीर पुरुहूत पुरन्दर' इत्यमर. । नास्त्यङकुश प्रतिबन्धको यस्य तस्याऽप्रतिहतस्य महिम्नो महत्वस्य पात्र भाजनमस्तीत्यर्थ । हे स्वामिन् हे निग्रहानुग्रहसमर्थ ब्रह्मन् स सर्वोऽपि शिरोधृताना मस्तकोपरि धारिताना सेवाया रजासि धूलिकणानि सेवासम्बन्धिरजास्यर्चनीयधूलिकणानीत्यर्थ, त्वत्पादयोस्तव चरणयोस्सेवारजासि तेषां प्रभाव प्रताप. कार्यमित्यर्थ, अस्ति ।

**चक्कलकमर्थात् कलापकम्[१] । शब्दोऽयं कलापकार्थे कश्मीरे रूढः ।**

### भाषा

अथवा, अधिक कहने से क्या लाभ । हे स्वामिन् यह मैं इन्द्र जो असीम महिमा का पात्र हुआ हूँ, यह सब सिर पर धारण की हुई आपकी चरण सेवा की धूलि का ही प्रताप है ।

(जहा चार श्लोको मे अर्थ की पूर्ति होती है उसे कलापक कहते है । कश्मीर मे कलापक को चक्कलक कहते है ।)

---

[१] छन्दोबद्धपद पद्य तेन मुक्तेन मुक्तकम् ।
द्वाभ्यान्तु युग्मक सदानितक त्रिभिरिष्यते ॥
कलापक चतुर्भिश्च पञ्चभि कुलक मतम् ।
अत्र पञ्चभिरिति न्यूनसख्या व्यवच्छेद । पञ्चभि पञ्चाधिकैश्चेत्यर्थ ।
सदानितक विशेषक तिलक वा ।

**निवेदितश्चारजनेन नाथ तथा क्षितौ सम्प्रति विप्लवो मे ।**
**मन्ये यथा यज्ञविभागभोगः स्मर्तव्यतामेष्यति निर्जराणाम् ॥४४॥**

### अन्वयः

नाथ, चारजनेन सम्प्रति क्षितौ तथा विप्लवः मे निवेदितः यथा निर्जराणां यज्ञविभागभोगः स्मर्तव्यताम् एष्यति (इति) मन्ये ।

### व्याख्या

हे नाथ हे स्वामिन् ब्रह्मन् ! चर एव चारश्चार एव जनस्तेन गुप्तचरेण सम्प्रत्यधुना क्षितौ पृथिव्या तथा तादृशो विप्लवो डिम्बो 'डिम्बे डमरविप्लवौ' इत्यमरः । नरलुण्ठनाद्युपसर्गविशेष इत्यर्थ । मे मह्य निवेदितो विज्ञापितो यथा येन प्रकारेण निर्जराणा देवाना 'अमरा निर्जरा देवा' इत्यमर । यज्ञेषु क्रतुषु विभागा देवेभ्योऽर्पणीयद्रव्यविभागास्तेषां भोगो ग्रहणमुपभोगश्च स्मर्तव्यतां स्मरणीयतामेष्यति प्राप्स्यतीति मन्ये जानामि तर्कयामीत्यर्थ । विप्लवैरग्रे देवेभ्यो यज्ञभागा नार्पिता भविष्यन्तीति तर्कयामीतिभाव ।

### भाषा

हे नाथ ब्रह्मा जी ! गुप्तचर ने पृथ्वीपर होनेवाले ऐसे उपद्रवो की मुझे सूचना दी है जिनसे देवताओ का, यज्ञो मे मिलने वाले भागो का उपभोग, केवल स्मरण करने का ही विषय हो जाएगा, ऐसा मैं अनुमान करता हूँ । अर्थात् ऐसे उपद्रवो से भविष्य मे यज्ञो में देवताओ को भाग नही दिया जाएगा ऐसा मेरा अनुमान है ।

**धर्मद्रुहामत्र निवारणाय कार्यस्त्वया कश्चिदवार्यवीर्यः ।**
**रवेरिवांशुप्रसरेण यस्य वंशेन सुस्थाः ककुभः क्रियन्ते ॥४५॥**

### अन्वयः

अत्र धर्मद्रुहां निवारणाय त्वया अवार्यवीर्यः कश्चित् कार्यः । रवेः अंशुप्रसरेण इव यस्य वंशेन ककुभः सुस्थाः क्रियन्ते ।

### व्याख्या

अत्र क्षितौ धर्मद्रुहा धर्मद्वेषिणामधर्मपरायणाना निवारणाय विनाशाय त्वया ब्रह्मणाऽवार्यमप्रतिहत वीर्यं पराक्रमो यस्यैवम्भूत कश्चित् कोऽप्यप्रतिहतशक्ति-मान्वीर कार्य समुत्पादनीय । रवे सूर्यस्याशुप्रसरेण प्रभासन्तानेनेव (यथा सर्वा दिशस्तमोविनाशेन प्रकाशिता भवन्ति तत्स्थाश्च प्राणिन. सुखेन स्वकार्यकरणेन जीवनमतिवाहयन्ति तथैव) यस्याऽवार्यवीर्यस्य वीरस्य वशेन कुलेन ककुभ सर्वा दिशः 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर. । तत्स्था प्राणिन इत्यर्थ । सुखेन तिष्ठन्तीति सुस्था निरुपद्रवा क्रियन्ते सम्पाद्यन्ते । राज्ञि सूर्यस्य साम्यात्तद्वशे चाऽशुप्रसरस्य साम्यादुपमा ।

### भाषा

(इसलिये) इस पृथ्वी पर अर्धामियो का नाश करने के लिये आप किसी अप्रतिहतशक्तिशाली वीर की उत्पत्ति करिए, जिसके वश के फैलने से सब दिशाओ मे रहने वाले लोग, उपद्रवो से दूर होकर, प्रसन्न हो, जिस प्रकार सूर्य की किरणो के फैलने से अन्धकार दूर होकर सब दिशाएँ प्रसन्न हो जाती हैं ।

**पुरन्दरेण प्रतिपाद्यमान-मेवं समाकर्ण्य वचो विरिञ्चिः ।**
**सन्ध्याम्बुपूर्णे चुलुके मुमोच ध्यानानुविद्धानि विलोचनानि ॥४६॥**

### अन्वयः

विरिञ्चिः पुरन्दरेण एवं प्रतिपाद्यमानं वचः समाकर्ण्य सन्ध्याम्बुपूर्णे चुलुके ध्यानानुविद्धानि विलोचनानि मुमोच ।

### व्याख्या

विरिञ्चिर्धाता 'धाताब्जयोनिर्द्रुहिणो विरिञ्चि कमलासन' इत्यमर' । विरिञ्चिर्विरञ्चिरित्युभयमपि साधु । पुरन्दारयतीति पुरन्दरस्तेनेन्द्रेणैव पूर्वोक्त प्रतिपाद्यमान कथ्यमान वचो वाणी समाकर्ण्य श्रुत्वा सन्ध्या-सम्बन्ध्यम्बु जल तेन पूर्णे पूरिते चुलुकेऽञ्जलौ ध्यानेनाऽनुविद्धानि ध्यानप्रसक्तानि विलोचनानि नयनानि, चतुर्मुखत्वाद्बहुवचनम् । मुमोच निक्षिप्तवान् ।

**भाषा**

ब्रह्माने, इन्द्र द्वारा इस प्रकार कहे हुए वचनो को सुन कर, सन्ध्या सम्बन्धि जल से भरी अँजुली पर अपने ध्यानयुक्त नेत्रो को डाला अर्थात् उसे ध्यान पूर्वक देखा ।

[१] कुलकारम्भः—

**प्रकोष्ठपृष्ठस्फुरदिन्द्रनील–रत्नावलीकङ्कणडम्बरेण ।**
**बन्धाय धर्मप्रतिबन्धकानां वहन्सहोत्थानिव नागपाशान् ॥४७॥**

**अन्वयः**

प्रकोष्ठपृष्ठस्फुरदिन्द्रनीलरत्नावलीकङ्कणडम्बरेण धर्मप्रतिबन्धकानां बन्धाय सहोत्थान् नागपाशान् वहन् इव । (सुभटो विधातुश्चुलुकादाविरासीदिति पञ्चपञ्चाशत्सख्याकश्लोकेन सम्बन्धः ।)

**व्याख्या**

प्रकोष्ठस्य कूर्पराधोभागस्य पृष्ठे पृष्ठभागे स्फुरन्ती देदीप्यमाना येन्द्रनील-रत्नानामिन्द्रनीलमणीना रत्नविशेषाणामावली पङ्क्तिस्तस्या कङ्कणङ्करभूषणं 'ककण करभूषणम्' इत्यमर. । तस्य डम्बरेण मिषेण प्रकोष्ठस्थितेन्द्रनीलमणि-घटित-करभूषण-मिषेण धर्मप्रतिबन्धकाना धर्मप्रतिरोधकानामधर्मिणामित्यर्थ. । बन्धाय नियन्त्रणाय जन्मना सहोत्तिष्ठन्तीति प्रादुर्भवन्तीति सहोत्थास्तान्, राज्ञो जन्मकालादेव समुत्पन्नान् नागपाशान् सर्परज्जूर्वहन्निव धारयन्निव—सुभटो धातुश्चुलुकादाविरासीदिति सम्बन्धः । इन्द्रनीलरत्नावलीकङ्कणे नागपाशस्य सभावनादुत्प्रेक्षा । सा च 'डम्बरेण' इत्यपन्हुतिमूलत्वात्सापन्हवा ।

**भाषा**

कलाई पर बधे हुए इन्द्रनीलमणि के कगन के मिष से, धर्म द्रोहियो को बाधने के लिए मानो साथ ही मे उत्पन्न भये हुए नागफास को धारण करता हुआ (एक वीर ब्रह्मा जी की अजुली से उत्पन्न हुआ ।) (इसका सम्बन्ध ५५ वे श्लोक से है ।)

---

[१] कुलकलक्षण त्रिचत्वारिंशत्तमश्लोकटिप्पण्या द्रष्टव्यम् ।

**उत्तर्जनीकेन मुहुःकरेण कृताकृतावेक्षणबद्धलक्षः ।**
**रुषा निषेधन्निव चेष्टितानि दिक्पालवर्गस्य निरर्गलानि ॥४८॥**

**अन्वयः**

कृताकृतावेक्षणबद्धलक्षः (सः) उत्तर्जनीकेन करेण दिक्पालवर्गस्य निरर्गलानि चेष्टितानि रुषा मुहुः निषेधन् इव (विधातुश्चुलुकादाविरासी-दित्यग्रिमेण श्लोकेन सम्बन्धः ।)

**व्याख्या**

कृतमुचितसमाचरणमकृतमनुचितसमाचरणञ्च कृताकृते तयोः किमुचित समाचरित किं वाऽनुचितमाचरित लोकैरेतयोरवेक्षणे पर्यालोचने बद्ध व्यापृत लक्ष ध्यान यस्य स धर्माधर्माचरणसमीक्षणैकचित्त स सुभट उर्ध्वीकृता तर्जनी यस्यैवम्भूतेन तेन करेण हस्तेन दिशा पाला पालकास्तेषा दिक्पालाना वर्गस्य समूहस्य निरर्गलानि निष्प्रतिबन्धानि चेष्टितानि कार्याणि रुषा क्रोधेन मुहुर्वार-वार निषेधन्निव निवारयन्निव (विधातुश्चुलुकादाविरासीदित्यनेन सम्बन्ध ।) उत्तर्जनीककरे दिक्पालचेष्टितकर्मकनिषेधक्रियायास्समुत्प्रेक्षणात्क्रियोत्प्रेक्षा ।

**भाषा**

उचित और अनुचित कार्यो के परीक्षण में दत्तचित्त वह वीर, दिक्पाल लोगो के निरङ्कुश कार्यों का, खडी की हुई तर्जनी अगुली से युक्त हाथ से मानो क्रोध से बार २ निषेध करता हुआ (ब्रह्मा जी की अजुली से उत्पन्न हुआ ।)

**भोगाय वैपुल्यविशेषभाजं कर्तुं धरित्रीं निजवंशजानाम् ।**
**केयूरसङ्क्रान्तविमानभङ्ग्या भुजोद्धृतक्ष्माभृदिवेक्ष्यमाणः ॥४९॥**

**अन्वयः**

निजवंशजाना भोगाय धरित्री वैपुल्यविशेषभाज कर्तुं केयूरसङ्क्रा-न्तविमानभङ्ग्या भुजोद्धृतक्ष्माभृत् इव ईक्ष्यमाणः (विधातुश्चुलुकादा-विरासीदित्यन्वयः ।)

## व्याख्या

निजवशजाना स्वकुलोत्पन्नाना राज्ञां भोगायोपभोगाय धरित्रीं पृथ्वी वैपुल्य-विशेष भजतीति वैपुल्यविशेषभाक् ता विशालक्षेत्रा कर्तुं सम्पादयितु केयूरेऽङ्गदे 'केयूरमगद तुल्ये' इत्यमर । सङ्क्रान्तानि प्रतिबिम्बितानि विमानानि गगन उड्डीयमानानि व्योमयानानि 'व्योमयान विमानोऽस्त्री' इत्यमरः । तेषा भङ्ग्या व्याजेन भुजाभ्यामुद्धृता क्ष्माभृत पर्वता राजानश्च येन स भुजोपरि समुत्क्षिप्त-महीधर इवेक्ष्यमाणो दृश्यमान सुभट प्रादुरासीदित्यग्रे सम्बन्ध. । पर्वतैरथवा राजभिराक्रान्ता पृथ्वी स्ववंशजाना भोगायाऽल्पतरा मत्वा तानुत्क्षिप्य समतला निष्कण्टकां विशालाञ्च धरा चिकीर्षुरित्यर्थ । नेमे विमाना किन्तु क्ष्माभृत इति भङ्गि शब्देन प्रतिपादनादार्थ्यपन्हुतिस्तन्मूला विमानोपरि क्ष्माभृतामुत्प्रेक्षा । अत द्वयोरङ्गाङ्गीभावसकर' ।

## भाषा

अपने वश मे होने वाले राजाओ के उपभोग के लिये पृथ्वी पर अधिक स्थान बढाने के ध्येय से, भुजा के आभूषण बिजायट मे प्रतिबिम्बित, आकाश मे उडने वाले विमानो की परछाही के मिष से मानो भुजाओ से पहाडो को या विपक्षी राजाओ को हटाकर दूर फेक देने के लिये उठाए हुए के ऐसा दिखाई देने वाला (वीर ब्रह्मा जी की अजुली से उत्पन्न हुआ ।)

**अखर्वगर्वस्मितदन्तुरेण विराजमानोऽधरपल्लवेन ।**
**समुत्थितः क्षीरविपाण्डुराणि पीत्वेव सद्यो द्विषतां यशांसि ॥५०॥**

## अन्वयः

अखर्वगर्वस्मितदन्तुरेण अधरपल्लवेन विराजमानः क्षीरविपाण्डुराणि द्विषतां यशासि सद्यः पीत्वा समुत्थितः इव ।

## व्याख्या

अखर्वो महान् गर्वो दर्पस्तेन यत्स्मित शुभ्रवर्ण-गर्वहेतुक-मीषद्धास्य तेन दन्तुर उन्नतानत 'खर्वो ह्रस्वश्च वामन इति । 'दन्तुर तून्नतानतम्' इति चाऽमर । तेनाऽधर अधरोष्ठ पल्लव इवेत्यधरपल्लवस्तेन विराजमान. सुशोभित क्षीरवदुग्धवद्विपाण्डुराणि शुभ्राणि द्विषता शत्रूणा यशासि सद्य पीत्वा

पान कृत्वा, नवजातशिशु पूर्वं दुग्धमेव पिबतीत्याशय । समुत्थित इव विद्यमान इव सुभट' प्रादुरासीदित्यन्वयः । यश स्मितञ्च शुभ्र भवतीति कविसम्प्रदाय । तस्मिन् जातमात्र एव शत्रुयशासि विनश्यन्ति स्मेति भाव । अधरे पल्लवा-भेदाद्रूपकम् । क्षीरेण यशस साम्यादुपमा । क्षीररूपयश पानानन्तर समुत्था-नस्योत्प्रेक्षणात्क्रियोत्प्रेक्षा । अत एतेषा सकर. ।

## भाषा

अधिक अभिमान से उत्पन्न भई हुई (श्वेत) मुस्कुराहट से विकसित अधरोष्ठ से शोभित (वह वीर) मानो दूध के समान शत्रुओ के उज्वल यशो को पीकर प्रकट भया हुआ (ब्रह्मा जी की अजुली से उत्पन्न हुआ।)

**सुवर्णनिर्माणमभेद्यमस्त्रैः स्वभावसिद्धं कवचं दधानः ।**
**जयश्रियः काञ्चनविष्टराभं समुद्वहन्नुन्नतमंसकूटम् ॥५१॥**

## अन्वयः

अस्त्रैः अभेद्यं सुवर्णनिर्माणं स्वभावसिद्धं कवचं दधानः जयश्रियः काञ्चनविष्टराभम् उन्नतम् अंसकूटं समुद्वहन् (सुभटो विधातुश्चुलुकादाविरासीदित्यनेन सम्बन्धः ।)

## व्याख्या

अस्त्रैर्बाणैरन्यास्त्रैर्वाऽभेद्य भेत्तुमशक्य सुवर्णस्य काञ्चनाभस्य सुन्दरदेहवर्णस्य निर्माण निर्मितिमेव स्वभावसिद्ध प्राकृतिक कवच तनुत्र 'अथ तनुत्र वर्म दशनम् । उरच्छद ककटको जगर कवचोऽस्त्रियाम्' इत्यमर । दधानो धारयन्, पक्षे सुवर्णेन हेम्ना निर्माण यस्यैवम्भूत कवचम् । श्लिष्टरूपकम् । जयश्रियो विजयलक्ष्म्या उपवेशनाय काञ्चनस्य स्वर्णस्य विष्टरमासन तदाभेवाऽऽभा कान्तिर्यस्य त सुवर्णसिहासनसदृशमुन्नत प्रशस्तमसकूट स्कन्धशिखर समुद्वहन् धारयन् 'कूटोऽस्त्री शिखर शृङ्गम्' इत्यमर । सुभट प्रादुरासीदित्यन्वय । काञ्चनाभदेहप्रभाया स्वभावसिद्धकवचत्वस्योत्प्रेक्षणादुत्प्रेक्षा । वाचकाभावाच्च तस्या व्यङ्ग्यत्वम् । असकूटे काञ्चनविष्टरस्य साम्यप्रतीत्योपमा । देहस्य सुवर्णे स्वभावसिद्धस्वर्णनिर्मितकवचस्य तादात्म्यारोपाद्रूपकमपीत्युत्प्रेक्षारूपकयोः सन्देहसकर. ।

## भाषा

सोने के समान शरीर के स्वाभाविक रग के कारण मानो बाणो या अन्य अस्त्रो से न छिद सकने वाले सोने से बने हुए कवच को धारण करने वाला, विजयलक्ष्मी के (बैठने के) सोने के आसन के समान उन्नत स्कन्धप्रदेशो को धारण करने वाला (एक वीर प्रकट हुआ।)

**स्वःसुन्दरीबन्दिपरिग्रहाय दत्तोऽञ्जलिः सम्प्रति दानवेन्द्रैः ।**
**इति प्रहर्षादमराङ्गनानां नेत्रोत्पलश्रेणिभिरर्च्यमानः ॥५२॥**

## अन्वयः

सम्प्रति दानवेन्द्रैः स्वःसुन्दरीबन्दिपरिग्रहाय अञ्जलिः दत्तः इति प्रहर्षात् अमराङ्गनाना नेत्रोत्पलश्रेणिभिः अर्च्यमानः (सुभटः प्रादुरासीत् ।)

## व्याख्या

सम्प्रत्यधुना राज्ञ समुत्पत्त्यनन्तर दानवेन्द्रैर्दैत्यधुरन्धरै स्व स्वर्गस्य सुन्दर्य एव बन्दिनो वशीकृता स्त्रिय स्तुतिपाठिका वा 'बन्दिन स्तुतिपाठका' इत्यमर । तासा परिग्रहाय सून्दरस्त्रीत्वेन स्तुतिपाठिकात्वेन वा हरणायाऽञ्जलिर्दत्त । अस्य राज्ञो भयात्सुरसुन्दरीबन्दिकरणाय तासा हठापहरणस्य साहसस्तै परित्यक्त इति प्रहर्षादेतत्कार्यजनिताऽऽनन्दोद्रेकेणाऽमराङ्गनाना देवाङ्गनाना नेत्राणि नयनान्युत्पलानीव कमलानीव तेषा श्रेणिभि. पङिक्तभिरर्च्यमान पूज्यमानो दृश्यमान इत्यर्थ । न दानवा इत परमस्य कृपयाऽस्मान्बन्दीकरिष्यन्तीति देवाङ्गनाभि प्रसन्नाभिर्दृग्भिरवलोक्यमान इति भाव । कमलपङिक्तभि-रर्च्यमाने प्रहर्षस्य हेतुत्वेनोत्प्रेक्षणादुत्प्रेक्षा । नेत्रयो कमलसाम्यादुपमा । नेत्राण्येव कमलानीति रूपकमपि । अतस्तेषा सङ्कर ।

## भाषा

इस वीर के उत्पन्न हो जाने पर अब दानवेन्द्रो ने भय से, स्वर्गीय ललनाओ को, अपनी स्तुति करने के लिये अथवा सुन्दर स्त्री होने के नाते अपने वश मे करने के हेतु से, उनका अपहरण करने से मुँह मोड लिया है, इस हर्ष से देवाङ्गनाओ के नेत्र रूपी कमलो से पूजित (एक वीर उत्पन्न हुआ।) अर्थात्

उन देवाङ्गनाओ का इस वीर के कारण भय दूर हो जाने से वे इसे हर्ष से टकटकी बाँध कर देखने लगी थी ।

**अपि स्वयं पङ्कजविष्टरेण देवेन दृष्टश्चिरमुत्सुकेन ।**
**वाञ्छाधिकप्रस्तुतवस्तुसिद्धि–सविस्मयस्मेरमुखाम्बुजेन ॥५३॥**

### अन्वय

वाञ्छाधिकप्रस्तुतवस्तुसिद्धिसविस्मयस्मेरमुखाम्बुजेन उत्सुकेन पङ्कज-विष्टरेण देवेन अपि स्वय चिर दृष्टः सुभट आविरासीदित्यनेन सम्बन्धः ।

### व्याख्या

वाञ्छाया मनोरथादप्यधिका विशेषा या प्रस्तुतवस्तुनोऽतिप्रभावशालिनो राज्ञ सिद्धिर्निर्माण तया सविस्मयमाश्चर्ययुक्त स्मेरमीषद्धास्य तेन युक्त मुखाम्बुजं वदनारविन्द यस्य तेनोत्सुकेनोत्कण्ठितेन पङ्कज कमल विष्टरमासन यस्य तेन कमलासनेन देवेन ब्रह्मणाऽपि स्वय चिर चिराय दृष्ट सवीक्षित । न केवल देवाङ्गनाभिरपि तु ब्रह्मणाऽपि साश्चर्य स्वय चिर दृष्ट । मुखेऽम्बुजा-भेदाद्रूपकम् ।

### भाषा

अपने मनोरथ से भी अधिक प्रभावशाली नई वस्तु अर्थात् राजा के बन जाने से आश्चर्य युक्त मुस्कुराहट वाले मुखकमल को धारण करने वाले, कमल के आसन पर विराजित उत्सुक ब्रह्मा से भी स्वय चिरकाल तक अव-लोकित (एकवीर उत्पन्न हुवा ।)

**कषोपले पौरुषकाञ्चनस्य पङ्के यशः-पाण्डुसरोरुहाणाम् ।**
**व्यापारयन्दृष्टिमतिप्रहृष्टा—मवाप्तपाणिप्रणये कृपाणे ॥५४॥**

### अन्वयः

पौरुषकाञ्चनस्य कषोपले यशःपाण्डुसरोरुहाणा पङ्के अवाप्तपाणि-प्रणये कृपाणे अतिप्रहृष्टा दृष्टि व्यापारयन् सुभट आविरासीदित्यनेन सम्बन्धः ।

### व्याख्या

पौरुष पुरुषार्थ एव काञ्चन सुवर्णं तस्य कषोपले शुद्धयशुद्धिपरिचायक-नीलपाषाणरूपे, यश पाण्डुसरोरुहाणा यशस्स्वरूपशुभ्रपद्मानामुत्पत्तिस्थानरूपे पङ्के कृष्णवर्णपङ्काभिन्नेऽवाप्त. प्राप्त पाणेर्हस्तस्य प्रणयस्सग्रहणस्नेहो यस्मिन्नेव भूते कृपाणे खड्गेऽतिप्रहृष्टामतिप्रसन्ना दृष्टि व्यापारयन् कुर्वन्—सुभट आविरासीदि-त्यनेनाऽन्वय । पौरुषे काञ्चनाभेदारोपस्य कृपाणे कषोपलत्वारोपेकारणत्वाद्य-शसि श्वेतपद्मारोपस्य च खड्गे पङ्कत्वारोपे कारणत्वात्परम्परितरूपकद्वयम् ।

### भाषा

पुरुषार्थरूपी सोने की काली कसौटी स्वरूप तथा यशरूपी श्वेत कमलो को उत्पन्न करने वाली तालाव की काली मिट्टी स्वरूप अपने हाथ को प्रिय लगने वाली तलवार को अत्यन्त हर्ष युक्त दृष्टि से देखता हुवा—एक वीर उत्पन्न हुवा ।

**हेमाचलस्येव कृतः शिलाभिरुदारजाम्बूनदचारुदेहः ।**
**अथाऽऽविरासीत्सुभटस्त्रिलोक-त्राणप्रवीणश्चुलुकाद्विधातुः ॥५५॥**

### अन्वयः

अथ उदारजाम्बूनदचारुदेहः हेमाचलस्य शिलाभिः कृतः इव त्रिलोक-त्राणप्रवीणः सुभटः विधातुः चुलुकात् आविरासीत् ।

### व्याख्या

अथ ब्रह्मण. स्व-चुलुके दृष्टिपातादनन्तरं उदार शुद्ध महत् 'उदारो दातृ-महतो' इत्यमर । जाम्बूनदमिव सुवर्णमिव 'रुक्म कार्तस्वर जाम्बूनदमष्टा-पदोऽस्त्रियाम्' इत्यमर । चारु सुन्दरो देह शरीर यस्य स अतएव हेमाचलस्य सुमेरोश्शिलाभि कृत इव निर्मित इव त्रिलोकस्य त्रैलोक्यस्य त्राणे रक्षणे समुद्धरणे च प्रवीणो निपुण सुभट सुयोद्धा राजा ब्रह्मणो विधातुश्चुलुकादञ्जलेराविरासीत्प्रादुर्बभूव । देहस्य जाम्बूनदेन सादृश्यादुपमा । सुभटशरीरे सुवर्णाचल-शिलानिर्मितत्वस्योत्प्रेक्षणात्क्रियोत्प्रेक्षा ।

**इति नवभिः श्लोकैः कुलकम् ।**[१]

---

[१] कुलकादिलक्षणमस्मिन्सर्गे त्रिचत्वारिंशत्तमश्लोकटिप्पण्या द्रष्टव्यम् ।

### भाषा

ब्रह्मा जी के अपनी जल पूरित अंजुली पर दृष्टिपात करने के बाद शुद्ध सोने के समान सुन्दर देहवाला मानों सुमेरुपर्वत की सोने की चट्टानों से बनाया हुवा और तीनों लोकों का रक्षण तथा उद्धार करने में निपुण एक महा योद्धा ब्रह्मा के चुल्लू में से प्रकट हुआ ।

(जहाँ पांच से अधिक श्लोकों में वाक्यपूर्ति हो उसे कुलक कहते हैं ।)

**प्रस्थाप्य शक्रं धृतिमान्भवेति हर्षाश्रुपारिप्लवदृक्सहस्रम् ।**
**स शासनात्पङ्करुहासनस्य मरुद्विपक्षक्षयदीक्षितोऽभूत् ॥५६॥**

### अन्वयः

सः हर्षाश्रुपारिप्लवदृक्सहस्रं शक्रं धृतिमान् भव इति प्रस्थाप्य पङ्करुहासनस्य शासनात् मरुद्विपक्षक्षयदीक्षितः अभूत् ।

### व्याख्या

स राजा हर्षाश्रुभिरानन्दाश्रुभिः पारिप्लवं चञ्चलं 'चञ्चलं चपलञ्चैव पारिप्लवपरिप्लवे' इत्यमरः । दृशां नेत्राणां सहस्रं यस्य तं शक्रं सहस्राक्षं त्वं धृतिमान् भव धैर्यं धारयेत्याश्वास्येति शेषः प्रस्थाप्य पुनस्स्वस्थाने निवर्तनाय नियोज्य पङ्करुहासनस्य पद्मासनस्य ब्रह्मणः 'पङ्केरुहं तामरसं सारसं सरसीरुहमित्यमरः । शासनादाज्ञया मरुतां देवानां विपक्षाः शत्रवो दैत्यास्तेषां क्षये नाशे दीक्षितः गृहीतदीक्षः कृतसङ्कल्पोऽभूत् जातः ।

### भाषा

उस वीर ने हर्ष जनित अश्रुओं से चंचल हजार आँखवाले इन्द्र को 'धैर्य रक्खो' ऐसा कह कर और उसको बिदा कर ब्रह्मा की आज्ञा से दैत्यों के नाश करने का बीड़ा उठाया ।

**क्ष्माभृत्कुलानामुपरिप्रतिष्ठामवाप्य रत्नाकरभोगयोग्यः ।**
**क्रमेण तस्मादुदियाय वंशः शौरेः पदाद्गाङ्ग इव प्रवाहः ॥५७॥**

78

### अन्वय

तस्मात् क्रमेण क्ष्माभृत्कुलानाम् उपरि प्रतिष्ठाम् अवाप्य रत्नाकर भोगयोग्यः वंशः शौरेः पदात् गाङ्गः प्रवाहः इव उदियाय ।

### व्याख्या

तस्मात् राज्ञ. क्रमेण क्रमश क्ष्मा पृथ्वी बिभ्रतीतिक्ष्माभृतो राजान पर्वताश्च तेषा कुलानि वशा समूहाश्च तेषामुपरि प्रतिष्ठा सर्वातिशायिनी स्थितिमवाप्य लब्ध्वा रत्नानामाकरस्य निधे पक्षे समुद्रस्य भोगे सुखानुभवे पक्षे सयोगे योग्य समर्थो वश कुल शौरेर्विष्णो पदाच्चरणाद्गाङ्गो गङ्गासम्बन्धी प्रवाह इव उदियायोदितोऽभूत् । यथा शौरे. पदात् गाङ्ग. प्रवाह पर्वतानामुपरि स्थिति लब्ध्वा रत्नाकरसङ्गमयोग्य उदेति तथैव तस्माद्राज्ञ पार्थिवानामुपरि स्थान लब्ध्वा रत्ननिधेर्भोगे समर्थो वश उदियायेति भाव । अत्र पूर्णोपमालङ्कार· ।

### भाषा

उस राजा से, अन्य राजकुलो से अधिक कीर्तिशाली, रत्नो के खजानो का उपभोग करने के योग्य, विष्णु के चरण से पर्वत समूहो पर अपना स्थान बनाता हुआ, समुद्र से जा मिलने मे समर्थ गङ्गाप्रवाह के समान, एक वश आगे चल पडा ।

**विपत्नवीराद्भुतकीर्तिहारी हारीत इत्यादिपुमान्स यत्र ।**
**मानव्यनामा च बभूव मानी मानव्ययं यः कृतवानरीणाम् ॥५८॥**

### अन्वयः

यत्र विपक्षाद्भुतकीर्तिहारी हारीतः इति आदिपुमान् बभूव । यः अरीणां मानव्ययं कृतवान् सः मानी मानव्यनामा च बभूव ।

### व्याख्या

यत्र चालुक्यराजवशे विपक्षाणामरीणामद्भुताऽऽश्चर्यकारिणी या कीर्तिर्यश 'यश कीर्ति· समज्ञाचेत्यमरः । तस्या हारी विनाशकारी हारीत इति नाम्ना प्रसिद्धो राजाऽऽदिपुरुष कुलप्रवर्तको बभूव । य प्रसिद्धोऽरीणा शत्रूणा मान-स्याऽहङ्कारस्य व्यय नाश कृतवान् चकार स मानी मानयुक्तो मानव्यनामा

तन्नाम राजा च बभूव । हारीतो मानव्यश्च तद्वशमूलपुरुषौ बभूवतुरित्यर्थ. । मान व्ययत इति मानव्यो, विपूर्वक अय् गतौ धातोर्विचि लोपोव्योर्वलीति यकारस्य लोपे सिद्धम् ।

### भाषा

जिस चालुक्य वश मे आदि पुरुष हारीत नाम का हुवा जो विपक्षी राजाओ की आश्चर्यजनक कीर्ति का अपहरण करने वाला था । अभिमानी मानव्य नाम का राजा भी उसी वश मे हुवा जिसने शत्रुओ के अभिमान को तोड दिया था ।

**मीलद्विलासालकपल्लवानि विशीर्णपत्रावलिमण्डनानि ।**
**मुखानि वैरिप्रमदाजनस्य यद्भूपतीनां जगदुः प्रतापम् ॥५६॥**

### अन्वयः

मीलद्विलासालकपल्लवानि विशीर्णपत्रावलिमण्डनानि वैरिप्रमदाजनस्य मुखानि यद्भूपतीनां प्रतापं जगदुः ।

### व्याख्या

मीलद्विलासा विलासशून्या सस्कारशून्या अलकपल्लवा केशपाशा येषा तानि विशीर्णानि जीर्णानि [१]पत्रावलिरूपमण्डनानि शोभावर्द्धकानि येषु तानि वैरिणा शत्रूणा प्रमदाजनस्य स्त्रीसमूहस्य मुखान्याननानि (कर्तृ) यस्य चालुक्य-वशस्य भूपतिना राज्ञा प्रतापं प्रभाव जगदुरूचु । वैरिस्त्रीणामलङ्काराभावात्पतीना मरण सूच्यते ।

### भाषा

शत्रुओ की स्त्रियो के सस्कार शून्य केशपाशो से युक्त तथा खण्डित पत्रावलि से युक्त मुख, उस चालुक्य वश के राजाओ के प्रताप को कह रहे थे । अर्थात् प्रकट कर रहे थे । अर्थात् निकट भूत मे पतियो के मारे जाने से विधवा हो

---

[१] शोभा के लिये रगबिरगी वस्तुओ से मुखादि अगो पर निकाली हुई चित्रकारी ।

जाने के कारण फिर अपने को विभूषित करने का अवसर न आने से उनके केशपाश पति की जीवितावस्था के सस्कारो से रहित थे और पत्रावलि रूप मण्डन भी फिर से न ठीक किये जाने से खण्डित हो गया था ।

**उत्खातविश्वोत्कटकण्टकानां यत्रोदितानां पृथिवीपतीनाम् ।**
**क्रीडागृहप्राङ्गणलीलयैव बभ्राम कीर्तिर्भुवनत्रयेऽपि ॥६०॥**

**अन्वयः**

यत्र उदितानाम् उत्खातविश्वोत्कटकण्टकाना पृथिवीपतीना कीर्तिः क्रीडागृहप्राङ्गणलीलया एव भुवनत्रये अपि बभ्राम ।

**व्याख्या**

यत्र चालुक्यवशे उदिताना समुत्पन्नानामुत्खातानि समूलमुच्छेदितानि विश्वस्य ससारस्योत्कटा प्रकाण्डा कण्टका विघ्नभूता दुष्टा राजान (क्षुद्रशत्रव ) यैस्तेषा पृथिवीपतीना महीपतीना कीर्तिर्यश क्रीडागृहस्य लीलागृहस्य यत्प्राङ्गण-माभ्यन्तरभूमिस्तस्मिन्या लीलाऽधिकपरिश्रम विना सञ्चरणादिविलासस्तयैवाऽना-यासेनैव भुवनत्रयेऽपि लोकत्रयेऽपि बभ्राम सञ्चचाल ।

**भाषा**

ससार के अत्यन्त भयङ्कर उपद्रव रूपी क्षुद्र राजाओ को समूल नष्ट करने वाले, चालुक्य वश मे उत्पन्न राजाओ की कीर्ति, क्रीडागृह के अगने मे रहने के समान ही तीनो लोको मे आनायास से ही फैल गई । अर्थात् विरोधी राजाओ का नाश कर देने पर तीनो लोको मे निष्कण्टक राज्य हो जाने से विरोधियो के अभाव मे सर्वत्र अनायास ही कीर्ति फैल गई । क्योकि तीनो लोक उनके लिये निर्भय घर के अँगने के समान हो गया था ।

**यत्पार्थिवैः शत्रुकठोरकण्ठ-पीठास्थिनिर्लोठन-कुण्ठधारः ।**
**निन्ये कृपाणः पटुतां तदीय-कपालशाणोपलपट्टिकासु ॥६१॥**

**अन्वयः**

यत्पार्थिवैः शत्रुकठोरकण्ठपीठास्थिनिर्लोठनकुण्ठधारः कृपाणः तदीय-कपालशाणोपलपट्टिकासु पटुतां निन्ये ।

## व्याख्या

यस्य चालुक्यवशस्य पार्थिवैर्नृपै शत्रूणामरीणा कठोरा कठिना ये कण्ठपीठा ग्रीवास्थलानि तेषामस्थीनि तेषा निर्लोठनेन खण्डनेन कुण्ठा कुण्ठीभूता धारा तीक्ष्णाग्रभागो यस्य स कृपाण खड्ग तेषामिद तदीय तानि शत्रुसम्बन्धीनि कपालान्येव शिरोस्थीन्येव शाणोपलपट्टिका तीक्ष्णताप्रवर्धकयन्त्रविशेषा. 'सान' इति लोके प्रसिद्धम् । तासु पटुता तीक्ष्णता निन्ये प्रापित । कपालोपरि शाणोपलपट्टिकात्वारोपाद्रूपकम् । कण्ठे पीठाभेदाच्चरूपकम् ।

## भाषा

जिस वश के राजाओ ने, शत्रुओ की कडी २ गले की हड्डियो के काटने से कुन्द धार वाली तलवार की धार, शत्रुओ के सिर की हड्डी रूपी सान पर चढा कर तेज की ।

**निरादरश्चन्द्रशिखामणौ यः प्रीतेऽपि लोकत्रितयैकवीरः ।**
**क्षिपन्कृपाणं दशमेऽपि मूर्ध्नि स्वयं धृतः क्ष्माधरराजपुत्र्या ॥६२॥**

## अन्वयः

यः लोकत्रितयैकवीरः चन्द्रशिखामणौ प्रीते अपि निरादरः ( सन् ) दशमे मूर्ध्नि अपि कृपाणं क्षिपन् क्ष्माधरराजपुत्र्या स्वय धृतः ।

## व्याख्या

य प्रसिद्धो लोकाना भुवनाना 'लोकस्तु भुवने जने' इत्यमर । त्रितय त्रय तस्मिन्नेकोऽद्वितीयो वीरो रावणश्चन्द्रएव शिखामणि शिरोभूषण यस्य स शिवस्तमिन् प्रीतेऽपि प्रसन्नेऽपि निरादरस्सन् शिवस्य प्रसन्नतामगणयन्दशमे मूर्ध्न्यपि शीर्षेऽपि कृपाण चन्द्रहास क्षिपन्प्रहरन् क्ष्माधरस्य हिमाचलस्य राजपुत्र्या राजकन्यया पार्वत्या स्वयमेव धृतो निवारितोऽभूत् ।

## भाषा

तीनो लोको म अद्वितीय वीर रावण, जिसको, शकर के प्रसन्न होने पर भी, उनकी प्रसन्नता की परवाह न कर अपने दसवे सिर पर तलवार चलाने से पार्वती जी ने स्वय रोका था ।

**प्रसाध्य तं रावणमध्युवास यां मैथिलीशः कुलराजधानीम् ।**
**ते क्षत्रियास्तामवदातकीर्तिं पुरीमयोध्यां विदधुर्निवासम् ॥६३॥**

**अन्वयः**

मैथिलीशः तं रावणं प्रसाध्य या कुलराजधानीम् अध्युवास ताम् अवदातकीर्तिम् अयोध्याम् पुरीं ते क्षत्रियाः निवासं विदधुः ।

**व्याख्या**

मैथिल्यास्सीताया ईशः पतिः श्रीरामचन्द्रस्तम्प्रसिद्धं रावणं लङ्केशं प्रसाध्य निहत्य या प्रसिद्धा कुलस्य वंशस्य राजधानी प्रधाननगरं कुलपरम्परागत-राजधानीमित्यर्थः । अध्युवास यस्यां निवासं चकार 'अधिशीङ्स्थासां कर्मेत्या-धारभूताया राजधान्याः कर्मत्वम् । तां प्रसिद्धामवदातां धवलां 'अवदातः सितो गौरोऽवलक्षोधवलोऽर्जुनः' इत्यमरः । कीर्तिर्यशो यस्याः तामयोध्या-मयोध्यानाम्नीं पुरीं, ते क्षत्रियास्तच्चालुक्यवंशीयाः क्षत्रियाः राजानो निवासं निवासस्थानं विदधुश्चक्रुः ।

**भाषा**

उस रावण को मार कर श्री रामचन्द्र ने जिस कुलपरम्परागत राजधानी में निवास किया था, उसी शुभ्रयशवाली अयोध्या नगरी में ये चालुक्यवंशीय क्षत्रिय राजा लोग रहने लगे ।

**जिगीषवः केऽपि विजित्य विश्वं विलासदीक्षारसिकाः क्रमेण ।**
**चक्रुः पदं नागरखण्डचुम्बि-पूगद्रुमायां दिशि दक्षिणस्याम् ॥६४॥**

**अन्वयः**

जिगीषवः के अपि विश्वं विजित्य क्रमेण विलासदीक्षारसिकाः (सन्तः) नागरखण्डचुम्बिपूगद्रुमायां दक्षिणस्यां दिशि पदं चक्रुः ।

**व्याख्या**

जेतुमिच्छवो जिगीषवो विजयेच्छवः केऽपि केचन चालुक्यवंशीयाः राजानो विश्वं सम्पूर्णं भूमण्डलं विजित्य स्वायत्तीकृत्य क्रमेण तदनन्तरं विलासस्य विलासिताया

दीक्षाऽभिनिवेशस्तस्या रसिका आकृष्टमनसस्सन्तो विलासेच्छया मनोविनोदाभिलाषेण नागरखण्डचुम्बिनो नागवल्लीलग्ना पूगद्रुमा क्रमुकवृक्षा यस्या तस्या दक्षिणस्या दिशि पद स्वनिवासस्थान चक्रु रचयामासु ।

### भाषा

इस चालुक्य वश के विजय की इच्छा रखने वाले कुछ राजा लोग सम्पूर्ण जगत् को जीत कर विलासिता के रस मे पडकर, पान की बॅवर से सटकर जहाँ सुपाडी के पेड लगे रहते है, ऐसी दक्षिण दिशा मे राज्य करने लगे।

**तदुद्भवैर्भूपतिभिः सलीलं चोलीरहःसाक्षिणि दक्षिणाब्धेः ।**
**करीन्द्रदन्ताङ्कुरलेखनीभिरलेखि कूले विजय-प्रशस्तिः ॥६५॥**

### अन्वयः

तदुद्भवैः भूपतिभिः चोलीरहस्साक्षिणि दक्षिणाब्धेः कूले करीन्द्रदन्ताङ्कुरलेखनीभिः विजयप्रशस्तिः सलीलम् अलेखि ।

### व्याख्या

तस्माद्दक्षिणचालुक्यवशादुद्भव उत्पत्तिर्येषा तैर्भूपतिभिर्नृपैश्चोलदेशोद्भूताना स्त्रीणा रहस एकान्तविलासस्य साक्षिणि साक्षिभूते दक्षिणाब्धेर्दक्षिणसमुद्रस्य कूले तटे 'कूल रोधश्च तीरञ्च प्रतीरञ्च तट त्रिषु' इत्यमर । करीन्द्राणा महागजाना दन्ता रदना 'रदना दशना दन्तारदा' इत्यमर । तेषामङ्कुरा अग्रिमसूक्ष्मभागा एव लेखन्यस्ताभिर्विजयस्य जयस्य प्रशस्ति प्रशसा सलील सविलास यथास्यात्तथाऽलेखि लिखिता । करीन्द्रदन्ताङ्कुरेषु लेखनीत्वारोपाद्रूपकालङ्कार । तदा दक्षिणाब्धेस्तटे चोलवशीयनृपाणा राज्यमासीदितीतिहास । तेषा महती गजसेनाऽपि प्रसिद्धाऽऽसीत् ।

### भाषा

उस दक्षिण चालुक्य वश मे पैदा भए हुए राजाओ ने चोल-देशीय स्त्रियो के रहस्य पूर्ण विलासो से परिचित दक्षिण सागर के तट पर बडे २ हाथियो के दातो की नोक रूपी कलमो से अपने विजय की प्रशसा खेलवाड मे ही लिख दी। अर्थात हाथी की सेना ले जाकर सबको परास्त करने से वहाँ उनकी कीर्ति फैल गई।

द्वीपक्ष्मापालपरम्पराणां दोर्विक्रमादुत्खननोन्मुखास्ते ।
विष्णोः प्रतिष्ठेति विभीषणस्य राज्ये परं सङ्कुचिता बभूवुः ॥६६॥

अन्वयः

दोर्विक्रमात् द्वीपक्ष्मापालपरम्पराणा उत्खननोन्मुखाः ते विभीषणस्य राज्ये विष्णोः प्रतिष्ठा इति पर सङ्कुचिताः बभूवुः ।

व्याख्या

दोष्णा भुजाना 'भुजबाहू प्रवेष्टो दो इत्यमर । विक्रमात् पराक्रमात् द्वीपाना क्ष्मा पृथ्वी तस्या पाला पालका द्वीपक्ष्मा पालयन्तीति वा तेषा परम्परास्तासामुत्खनने समूलमुन्मूलने उन्मुखास्तत्परास्ते विभीषणस्य राज्ये लङ्काया विष्णो प्रतिष्ठा विभीषणस्य रामभक्तत्वाद्विष्णुसाक्षादवतारस्य रामस्य स्थितिस्तत्र वर्तत इति हेतोस्तस्या पूज्यत्व न तु नाश्यत्वमिति लङ्कापुरीनाशन पर केवल सङकुचिता बभूवुस्तत्र न जग्मुरित्यर्थ । एतेन तेषा राज्ञा विष्णु-भक्तत्व सनातनधर्मित्वञ्च सूचितम् । केवल विभीषणराज्यद्वीप विहाय सर्वे द्वीपास्तै स्वायत्तीकृता इति भाव । एतेन लङ्कात पूर्व सकलोऽपि भूभा-गस्तैर्विजित आसीदिति सूच्यते ।

भाषा

अपनी भुजा के पराक्रम से टापुओ के राजाओ को नष्ट कर देने मे प्रवृत्त ये दक्षिण चालुक्यवशीय राजा, लङ्का मे रामभक्त विभीषण के राज्य मे श्री रामचन्द्र की स्थिति है ऐसा सोचकर केवल उसपर आक्रमण करने मे अग्रसर न हुए । अर्थात् केवल विभीषण के टापू लका का छोडकर अन्य सब टापुओ को उन्होने जीत लिया ।

द्वीपेषु कर्पूरपरागपाण्डु-ष्वास्वाद्य लीलापरिवर्तनानि ।
भ्रान्त्या तुषाराद्रितटे लुठन्तः शीतेन खिन्नास्तुरगा यदीयाः ॥६७॥

अन्वय.

यदीयाः तुरगा. कर्पूरपरागपाण्डुषु द्वीपेषु लीलापरिवर्तनानि आस्वाद्य तुषाराद्रितटे भ्रान्त्या लुठन्तः शीतेन खिन्नाः ।

### व्याख्या

येषामिमे इति यदीया यन्नृपसम्बन्धिनस्तुरगा अश्वा कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुषु शुक्लेषु द्वीपेषु लीलया क्रीडया परिवर्तनानि परिभ्रमणान्यास्वाद्याऽनुभूय, भूमावुपविश्य परिश्रान्तिनिरासायाऽङ्गानिप्रसार्य धूलिधूसरास्सन्तोऽङ्गत्रोटनानि वाऽनुभूय कृत्वा तुषाराद्रितटे हिमाचलप्रान्ते (शुक्लवर्णद्वीपस्य) भ्रान्त्या कर्पूरद्वीप-भ्रमेण लुठन्तश्चलन्त परिश्रान्तिनिवारणायाऽङ्गपरिवर्तन कुर्वन्तो वा सन्त शीतेन शैत्येन खिन्ना दुःखिता बभूवु । तुषाराद्रितटे कर्पूरवच्छुभ्रवर्णद्वीप भ्रान्तिनिरूपणाद्भ्रान्तिमानलङ्कार । 'साम्यादतस्मिस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थित ।' एतेन हिमाचलपर्यन्तमेतेषा विजय सूच्यते ।

### भाषा

इन राजाओ के घोडे, कपूर के चूर्ण के समान सफेद कर्पूर द्वीप के टापुओ मे टहलने का सौख्य प्राप्त कर या थकावट हटाने के लिये लोटपोट करने का सौख्य प्राप्त कर, उमी भ्रम से बरफ मे ढके हुए सफेद हिमालय पर्वत पर चलने से या लोटने से शीत से बहुत पीडित हुए ।

**इतः पर षड्भिः श्लोकैस्तैलपं नृपं वर्णयति—**

**श्रीतैलपो नाम नृपः प्रतापी क्रमेण तद्वंशविशेषकोऽभूत् ।**
**क्षणेन यः शोणितपङ्कशेषं संख्ये द्विषां वीररसश्चकार ॥६८॥**

### अन्वयः

यः सख्ये द्विषा वीररस क्षणेन शोणितपङ्कशेप चकार ( एवम्भूतः ) श्री तैलपः नाम प्रतापी नृपः क्रमेण तद्वशविशेषकः अभूत् ।

### व्याख्या

य सख्ये युद्धे 'मृधमास्कन्दन सख्य समीक साम्परायिकम्' इत्यमर । द्विषा शत्रूणाम् 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रव' इत्यमर । वीररसमुत्साह जलञ्च क्षणेनाऽल्पकालेन शोणितस्य रुधिरस्य पङ्क कर्दम एव शेषोऽवशिष्टाशो यस्य त चकार प्रकटयाञ्चकारैवम्भूत श्री तैलपो नाम प्रतापी प्रभाववान्नृपो राजा क्रमेण क्रमश स चाऽसौ वशश्च तद्वशस्तस्य विशेषकस्तिलकोऽभूत् । "तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमर । यस्य प्रतापोष्मणा वीररसरूपे जले शोषिते रुधिरपङ्कमेवाऽवशिष्टमिति भाव. ।

### भाषा

क्रम से उस वश का तिलकरूप प्रतापी श्री तैलप नाम का राजा हुवा, जिसने युद्ध मे देखते २ शत्रुओ के वीररस रूपी जल को अपने प्रताप की गर्मी से सुखा कर खून के कीचड के रूप मे परिणत कर दिया। अर्थात् शत्रुओ की वीरता नष्ट करते हुए युद्धभूमि को खून से भर दिया।

**विश्वम्भराकण्टकराष्ट्रकूट-समूलनिर्मूलनकोविदस्य ।**
**सुखेन यस्यान्तिकमाजगाम चालुक्यचन्द्रस्य नरेन्द्रलक्ष्मीः ॥६९॥**

### अन्वय

नरेन्द्रलक्ष्मीः विश्वम्भराकण्टकराष्ट्रकूटसमूलनिर्मूलनकोविदस्य चालुक्यचन्द्रस्य यस्य अन्तिक सुखेन आजगाम।

### व्याख्या

नरेन्द्राणा प्रतिपक्षभूपाना लक्ष्मी राज्यश्रीर्विश्वम्भराया भूमे कण्टकभूत कष्टदायको यो राष्ट्रकूटस्तन्नाम-राजवशस्तस्य समूल यथास्यात्तथा निर्मूलने विनाशकरणे कोविदो निपुणस्तस्य चालुक्यचन्द्रस्य चालुक्यवशे चन्द्रोपमस्य यस्य श्रीतैलपस्याऽन्तिक समीप सुखेन प्रेम्णाऽऽजगाम प्राप्ता। राष्ट्रकूटराजवशे नष्टे सति तस्य राज्यश्रीरेन वृतवती।

### भाषा

पृथ्वी पर कण्टक रूप राठोर वश के राजाओ को समूलनष्ट करने मे प्रवीण, चालुक्य वश के चन्द्ररूप उस तैलप राजा के पास विपक्षी राजाओ की राज्यश्री सुख से आ गई।

**शौर्योष्मणा स्विन्नकरस्य यस्य संख्येषु खड्गः प्रतिपक्षकालः ।**
**पुरन्दरप्रेरितपुष्पवृष्टि-परागसङ्गान्निबिडत्वमाप ॥७०॥**

### अन्वय.

संख्येषु शौर्योष्मणा स्विन्नकरस्य यस्य प्रतिपक्षकालः खड्गः पुरन्दरप्रेरितपुष्पवृष्टिपरागसङ्गात् निबिडत्वम् आप।

**व्याख्या**

सख्येषु युद्धेषु शूरस्य भाव शौर्य तद्रूपेणोष्मणा पराक्रमोष्मणा स्विन्न स्वेदेनार्द्र करो हस्तो यस्य तस्य यस्य श्री तैलपस्य प्रतिपक्षाणा शत्रूणा काल यमरूपो नाशकरखड्ग पुरन्दरेणेन्द्रेण 'पुरुहूत पुरन्दर' इत्यमर । प्रेरिता कृता या पुष्पाणा कुसुमाना वृष्टिर्वर्ष तस्या परागस्य सुमनोरजस 'पराग सुमनोरज' इत्यमर । सङ्गात्सम्पर्कान्निबिडत्व घनत्वमाप प्राप। परागसम्पर्कात्खड्गे स्वेदजलार्द्रत्वस्य निवारणाद्दृढतया हस्तेन खड्गधारण जातमत खड्गहस्तयोर्विरलसम्बन्धस्याभावाद् घनसम्बन्धो जात इति भाव । शौर्य ऊष्माभेदात्खड्गे प्रतिपक्षकालाभेदाच्च रूपकम् ।

**भाषा**

युद्धो मे पराक्रमरूपगर्मी से, पसीने से भरे हाथ वाले राजा का, शत्रुओ का कालरूप खड्ग, इन्द्र द्वारा की हुई पुष्पवृष्टि के पराग के सम्बन्ध से गाढापन आ जाने से, हाथ मे अधिक दृढ हो गया। अर्थात् हाथ मे पसीना आ जाने से कोई बस्तु दृढता से नही पकडी जा सकती। मिट्टी लगा लेने से फिर दृढता आ जाती है।

**यस्याञ्जनश्यामलखड्गपट्ट-जातानि जाने धवलत्वमापुः ।**
**अरातिनारीशरकाण्डपाण्डु-गण्डस्थलीनिर्लुठनाद्यशांसि ॥७१॥**

**अन्वयः**

यस्य अञ्जनश्यामलखड्गपट्टजातानि यशासि अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठनात् धवलत्वम् आपुः (इति) जाने ।

**व्याख्या**

यस्य राज्ञस्तैलपस्याऽञ्जनवत्कज्जलवच्छ्यामल कृष्ण खड्ग एव पट्टस्तस्माज्जातानि प्रादुर्भूतानि यशासि कीर्तय अरातीना शत्रूणा नार्य स्त्रियस्तासा शरकाण्डवत् गुन्द्रदण्डवत् 'गुन्द्रस्तेजनक शर' इत्यमर । 'सरहरी' इति भाषाया प्रसिद्धम् । पाण्डुवर्णा श्वेता गण्डस्थल्य कपोलास्तासु निर्लुठनात्सम्पर्काद्धवलत्व शुक्लत्वमापुर्जग्मु । इति जाने तर्कयामि । अञ्जनेन सह खड्गस्य श्यामलत्वेन सादृश्य दर्शनाद्गण्डस्थल्या पाण्डुत्वेन शरकाण्डेन सादृश्याच्चोपमा ।

**भाषा**

जिस राजा तैलप के कज्जल के समान काली तलवार रूपी पट्टी से समुत्पन्न यश, शत्रुओ की स्त्रियो के सरहरी के डण्डे के समान मफेद पडे हुवे कपोलस्थलो के सम्पर्क से श्वेतवर्ण हो गये थे—ऐसा में समझता हूँ। अर्थात् काले रङ्ग के खड्ग से शुभ्रवर्ण यश की उत्पत्ति असम्भव है। इसलिये यह यश का श्वेतवर्ण शत्रुओ की स्त्रियो के सफेद पड गए हुए गण्डस्थलो की सफेदी के सम्बन्ध से प्राप्त हुआ होगा ऐसा मै समझता हूँ।

**स्फूर्जद्यशोहंसविलासपात्रं निस्त्रिंशनीलोत्पलमुत्प्रभं यः।**
**उत्तंसहेतोरिव वीरलक्ष्म्याः संग्रामलीलासरसश्चकर्ष ॥७२॥**

**अन्वयः**

यः संग्रामलीलासरसः स्फूर्जद्यशोहसविलासपात्रम् उत्प्रभं निस्त्रिश-नीलोत्पलं वीरलक्ष्म्याः उत्तसहेतोः इव चकर्ष।

**व्याख्या**

य श्रीतैलप सग्रामो युद्धमेव लीलासर क्रीडातडागस्तस्मात्स्फूर्जत् प्रवर्धमान यश एव हसस्तस्य विलासपात्र क्रीडास्थानमुत्कृष्टा प्रभा कान्तिर्यस्य तदुत्प्रभ निर्गतस्त्रिशद्भ्योऽङ्गुलिभ्य इति निस्त्रिश खड्ग एव नीलोत्पल नीलकमल वीराणा लक्ष्मी श्रीस्तस्या उत्तसहेतोरिव कर्णपूररचनार्थमिव चकर्ष कृष्टवान्। 'उत्तसावतसौ द्वौ कर्णपूरे च शेखरे' इत्यमर। सग्रामे लीलासरोभेद। यशसि हसाभेद, शुक्लत्व साम्यात्। एतावुभावभेदौ निस्त्रिशाभेदापन्न-नीलोत्पले हसविलासपात्रत्वारोपे कारणत्वेन परिगृहीताविति परम्परित-रूपकम्। खड्ग-कर्षणे लक्ष्म्या उत्तसकरणस्य हेतुत्वेनोत्प्रेक्षणाद्धेतूत्प्रेक्षा।

**भाषा**

जिस राजा तैलप ने युद्धभूमि रूपी क्रीडासर के फैलने वाले यश रूपी हस के क्रीडास्थान भूत चमकने वाले खड्गरूपी नीलकमल को मानो वीर लक्ष्मी के शिरोभूषण बनाने के लिये खीचा। अर्थात जिस प्रकार क्रीडावापी से हस को आनन्दित करने वाले चमकदार नीले कमल को निकाल कर कोई अपनी प्रेयसी को भूषित करता है उसी प्रकार युद्ध भूमि से फैलने वाले यश के विला-सस्थानरूप चमकने वाले खड्ग को वीरता की शोभा के लिये उसने खीचा।

विधाय सैन्यं युधि साक्षिमात्रं दासीकृतायाः प्रतिपक्षलक्ष्म्याः ।
यः प्रातिभाव्यार्थमिवाजुहाव महाभुजः शत्रुनरेन्द्रकीर्तिम् ॥७३॥

### अन्वयः

महाभुजः यः युधि सैन्यं साक्षिमात्रं विधाय दासीकृतायाः प्रतिपक्ष-लक्ष्म्याः प्रातिभाव्यार्थम् इव शत्रुनरेन्द्रकीर्तिम् आजुहाव ।

### व्याख्या

महान् भुजो बाहुर्यस्य स दीर्घबाहुर्यस्तैलपो नाम नृपो युधि युद्धे सैन्य सेना साक्षिमात्र विधाय केवल साक्षितामापाद्य स्वयमेव दासीकृताया वशीकृताया प्रतिपक्षाणा शत्रूणा लक्ष्म्या श्रिय प्रतिभू प्रतिलग्नक (जामिन इति भाषायाम्) तस्य भाव प्रातिभाव्य तदर्थ शत्रवश्चते नरेन्द्राश्च राजानस्तेषा कीर्तिर्यश आजुहा-वाऽऽहूतवान् । शत्रुनरेन्द्रकीर्तेराह्वाने प्रातिभाव्यस्य फलत्वेनोत्प्रेक्षणादुत्प्रेक्षा ।

### भाषा

उस तैलप राजा ने युद्ध मे सेना को केवल साक्षिमात्र बना कर स्वय अपने पराक्रम से शत्रुओ की राजलक्ष्मी को दासी बनाकर उसकी जमानत करने के लिये विपक्षी राजाओ की कीर्ति को अपने पास बुला लिया । अर्थात् शत्रुओ की राजलक्ष्मी के साथ ही उनकी कीर्ति भी छीन ली ।

अथ पञ्चभिः श्लोकैः सत्याश्रयं वर्णयति कविः—

चालुक्यवंशामलमौक्तिकश्रीः सत्याश्रयोऽभूदथ भूमिपालः ।
खड्गेन यस्य भ्रुकुटिक्रुधेव द्विषां कपालान्यपि चूर्णितानि ॥७४॥

### अन्वयः

अथ यस्य भ्रुकुटिक्रुधा इव खड्गेन द्विषा कपालानि अपि चूर्णितानि (सः) चालुक्यवंशामलमौक्तिकश्रीः सत्याश्रयः भूमिपालः अभूत् ।

### व्याख्या

अथ श्री तैलपानन्तर यस्य राज्ञो भ्रुकुटे क्रुद् तेनेव भ्रुकुटि-प्रदर्शित-क्रोधरू-पधारिणा खड्गेनाऽसिना द्विषा शत्रूणा कपालान्यपि शिरास्यपि चूर्णितानि चूर्णी-

कृतानि स चालुक्यस्य वश कुलमेव वशोवेणुस्तस्याऽमल विशुद्ध मौक्तिक तस्य श्री शोभा यस्मिन्स सत्याश्रयो नाम भूमिपालो राजाऽभूत् । खड्गोपरि भ्रुकुटि-क्रोधस्योत्प्रेक्षणाद्वस्तूत्प्रेक्षा । वशे वेणुत्वारोपो राजनि मौक्तिकत्वारोपे कारण-मिति परम्परितरूपकम् ।

## भाषा

श्री तैलप राजा के अनन्तर चालुक्य कुल मे बास के स्वच्छ मोती की कान्ति के समान तेजस्वी सत्याश्रय नाम का राजा हुवा जिसकी क्रुद्धावस्था की भ्रुकुटी के क्रोध स्वरूप तलवार ने शत्रुओ के मस्तको को भी चूर २ कर दिया ।

**यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः ।**
**गृहीतदीपा इव विन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥७५॥**

## अन्वयः

संयुगयामिनीषु यस्य प्रोतप्रतिक्ष्मापतिमौलिरत्नाः इषवः गृहीतदीपाः इव खड्गान्धकारे रिपुचक्रवाल विन्दते स्म ।

## व्याख्या

सयुगा युद्धान्येव यामिन्यो रात्रयस्तासु युद्धरात्रिषु 'सप्रहाराभि-सम्पातकलि सस्फोटसयुगा' इत्यमर । यस्य राज्ञ सत्याश्रयस्य प्रोतान्यनुस्यूतानि प्रतिक्ष्मा-पतीना प्रतिपक्षभूपतीना मौलिना मुकुटाना रत्नानि मणयो येषु त इषवो बाणा गृहीता दीपा यैस्ते गृहीत-दीपा इव, बाणेषु शत्रूणा शिरोरत्नान्यनुस्यूतानि, रत्नकिरणैश्चान्धकाराभाव । खड्ग एवाऽन्धकार श्यामलत्वात्तस्मिन् रिपूणा शत्रूणा चक्रवाल मण्डलम् । 'चक्रवालन्तु मण्डलम्' इत्यमर । विन्दते स्म जानन्ति स्म अथवा विचारयन्ति स्म 'विद विचारणे' इति रुधादिस्थस्य विद धातोरात्मने पदे लटि प्रथमपुरुषस्य बहुवचने 'विन्दते' इति रूपम् । अनुस्यूत-राजमौलिरत्नेषु बाणेषु गृहीतदीपकस्य सम्भावनादुत्प्रेक्षा ।

## भाषा

युद्धरूपी रात्रियो मे, उस सत्याश्रय राजा के, विपक्षी राजाओ के मस्तक के मणियो से नथे बाण, खड्गरूपी अन्धकार मे शत्रु समूह की, मानो दीपक लेकर पहचान कर रहे थे । अर्थात् उसके बाण इतने तीखे थे कि मणियो मे भी छिद्र कर देते थे और वे मणी उनमे नथ जाते थे ।

अवन्ध्यपातानि रणाङ्गणेषु सलीलमाकृष्टधनुर्गुणस्य ।
यस्यानमत्कोटितया व्यराज-दस्त्राणिचुम्बन्निव चापदण्डः ॥७६॥

अन्वयः

रणाङ्गणेषु सलीलम् आकृष्टधनुर्गुणस्य यस्य चापदण्डः आनमत्कोटि-तया अवन्ध्यपातानि अस्त्राणि चुम्बन् इव व्यराजत् ।

व्याख्या

रणा एव युद्धान्येवाऽङ्गणान्यजिराणि 'अङ्गण चत्वराजिरे' इत्यमर । तेषु युद्धाजिरेषु लीलया विलासेन सहित सलीलमाकृष्टो धनुषश्चापस्य गुणो ज्या येन स तस्य यस्य सत्याश्रयनृपस्य चापदण्डो धनुर्दण्ड 'धनुश्चापौ धन्वशरासन कोदण्डकार्मुकम्' इत्यमर । आसमन्तान्नमन्त्यौ कोटी प्रान्तभागौ 'स्त्रिय पाल्यश्रिकोटय' इत्यमर । यस्य तस्य भावस्तत्ता तया प्रव्हीभूताग्रतयाऽवन्ध्योऽ-मोघ पातो घातो येषा तानि सफलसञ्चलनान्यस्त्राणि चुम्बन्निव प्रेम्णा स्पृशन्निव रराज शुशुभे । चापदण्डेऽस्त्रचुम्बनरूप क्रियाया उत्प्रेक्षणा-त्क्रियोत्प्रेक्षा ।

भाषा

युद्धरूपी आगनो मे सरलता से धनुष की डोरी को खीचने वाले उस सत्याश्रय राजा का धनुष दोनो नोको के झुक आने से मानो अमोघ मार वाले अस्त्रो का चुम्बन करता हुआ शोभित होता था ।

भूभृत्सहस्रार्पितदेहरन्ध्रैः [१]क्रौञ्चाचलच्छिद्रविशारदानाम् ।
सेहे न गर्वः पृथुसाहसस्य यस्येषुभिर्भार्गवमार्गणानाम् ॥७७॥

अन्वयः

पृथुसाहसस्य यस्य भूभृत्सहस्रार्पितदेहरन्ध्रैः इषुभिः क्रौञ्चाचलच्छिद्र-विशारदाना भार्गवमार्गणानां गर्वो न सेहे ।

---

[१] हसद्वार भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रमिति मेघदूते कालिदास ।

**व्याख्या**

पृथुर्विशालस्साहस पराक्रमो यस्य तस्य यस्य राज्ञ सत्याश्रयस्य भूभृता राज्ञा पक्षे पर्वताना सहस्राणि तेभ्योऽर्पितानि दत्तानि देहेषु शरीरेषु रन्ध्राणि-च्छिद्राणि यैस्तैरिषुभिर्बाणैः क्रौञ्चाचलस्य क्रौञ्चपर्वतस्य छिद्रे बिले बिलकरणे वा विशारदा निपुणास्तेषा भार्गवस्य परशुरामस्य मार्गणा बाणास्तेषा गर्वो दर्पो 'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नति । दर्पोऽपलेपोऽवष्टम्भश्चित्तोद्रेक स्मयो मद ' इत्यमर । न सेहे न सोढ । भार्गवेण केवलमेकस्मिन्क्रौञ्चभूभृति च्छिद्र कृतमनेन तु बहुषु भूभृत्स्वति भार्गवादस्य वैशिष्ट्यम् । तस्माद्व्यति-रेकध्वनि ।

**भाषा**

उस बडे साहसी राजा सत्याश्रय के हजारो भूभृतो (राजाओ) पक्ष मे (पहाडो) के शरीरा मे छिद्र करने वाले बाणो ने क्रौञ्च भूभृत् (पर्वत) मे छिद्र करने मे प्रवीण परशुराम के बाणो का घमण्ड नही सहन किया । अर्थात् परशुराम के बाणो न केवल एक क्रौच पर्वत मे छेद किया था किन्तु इसके बाणो ने हजारो भूभृतो (राजाओ) को छेदा था इसलिए इनका कार्य उनसे अधिक महत्व का था ।

**दृप्तारिदेहे समरोपमर्द-सूत्रावशेषस्थितहारदाम्नि ।**
**यज्ञोपवीतभ्रमतो बभूव यस्य प्रहर्तुः क्षणमन्तरायः ॥७८॥**

**अन्वयः**

प्रहर्तुः यस्य समरोपमर्दसूत्रावशेषस्थितहारदाम्नि दृप्तारिदेहे यज्ञो-पवीतभ्रमतः क्षणम् अन्तरायः बभूव ।

**व्याख्या**

प्रहर्तु प्रहार कुर्वतो यस्य राज्ञ सत्याश्रयस्य समरे रणे 'अस्त्रिया समरानी-करणा कलहविग्रहौ' इत्यमर । य उपमर्दो जनाना परस्परसघट्टस्तेन सूत्रमेव तन्तुरेवावशेषस्थितो मौक्तिकादीना भग्नत्वात्सूत्रमेवाऽवशिष्ट यस्यैवम्भूत हार एव दाम माला यस्मिन् तस्मिन् दृप्ता मदान्धा अरय शत्रवस्तेषा देहे शरीरे यज्ञो-पवीतस्य भ्रमतो भ्रान्त्याऽय यज्ञोपवीती ब्राह्मण किमिति धिया, क्षण क्षणमात्र-

मन्तरायो विघ्नोऽभूत् । 'विघ्नोन्तराय प्रत्यूह' इत्यमर । हारसूत्रे यज्ञोपवीतस्य भ्रान्तिप्रतिपादनाद् भ्रान्तिमानलङ्कार ।

### भाषा

प्रहार करने वाले उस सत्याश्रय राजा को, युद्ध की धिगाधिगी मे मोती के हार मे से मोतियो के टूटकर गिर पडने से केवल डोरा मात्र अवशेष धारण करने वाले मदान्ध शत्रुओ के शरीर पर वार करने मे, यह डोरा ब्राह्मणो का यज्ञोपवीत तो नही है, इस भ्रम से क्षणमात्र के लिए रुकावट हो जाया करती थी । अर्थात् यह ब्राह्मण तो नही है ऐसा भ्रम हो जाता था ।

अथाऽष्टभिः श्लोकैर्जयसिंहदेवं वर्णयति कविः—

**प्राप्तस्ततः श्रीजयसिंहदेवश्चालुक्यसिंहासनमण्डनत्वम् ।**
**यस्य व्यराजन्त गजाहवेषु मुक्ताफलानीव करे यशांसि ॥७६॥**

### अन्वयः

ततः यस्य गजाहवेषु यशासि करे मुक्ताफलानि इव व्यराजन्त, (सः) श्री जयसिंहदेवः चालुक्यसिंहासनमण्डनत्व प्राप्तः ।

### व्याख्या

तत सत्याश्रयानन्तर यस्य राज्ञो गजाना हस्तिनामाहवा सग्रामास्तेषु 'अभ्यामर्दसमाघात सग्रामाभ्यागमाहवा' इत्यमर । यशासि कीर्तय करे हस्ते मुक्ताफलानीव गजमौक्तिकानीव व्यराजन्त विरेजु सुशोभितानिजातानीत्यर्थ । स श्रीजयसिंहदेवस्तन्नामा राजा चालुक्याना चालुक्यवशीयाना राज्ञा सिहासन तस्य मण्डनत्व शोभाविधायकत्व प्राप्त । तत्सिहासनस्यालङ्कारभूतो जात इत्यर्थ । शुक्लवर्णसादृश्याद्यशस्सु मुक्ताफलत्वस्योत्प्रेक्षणादुत्प्रेक्षा ।

### भाषा

राजा सत्याश्रय के अनन्तर श्री जयसिंह देव ने चालुक्य वशीय राजाओ की राजगद्दी को सुशोभित किया, जिसके, हाथी की सेना के युद्ध मे प्राप्त यश मानो हाथ मे पहिने हुवे गजमौक्तिक के समान शोभित होते थे ।

**यस्य प्रतापेन कदर्थ्यमानाः प्रत्यर्थिभूपालमहामहिष्यः ।**
**अन्वस्मरंश्चन्दनपङ्किलानि प्रियाङ्कपालीपरिवर्तनानि ॥८०॥**

**अन्वयः**

यस्य प्रतापेन कदर्थ्यमानाः प्रत्यर्थिभूपालमहामहिष्यः चन्दनपङ्किलानि प्रियाङ्कपालीपरिवर्तनानि अन्वस्मरन् ।

**व्याख्या**

यस्य राज्ञो जयसिहदेवस्य प्रतापेन प्रभावेण कदर्थ्यमाना पीडिता प्रत्यर्थिन प्रतिपक्षाश्चते भूपाला राजान 'द्विड्विपक्षाहितामित्र दस्यु शात्रव शत्रव । अभिघाति पराराति प्रत्यर्थि परिपन्थिन' इत्यमर । तेषा महा-महिष्य कृताभिषेका स्त्रियश्चन्दनेन पङ्किलानि पङ्क कर्दमस्सञ्जात एषु इति पङ्किलानि चन्दनकर्दमयुक्तानि प्रियाणा स्वपतीनामङ्कपालीष्वङ्कश्रेणिषु परिवर्तनानि तत्र स्वाङ्ग-परिवर्तन-जनित-सुखान्यन्वस्मरन् । साम्प्रत प्रतापोष्मणा सन्तप्ता अरिमहिष्यो भूतकालिकचन्दनपङ्कलिप्तस्वपत्यङ्कशैत्यानुभव-सुख स्मरन्ति स्मेत्यर्थ । महिषीशब्दस्य श्लिष्टत्वाद्यथा महिष्यो निदाघे शैत्यार्थं पङ्के लुठन्ति तथैवैता राजस्त्रिय पराजयात्पूर्व शैत्यार्थं स्वपत्यङ्क-लिप्तचन्दन-पङ्केषु लुठन्ति स्मेति । चिन्तामूलकस्य स्मरणस्य सद्भावान्न स्मरणालङ्कार । यत सादृश्य-मूलकस्यैव तस्याऽलङ्कारत्वम् ।

**भाषा**

जिस राजा जय सिह देव के प्रताप की गर्मी से सतप्त विपक्षी राजाओ की रानियाँ ठडक पाने की इच्छा से अपने प्रिय पति के चन्दन से लिप्त गीली गोदो मे पडकर करवटे लेने का स्मरण करती थी । (गर्मी मे जैसे भैसे किचडो मे लोट पोट करना पसन्द करती है वैसे ये रानियाँ भी गर्मी मे अपने पतियो की चन्दन के अधिक लेप से गीली गोदो मे ठढक पाने के लिये लोट पोट किया करती थी । परन्तु अब पतियो के मर जाने मे ये रानियाँ इस राजा की प्रताप की गर्मी से सतप्त होकर उसका केवल स्मरण करती थी । (महिषी शब्द के श्लिष्ट होने से यह अर्थ निकलता है । महिषी माने रानी तथा भैस ।)

**प्रतापभानौ भजति प्रतिष्ठां यस्य प्रभातेष्विव संयुगेषु ।**
**सूर्योपलानामिव पार्थिवानां केषां न तापः प्रकटीबभूव ॥८१॥**

### अन्वय

प्रभातेषु इव सयुगेषु यस्य प्रतापभानौ प्रतिष्ठा भजति (सति) सूर्योप-लानाम् इव केषा पार्थिवाना तापः न प्रकटीबभूव ।

### व्याख्या

प्रभातेषु प्रत्यूषेषु 'प्रत्यूषोऽहर्मुख कल्यमुष प्रत्युषसी अपि प्रभात' चेत्यमर । इव सयुगेषु युद्धेषु यस्य राज्ञो जयसिहदेवस्य प्रताप एव भानुस्सूर्यस्तस्मिन् प्रतिष्ठा भजति विद्योतमाने सति सूर्योपलानामिव सूर्यकान्तमणीनामिव केषा पार्थिवाना विपक्षिनृपाणा तापस्सन्ताप सज्वलन न प्रकटीबभूव किन्तु समेषा विपक्षिणा सन्तापो जात एव । अत्र प्रतापे भानुत्वारोपाद्रूपकम् । प्रभात सयुगयो सूर्योपलपार्थिवयोश्चोपमा । केषा न प्रकटीबभूवेत्यर्थापत्तिश्चेति परस्परसापेक्षत्वादेतेषा सङ्कर ।

### भाषा

प्रात काल के सदृश युद्ध मे, सूर्य के सदृश उस राजा जयसिहदेव के प्रताप के विद्यमान होने पर सूर्य मणियो के समान किन राजाओ मे सन्ताप प्रकट न हुवा । अर्थात् सब राजा इसके प्रताप से सन्तप्त हो गये ।

**यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री ।**
**आर्द्रव्रणाधिष्ठितपृष्ठपीठ-मकर्मठं कूर्मपतिं चकार ॥८२॥**

### अन्वयः

यस्य यात्रासु ध्वजिनीभरेण दोलायमाना सकला धरित्री आर्द्रव्रणा-धिष्ठितपृष्ठपीठ कूर्मपति अकर्मठं चकार ।

### व्याख्या

यस्य राज्ञो जयसिहदेवस्य यात्रासु युद्धयात्रासु ध्वजिन्या सेनाया 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू' इत्यमर । भरेण भारेण दोला इवाऽऽ-चरतीति दोलायमाना सञ्चालिता सकला समग्रा 'समग्र सकल पूर्णम्' इत्यमर ।

धरित्री पृथ्व्याऽऽर्द्रव्रणेन पृथिवी-सञ्चलनजन्य-सङ्घर्षणोत्पन्ननूतनव्रणेनाऽधिष्ठित युक्त पृष्ठपीठ पृष्ठभागो यस्य त कूर्माणा पति श्रेष्ठ विष्णुद्वितीयावतार पृथिव्या आधारभूतेन स्थित कच्छपपतिमकर्मठ निष्क्रिय 'कर्मशूरस्तु कर्मठ' इत्यमर । कि-कर्तव्यता-विमूढ चकार कृतवती ।

### भाषा

जिस राजा जयसिहदेव की युद्धयात्राओ मे, चली सेना के बोझे से डगमगाने वाली समग्र पृथ्वी ने, (अपनी रगड से उत्पन्न) ताजे घावो से भरी पीठवाले विष्णु भगवान् के दूसरे अवतार कच्छपराज को घबडाहट मे डाल दिया ।

**किरीटमाणिक्यमरीचिवीचि-प्रच्छादिता यस्य विपक्षभूपाः ।**
**चिताग्निभीत्या समराङ्गणेषु न संगृहीताः सहसा शिवाभिः ॥८३॥**

### अन्वयः

यस्य किरीटमाणिक्यमरीचिवीचिप्रच्छादिताः विपक्षभूपाः समराङ्गणेषु शिवाभिः चिताग्निभीत्या सहसा न सगृहीताः ।

### व्याख्या

यस्य राज्ञ', किरीटेषु मुकुटेषु माणिक्यानि मणयस्तेषा मरीचीना किरणाना वीचिभिस्तरङ्गै प्रच्छादिता आवृता विपक्षभूपा विपक्षनृपा समराङ्गणेषु युद्ध-भूमिषु शिवाभि शृगालीभि देदीप्यमानत्वाच्चिताग्निभीत्या चिताग्निबुद्धया भयेन सहसा झटिति न सगृहीता न भक्षणार्थं परिगृहीता । माणिक्यमरीचिषु चिताग्निप्रतिपादनाद्भ्रान्तिमानलङ्कारो व्यङ्ग्य ।

### भाषा

किरीट मे लगे हुए मणियो की किरणो की लहरो से आच्छादित, उस जयसिह देव राजा के विपक्षी मृत राजाओ को, युद्धभूमि मे सियारियो ने, उस चमक को चिता की आग समझ कर, डर से शीघ्र ग्रहण नही किया अर्थात नही खाया ।

**यात्रासु दिक्पालपुरीं विलुण्ठ्य न दिग्गजान्केवलमग्रहीद्यः ।**
**पलायितास्ते जयसिन्धुराणां गन्धेन सप्तच्छदबान्धवेन ॥८४॥**

### अन्वय

यः यात्रासु दिक्पालपुरीं विलुण्ठ्य दिग्गजान् केवल न अग्रहीन्। (यतः) ते जयसिन्धुराणां सप्तच्छदबान्धवेन गन्धेन पलायिताः।

### व्याख्या

यो नृपो जर्यासह देवो यात्रासु युद्धयात्रासु दिक्पालाना दिगीशाना पुरी नगरी, अत्र वचनमविवक्षितम्। विलुण्ठ्य लुण्ठयित्वा दिग्गजान् केवल नाऽग्रहीत्। दिग्गजान्विहाय सर्वाणि वस्तुजातान्यग्रहीदित्यर्थ । यतस्ते दिग्गजा जयसिन्धुराणा विजयहस्तिना सप्तच्छदस्य वृक्षविशेषस्य 'सप्तपर्णो विशालत्वक् शारदो विषमच्छद' इत्यमर । बान्धवस्समानस्तेन गन्धेन मदगन्धेन पलायिता कान्दिशीका जाता । जयसिन्धुराणा मदगन्धसहनेऽसमर्था दिग्गजा दूरत एव पलायिता इति भाव ।

### भाषा

वह राजा अपनी दिगन्त युद्ध यात्राओ मे दिक्पालो की पुरियो को लूटकर केवल दिग्गजो को नही पा सका। क्योकि वे दिग्गज इस राजा के विजयी हाथियो के सप्तपर्ण वृक्ष के समान गन्धवाले मद की गन्ध से डरकर भाग गये थे।

**अपारवीरव्रतपारगस्य पराङ्मुखा एव सदा विपक्षाः।**
**अधिज्यचापस्य रणेषु यस्य यशः परं सम्मुखमाजगाम ॥८५॥**

### अन्वयः

अपारवीरव्रतपारगस्य अधिज्यचापस्य यस्य रणेषु विपक्षाः सदा पराङ्मुखाः एव पर यशः सम्मुखम् आजगाम।

### व्याख्या

अपार दुर्गम यत् वीराणा व्रत तस्य पार गच्छतीत्यपारवीरव्रतपारगस्तस्य पूर्णवीरव्रतधारिणो ज्यामधिगत इति अधिज्यश्चापो धनुर्यस्य स तस्य यस्य राज्ञो जर्सासहदेवस्य रणेषु युद्धेषु विपक्षा शत्रवस्सदा नित्य पराङमुखा एव जाता पराजिता एवेति न सम्मुखा जाता इति भाव । पर किन्तु यश कीर्ति सम्मुखमाजगाम। केवल कीर्तिस्तु सम्मुखा शत्रवस्तु पराङमुखा एव।

### भाषा

युद्धक्षेत्र मे असीम वीरव्रत मे पारङ्गत, चढी कमानवाले धनुष को धारण करने वाले उस राजा के सामने से शत्रु लोग पराङ्मुख होते थे किन्तु कीर्ति उसके सम्मुख आती थी ।

**यशोवतंसं नगरं सुराणां कुर्वन्नगर्वः समरोत्सवेषु ।**
**न्यस्तां स्वहस्तेन पुरन्दरस्य यः पारिजातस्रजमाससाद ॥८६॥**

### अन्वयः

समरोत्सवेषु अगर्वः यः सुराणा नगरं यशोवतंसं कुर्वन् पुरन्दरस्य स्वहस्तेन न्यस्ता पारिजातस्रज आससाद ।

### व्याख्या

समरा रणा 'अस्त्रिया समरानीक-रणा कलहविग्रहौ' इत्यमर । एवोत्स-वास्तेष्वगर्वो दर्परहितो यो जयसिहदेव सुराणा देवाना नगरममरावतीसज्ञक यश एवावतस शिरोभूषण यस्य 'उत्तसावतसौ द्वौ कर्णपूरे च शेखरे' इत्यमर । तम् कुर्वन् सम्पादयन्, स्वर्गपर्यन्त यशोविस्तृतमिति भाव । पुरन्दरस्येन्द्रस्य स्वहस्तेन निजकरेण न्यस्ता परिधापिता पारिजातस्य देवपुष्पविशेषस्य स्रज मालामाससाद प्राप्तवान ।

### भाषा

युद्ध रूपी उत्सवो मे निरभिमानी, देवो की नगरी अमरावती को अपने यश रूपी शिरोभूषण से सुशोभित करने वाले अर्थात् अपने यश का मुख्य स्थान बनाने वाले राजा ने इन्द्र द्वारा अपने हाथ से पहिनाई हुई पारिजात पुष्प की माला प्राप्त की ।

**इतः परं सर्गान्तमाहवमल्लदेवनामकं राजानं वर्णयति—**

**तस्मादभूदाहवमल्लदेवस्त्रैलोक्यमल्लापरनामधेयः ।**
**यन्मण्डलाग्रं न मुमोच लक्ष्मीर्धाराजलोत्था जलमानुषीव ॥८७॥**

### अन्वयः

तस्मात् यन्मण्डलाग्र धाराजलोत्था लक्ष्मीः जलमानुषी इव न मुमोच (एवम्भूतः) त्रैलोक्यमल्लापरनामधेयः आहवमल्लदेवः अभूत् ।

### व्याख्या

तस्माज्जयसिहदेवात् यस्य मण्डलाग्र कृपाण 'कौक्षेयको मण्डलाग्र करवाल· कृपाणवत्' इत्यमर । धारा जलेन कृपाणधाराजलेनोत्तिष्ठतीति धाराजलोत्था लक्ष्मी विजयलक्ष्मी कृपाणसञ्चालनद्वारा युद्धेषु सर्वनृपान्पराजित्य प्राप्ता विजयश्री जलमानुषीव जलोत्पन्नमानुषी यथा जलधारायामेव प्रकटीभवति (ता कदापि न जहाति) तथैव न मुमोच न त्यक्तवती। एवम्भूत स त्रैलोक्यमल्ल एवाऽपर नामधेय यस्य स आहवमल्लदेवो नाम राजा अभूत् । धाराजलोत्थलक्ष्म्या जलमानुषीसादृश्यप्रतिपादनादुपमा ।

### भाषा

जयसिह देव राजा से आहवमल्लदेव जिसका दूसरा नाम त्रैलोक्यमल्ल था, उत्पन्न हुवा । जिसकी तलवार को, तलवार की धार के पानी से उत्पन्न विजयलक्ष्मी, धारा के जल मे प्रकट होने वाली जलमानुषी के समान कभी त्याग नही करती थी । अर्थात् जल मानुषी जैसे धारा के जल मे ही प्रकट होती है वैसे विजय लक्ष्मी उस राजा की तलवार की धार के तेज पानी मे से शत्रुओ का नाश करने पर प्रकट होनी थी ।

**आख्यायिकासीम्नि कथाद्भुतेषु यः सर्गबन्धे दशरूपके च ।**
**पवित्रचारित्रतया कवीन्द्रैरारोपितो राम इव द्वितीयः ॥८८॥**

### अन्वयः

यः कवीन्द्रैः आख्यायिकासीम्नि कथाद्भुतेषु सर्गबन्धे दशरूपके च पवित्रचारित्रतया द्वितीयः रामः इव आरोपितः ।

### व्याख्या

य आहवमल्लदेव कवीन्द्रै कविश्रेष्ठैराख्यायिकासीम्नि गद्यकाव्य-द्वितीयभेदाख्यायिकामध्ये कथाद्भुतेषु गद्यकाव्यप्रथमभेदरूपाद्भुतकथासु सर्गबन्धे महाकाव्ये दशसु रूपकेषु 'नाटक सप्रकरण भाण प्रहसन डिम । व्यायोग-समवकारौ वीथ्यङ्कोहामृगा' इति दशरूपकाणि । च पवित्र पुण्य चारित्र चरित यस्य स तस्य भाव पवित्रचारित्रता तयोज्वलचरित्रत्वेन द्वितीयोऽन्यो राम इव दाशरथिरिवाऽऽरोपितो व्याख्यात । राज्ञि द्वितीयरामत्वेनसभावनयोत्प्रेक्षा । महाकविभिरस्य विषये बहवो ग्रन्था लिखिता इति ध्वन्यते ।

### भाषा

जिस आहवमल्लदेव राजा के चरित्र को, पवित्र अतएव निष्कलङ्क होने से महाकवियो ने दूसरे दशरथ के पुत्र राम के समान आख्यायिका, अद्भुत कथा, महाकाव्य और नाटकादि दस रूपको मे ग्रथित किया था। अर्थात् जैसे रामचन्द्र का चरित्र महाकवियो ने विभिन्न प्रकार के काव्यो मे वर्णित किया है वैसे ही इसका भी चरित्र महाकवियो ने विभिन्न प्रकार के काव्यो मे वर्णित किया था।

**भूपेषु कूपेष्विव रिक्त-भावं कृत्वा प्रपापालिकयेव यस्य।**
**वीरश्रिया कीर्तिसुधारसस्य दिशां मुखानि प्रणयीकृतानि ॥८६॥**

### अन्वयः

यस्य प्रपापालिकया इव वीरश्रिया कूपेषु इव भूपेषु कीर्तिसुधारसस्य रिक्तभावं कृत्वा दिशा मुखानि प्रणयीकृतानि।

### व्याख्या

यस्य राज्ञ आहवमल्लदेवस्य प्रपा पानीयशालिका 'प्रपा पानीयशालिका' इत्यमरः। तस्या पालिकयेव जलप्रदानरतया नार्येव वीरश्रिया वीरलक्ष्म्या कूपेष्विव भूपेषु राजसु कीर्तिर्यश सुधारस इवामृतरस इव तस्य रिक्तभाव शून्यत्व विधाय कृत्वा दिशा मुखानि प्रणयीकृतानि स्नेहार्द्रीकृतानि। यथा प्रपापालिका कूपस्थसम्पूर्णजल सर्वदिक्स्थजनान् पाययित्वा तेषा मुखानि प्रसादयति, कूपानि च जलरहितानि करोति तथैव वीरश्री सर्वान् विपक्ष भूपान् कीर्तिशून्यान् विधायाऽस्य कीर्त्या सर्वा दिशो धवलयतिस्म तत्स्थाञ्जनानाऽऽनन्दयतिस्मेतिभाव.। वीरलक्ष्म्या प्रपापालिकासादृश्याद्भूपेषु कूपसादृश्याच्चोपमा। दिगन्त-विश्रान्त-यशा असौ वीर इति भाव।

### भाषा

जिस राजा आहवमल्लदेव की वीरश्री ने पोसरा चलाने वाली स्त्री के समान कूपो के समान भूपो मे से अमृत जल के समान यश को निकालते २ उन्हे खाली कर पोसरे पर पानी पीने वालो के मुखो के समान सब दिशाओ के मनुष्यो के मुखो को प्रसन्न कर दिया। अर्थात् आहवमल्लदेव ने वीरता से

समग्र दुष्ट राजाओ का नाश कर और उन राजाओ की कीर्त्ति नष्ट कर चारो दिशाओ मे रहने वाले मनुष्यो को प्रसन्न कर दिया ।

**कौक्षेयकः क्ष्मातिलकस्य यस्य पीत्वातिमात्रं द्विषतां प्रतापम् ।**
**आलोड्य बाष्पाम्बुभिराचचाम चोलीकपोलस्थलचन्दनानि ॥९०॥**

**अन्वयः**

क्ष्मातिलकस्य यस्य कौक्षेयकः द्विषता प्रतापम् अतिमात्र पीत्वा चोलीकपोलस्थलचन्दनानि बाष्पाम्बुभिः आलोड्य आचचाम ।

**व्याख्या**

क्ष्माया पृथिव्यास्तिलकस्य भूषणस्य यस्य राज्ञ कौक्षेयक कृपाण 'कौक्षेयको मण्डलाग्र करवाल कृपाणवत्' इत्यमर । द्विषता शत्रूणा प्रताप तेजोऽतिमात्रमत्यधिक पीत्वा, शत्रूणा प्रताप विनाश्येत्यर्थ । चोलीना चोलदेशीयनारीणा कपोलस्थलेषु गण्डस्थलेष शोभार्थ सुखाथञ्च लिप्तान्यर्पितानि चन्दनानि बाष्पाम्बुभिस्तदीयाश्रुजलैरालोड्य समथ्याऽऽचचाम पीतवान् । कृपाण प्रतापोष्मण शान्त्यर्थं चोलस्त्रीबाष्पाम्बुमिश्रितचन्दन पीतवान् । कश्चिदुष्णतानिवारणाय चन्दनमिश्रित जल शैत्याय सेवत इत्यप्रकृतव्यवहारस्य कृपाणव्यवहारे समारोपात्समासोक्तिरलङ्कार । 'समासोक्ति समैर्यत्र कार्यलिङ्गविशेषणै । व्यवहारसमारोप प्रस्तुतेऽन्यस्य वस्तुन' ॥

**भाषा**

जिस पृथ्वीभूषण राजा के खड्ग ने शत्रुओ के प्रताप को पीकर गर्मी होने से चोल देश की नारियो के कपोलो मे लगे हुए चन्दन को उनके आँसुओ मे घोल कर ठढक प्राप्त करने के लिए पी लिया । अर्थात् पतियो के मर जाने से उनके कपोलो पर पहिले का लगा चन्दन उनके आसुओ से धुल गया ।

**दीप्रप्रतापानलसन्निधानाद् बिभ्रत्पिपासामिव यत्कृपाणः ।**
**प्रमारपृथ्वीपतिकीर्तिधारां धारामुदारां कवलीचकार ॥९१॥**

**अन्वयः**

यत्कृपाणः दीप्रप्रतापानलसन्निधानात् पिपासा बिभ्रद् इव प्रमारपृथ्वीपतिकीर्तिधाराम् उदारा धारा कवलीचकार ।

**व्याख्या**

यस्य राज्ञ कृपाण खड्गो यत्कृपाण आहवमल्लदेवस्य राज्ञ कृपाण दीप्रो दीप्तिमान्य प्रतापानल प्रतापरूपाग्निस्तस्य सन्निधानात्सामीप्यात्पिपासा जलं पातुमिच्छा बिभ्रद्धारयन्निव प्रमारस्य पारमारसञ्ज्ञकराजवंशस्य ये पृथ्वीपतयो राजानस्तेषा कीर्तिधारा यश प्रवाहरूपामुदारा महतीं धारा धारानगरीरूपां जलधारा कवलीचकार जग्राह। धाराशब्देनोभयार्थबोधात् श्लेषालङ्कार। धाराकवलीकरणे प्रतापानलसन्निधानप्रयुक्तपिपासाधारणस्य हेतुत्वेनोत्प्रेक्षणा-द्धेतूत्प्रेक्षा।

**भाषा**

जिसकी तलवार ने राजा के तीव्र प्रताप रूपी अग्नि के पास रहने से मानो प्यासी होकर परमारवश के राजाओ की कीर्ति की जलधारा रूपी उन्नत धारानगरी को जलधारा के समान पी लिया अर्थात् जीत लिया। अर्थात् पारमार वशीय राजाओ की कीर्ति रूपी प्रसिद्ध राजधानी धारा नगरी को अपने हाथ कर लिया।

**अगाधपानीयनिमग्नभूरि-भूभृत्कुटुम्बोऽपि यदीयखड्गः।**
**भाग्यक्षयान्मालवभर्तुरासीदेकां न धारां परिहर्तुमीशः ॥६२॥**

**अन्वयः**

अगाधपानीयनिमग्नभूरिभूभृत्कुटुम्बः अपि यदीयखड्गः भाग्यक्षयात् मालवभर्तुः एकां धारा परिहर्तुम् ईशः न आसीत्।

**व्याख्या**

अगाधेऽपरिमितेऽत्यन्ततीक्ष्णे च पानीये जले खड्गधाराजले च निमग्नमन्तर्गत नष्ट च भूरिभूभृता बहुपर्वतानामनेकेषाञ्च राज्ञा कुटुम्ब समूहो वशश्च यस्यैव भतोऽपि यदीयखड्गो भाग्यक्षयाद्दौर्भाग्याद्धारानगर्या मालवभर्तुर्मालवाधीशस्य भोजस्यैका केवलामद्वितीया वा धारा जलधारा धारानगरी च परिहर्तुं त्यक्तु क्षमस्समर्थो नाऽऽसीत्। यथेन्द्रवज्रप्रहारभीता पर्वता समुद्रस्याऽगाधपानीये निमग्नास्तथैव यदीयखड्गागाधधाराजले भूरि राजानो निमग्ना सहृता इत्यर्थ। एवमगाधजलधारासमृद्धोऽपि खड्गो धारानगर्या दौर्भाग्याल्लुब्ध इवैकजलधारा-रूपामद्वितीयधारानगरी त्यक्तु समर्थो नाऽभवदित्यर्थ। बहुमुद्रासम्पन्न एकमुद्रार्थं न प्रयतते इति लोके प्रसिद्धम्। तथापि दौर्भाग्यात्सर्व सम्भवति।

## भाषा

जिस राजा के खड्ग के तीक्ष्ण और अथाह धारा जल मे समुद्र मे इन्द्र के वज्र के भय से खूब नीचे डुबकी लगाकर छिपे हुवे पर्वतो के समान अन्य राजाओ के कुटुम्बो के निमग्न अर्थात् नष्ट हो जाने पर भी धारा नगरी के दुर्भाग्य से वह खड्ग एक छोटे धारा प्रवाह के समान मालवा के राजा भोज की राजधानी धारा नगरी को न छोड सका। अर्थात् अनेक बडे २ राजाओ को जीत लेने पर भी छोटी सी धारा नगरी को जीतने से वह अपने को न रोक सका।

**निःशेषनिर्वासितराजहंसः खड्गेन बालाम्बुदमेचकेन।**
**भोजक्षमाभृद्भुजपञ्जरेऽपि यः कीर्तिहंसीं विरसीचकार ॥६३॥**

## अन्वयः

**बालाम्बुदमेचकेन खड्गेन निःशेषनिर्वासितराजहसः यः भोजक्षमा-भृद्भुजपञ्जरे अपि कीर्तिहसीं विरसीचकार।**

## व्याख्या

**बालाम्बुद नूतनमेघो कृष्णवर्णमेघस्तद्वन्मेचकेन श्यामेन खड्गेन कृपाणेन निश्शेष यथा स्यात्तथा निर्वासिता स्वनिवासाद्बहि कृता राजहसा राजानो हसा इवेति राजहसा राजश्रेष्ठा पक्षे मानस प्रापिता राजहसपक्षिणो येन स। य आहवमल्लदेवो नाम राजा भोजनामा क्षमाभृद्राजा तस्य भुज पञ्जर इव तस्मिन् सर्वसुखसामग्रीनिधानेऽपि कीर्तिरूपिणी हसी पतिवियोगाद्विरसीचकार दु खसागर-निमग्ना चकार। भोजराज कीर्तिरपि निराधारा सती दु खिता जाता। वर्षा काले मानस यान्ति हसा इति प्रसिद्ध्यनुरोधान्मेघान्विलोक्य हसा स्वस्थान त्यजन्ति मानसञ्च गच्छन्ति। बालाम्बुदेन खड्गस्य सादृश्यादुपमा। राजसु राजहसपक्षिणामभेदारोपात्कीर्तौ हस्या अभेदारोपाद्भोजराजभुजे पञ्जराभेदा-रोपाच्च सावयवरूपकम्।**

## भाषा

जिसने नवीन मेघ के समान कृष्णवर्ण खड्ग से समस्त राजारूपी राजहसो को भगा दिया था (मेघो को देखकर हसपक्षी मानस सरोवर चले जाते है ऐसी प्रसिद्धि है) उसने भोजराजा के भुजारूपी पिजडे मे सुरक्षित उसकी कीर्तिरूपी

हसी को (पति वियोग से) उदास कर दिया । अर्थात् भोजराजा की कीर्ति को भी कलङ्कित कर दिया ।

**भोजक्ष्मापालविमुक्तधारा-निपातमात्रेण रणेषु यस्य ।**
**कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम् ॥६४॥**

### अन्वयः

यस्य रणेषु कल्पान्तकालानलचण्डमूर्तिः प्रकोपाग्निः भोजक्ष्मापालविमुक्तधारानिपातपात्रेण शान्तिम् अवाप (इति) चित्रम् ।

### व्याख्या

यस्य राज्ञो रणेषु युद्धेषु कल्पान्तस्य प्रलयस्य य कालानल सर्वभस्मसात्कारिप्रचण्डाग्निस्तद्वच्चण्डोग्रा मूर्ति स्वरूप यस्य स 'सवर्त प्रलय कल्प क्षय कल्पान्त इत्यपि' इत्यमर । प्रकोपाग्नि क्रोधानलो भोजएव क्षमापालो नृपस्तेन विमुक्ता त्यक्ता पक्षे प्रवाहिता धारानगरी खड्गधारा जलधारा च तस्या निपातेन पतनेन प्रवाहेण च शान्तिमवाप प्रापेति चित्रमद्भुतम् । यथा जलधारयाऽग्नि शान्तिमेति तथैव धारानगरीविजयेन राज्ञ क्रोध शान्तिमगादित्यर्थ । कल्पान्तकालानलेन प्रकोपाग्नेस्सादृश्यादुपमालङ्कार । श्लिष्टेन धारापदेन जलधाराया धारानगर्या खड्गधारायाश्च ग्रहणादत्र श्लेषोऽलङ्कार । यथा प्रलयाग्निर्भोजनृपविसृष्टजलधारानिपातमात्रेण शान्तिमाप्तु कदापि न शक्नोति तथैव प्रलयाग्निसदृशप्रचण्डकोपाग्निरपि भोजप्रयुक्त खड्ग-धारारूपधाराजलेन न शान्तिमाप्तु प्रभवति परञ्चाऽत्र स शान्तिमाप इति विरोध । धारापदेन धारानगर्या विमर्शेन विरोधपरिहार इति विरोधाभासालङ्कार ।

### भाषा

जिस राजा की, युद्धो मे प्रलय कालीन आग के भयङ्कर स्वरूप वाली क्रोधाग्नि, राजा भोज द्वारा चलाई हुई तलवार की धार रूपी जलधारा के पडते ही ठडी हो गई, यह अचम्भे की बात है । यथार्थ मे उसका क्रोध, राजा भोज द्वारा त्यक्त धारा नगरी के अध पतन से अर्थात् उसको जीत लेने से शान्त हुवा ।

**यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि ।**
**तत्कीर्तिभिः क्षालयति स्म शश्व-दखण्डतारापतिपाण्डुराभिः ॥६५॥**

**अन्वयः**

यः कोटिहोमानलधूमजालैः दिशा मुखानि मलीमसीकृत्य अखण्डतारापतिपाण्डुराभिः तत्कीर्तिभिः शश्वत् क्षालयति स्म ।

**व्याख्या**

य आहवमल्लदेव कोटिसख्याका होमा यज्ञास्तेषामनलोऽग्निस्तस्य धूमजालैर्धूमसमूहैर्दिशा काष्ठाना 'दिशस्तु ककुभ काष्ठा आशाश्चहरितश्चता' इत्यमर, मुखानि मलीमसीकृत्य 'अभूततद्भावे च्वि प्रत्यय' मलिनीकृत्य 'मलीमसन्तु मलिन कच्चर मलदूषितम्' इत्यमर । अखण्ड परिपूर्णस्तारापतिश्चन्द्रस्तद्वत्पाण्डुराभि शुक्लाभिस्तत्कीर्तिभि यज्ञयशोभि शश्वत्पुन क्षालयतिस्म पुनरपि श्वेततामानयतिस्म । तारापते पाण्डुरत्वेन कीर्तौ सादृश्यादुपमा । दिङमुखमलिनीकरणपटुभ्यो यज्ञेभ्य एव पाण्डुरकीर्तिजननाद्विषमालङ्कारोऽप्यत्र ।

**भाषा**

जिसने करोडो यज्ञो की अग्नियो से उत्पन्न धूँएँ से दिशाओ के मुखो को मैलाकर पूर्ण चन्द्र के समान शुभ्रवर्ण अपनी यज्ञजन्य कीर्ति से उनके मुखो को फिर से धो डाला । अर्थात् उसने करोडो यज्ञ किये जिससे उसका यश चारो दिशाओ मे फैल गया ।

**ध्रुवं रणे यस्य जयामृतेन क्षीबः क्षमाभर्तुरभूत्कृपाणः ।**
**एका गृहीता यदनेन धारा धारासहस्रं यशसोऽवकीर्णम् ॥६६॥**

**अन्वयः**

यस्य क्षमाभर्तुः कृपाणः रणे जयामृतेन ध्रुवं क्षीबः अभूत् । यत् अनेन एका धारा गृहीता यशसः धारासहस्रम् अवकीर्णम् ।

**व्याख्या**

यस्य प्रसिद्धस्य क्षमाभर्तु पृथ्वीपते कृपाण खडगो रणे युद्धे जयामृतेन विजयरूपामृतपानेन ध्रुव निश्चयेन क्षीबो मदान्धोऽभूत् । यद्यस्मात्कारणादनेनैका धारा धारानगरी खड्गधारा च गृहीता स्वायत्तीकृता धारिता च परञ्च तेन कार्येण यशस कीर्तेर्धारासहस्र प्रवाहसहस्रमवकीर्णं विस्तारितम् । इदमेव मत्तत्त्व यदेकस्या धाराया धारासहस्रेण विनिमय कृत इति परिवृत्तिरलङ्कार । परिवृ-

र्त्तिविनिमयो योऽर्थाना स्यात्समासमैरिति लक्षणात् । धारा शब्दस्य धारानगरी, खड्गधारा जलधारा चेत्यर्थत्रयबोधाच्छ्लेषोऽलङ्कार, अत सकर ।

**भाषा**

जिस राजा की तलवार, युद्ध मे विजयरूपी अमृत का पान कर अवश्य मदोन्मत्त हो गई थी । क्यो कि उसने केवल एक धारा नगरी को लेकर या एक धारा रखते हुवे कीर्ति की हजारो धाराओ को बहाया ।

**शतक्रतोर्मध्यमचक्रवर्ती क्रमादनेकक्रतुदीक्षितोऽपि ।**
**ऐन्द्रात्पदादभ्यधिके पदे यस्तिष्ठन्न शङ्कास्पदतामयासीत् ॥६७॥**

**अन्वयः**

मध्यमचक्रवर्ती क्रमात् अनेकक्रतुदीक्षितः यः ऐन्द्रात् पदात् अभ्यधिके पदे अपि तिष्ठन् शतक्रतोः शङ्कास्पदता न अयासीत् ।

**व्याख्या**

मध्यमचक्रवर्ती मध्यमलोकस्य भूलोकस्य चक्रवर्ती सार्वभौम क्रमात्परिपाट्याऽनेकेष्वसख्येषु क्रतुषु यज्ञेषु दीक्षित सञ्जातदीक्ष यो राजा ऐन्द्रात्पदादिन्द्रपदापेक्षयाऽभ्यधिकेऽधिकगुणे पदेऽपि स्थानेऽपि तिष्ठन्समासीन शतक्रतोरिन्द्रस्य शङ्कास्पदता सन्देहस्थान नाऽयासीन्न प्राप्त । तस्याऽसख्यक्रतुसम्पादनेनाऽपि शतक्रतुर्भयभीतो न बभूव यतस्तेनैव तदुत्पादनार्थ ब्रह्मा प्रार्थित आसीत् । शङ्काकारणसत्वेऽपि शङ्कास्वरूपकार्याभावप्रतिपादनाद्विशेषोक्तिरलङ्कार ।

**भाषा**

पृथ्वी के सम्राट् आहवमल्लदेव के वीरे २ अनेक यज्ञो के करने से इन्द्र पद से भी उच्चपद पाने की योग्यता हो जाने पर भी इन्द्र के मन मे उसके सम्वन्ध मे कोई शङ्का उत्पन्न न हुई । (क्योकि इन्द्र की प्रार्थना से ही यह चाल्ुक्य वश ब्रह्माने उत्पन्न किया था ।)

**चिन्तामणिर्यस्य पुरो वराकस्तथाहि वार्ता जनविश्रुतेयम् ।**
**यत्तत्र सौवर्णतुलाधिरूढे चक्रे स पाषाणतुलाधिरोहम् ॥६८॥**

**अन्वयः**

यस्य पुरः चिन्तामणिः वराकः तथाहि इयं वार्ता जनविश्रुता यत् तत्र सौवर्णतुलाधिरूढे (सति) सः पाषाणतुलाधिरोहं चक्रे ।

**व्याख्या**

यस्य राज्ञ पुर समताया चिन्तामणिर्नामाऽनर्घ्यं रत्न वराकोऽगण्यो दैन्य-मेवाऽवलम्बते । राजापेक्षया नातिशयचमत्कारित्वेन प्रभावशून्यत्वात् । तथाहि यत इय वार्ता जनेषु विश्रुता विख्याताऽऽसीत् । यदित्यनेनोत्तरार्द्धोक्तवाक्यार्थ-परामर्श । तत्र राजनि सुवर्णतुलापुरुषदानार्थ सौवर्णी तुलेति सौवर्णतुला तस्यामधिरूढे स्थिते सति स चिन्तामणि पाषाणेन सह तुला साम्य तस्यामधिरोह स्थिति, रत्न-तोलन-तुलाया वा स्थिति चक्रे । अस्य राज्ञ सुवर्णेन तुलना चिन्तामणेस्तु पाषाणेन तुलनेत्यर्थपरामर्शाच्चिन्तामणेर्दैन्यमेव । अथ च स चिन्तामणिरभीष्टवस्तुचिन्तयाऽभीष्टवस्तुप्रदाता । अय राजा तु चिन्ता विनैव सर्वाभीष्ट दातेति भाव । उपमानस्य चिन्तामणे राजरूपोपमेयापेक्षयाऽपकर्ष-प्रतिपादनाद्व्यतिरेकालङ्कार । 'उपमानाद्यदन्यस्य व्यतिरेकस्सएव स' ।

**भाषा**

जिस राजा की समता मे चिन्तामणि रत्न भी किसी महत्व का नही था । इसीलिये यह बात लोक प्रसिद्ध है कि सुवर्ण पुरुष के दान मे राजा सोने की तुला पर चढता था किन्तु चिन्तामणि पत्थर (रत्न) तौलने की तुला पर तौला जाता था अर्थात् चिन्तामणि की तौल पत्थरो से होती थी ओर राजा की सोने से । ( चिन्तामणि अभीष्टवस्तु की याचना करने पर अभीष्ट वस्तु देता है किन्तु यह राजा बिना याचना के ही अभीष्ट वस्तु देता था) ।

**विधाय रूपं मशकप्रमाणं भयेन कोणे क्वचन स्थितस्य ।**
**कलेरिवोत्सारणकारणेन यो यागधूमैर्भुवनं रुरोध ॥६९॥**

**अन्वयः**

यः भयेन मशकप्रमाणं रूपं विधाय क्वचन कोणे स्थितस्य कलेः उत्सारणकारणेन इव यागधूमैः भुवन रुरोध ।

**व्याख्या**

यो नृपो भयेन राज्ञो भीत्या मशकसमान मशकवदल्परूप विधाय निर्माय क्वचन कस्मिश्चित्कोणे स्थितस्याऽऽत्मानमपावृत्य विद्यमानस्य कले कलियुगस्योत्सारणकारणेनाऽपसारणार्थं दूरीकरणार्थमिव यागधूमैर्यज्ञजनितधूमैर्भुवन जगद्रुरोधाऽऽच्छादितवान् । कलिजनितपापनिवारणार्थ यज्ञा मशकनिवारणार्थ धूमश्च क्रियत इत्याचार । अत्र कलेरुत्सारणस्य यज्ञधूमकरणकभुवनरोधप्रयोजनत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कार ।

**भाषा**

जिस राजा ने, मच्छर के इतना छोटा रूप धारण कर, किसी कोने मे भय से छिपकर बैठे हुए कलियुग को भगाने के लिए ही मानो यज्ञो के धूएँ से पृथ्वी को छा दिया । (मच्छरो को भगाने के लिए धूवाँ किया जाता है । )

**स्वभाविकादुष्णगभस्तिभासः क्षत्रोष्मणो दृष्टिविघातहेतोः ।**
**यस्मिन्परित्रस्त इति क्षितीन्द्रे क्षणं न चिक्षेप कलिः कटाक्षम् ॥१००॥**

**अन्वयः**

कलिः यस्मिन् छितीन्द्रे स्वाभाविकात् उष्णगभस्तिभासः क्षत्रोष्मणः दृष्टिविघातहेतोः परित्रस्तः इति क्षण कटाक्षं न चिक्षेप ।

**व्याख्या**

कलि कलियुगो यस्मिन्प्रसिद्धे राजन्याहवमल्लदेवे स्वाभाविकात्प्राकृतिकादुष्णा गभस्तयो यस्य स उष्णगभस्ति सूर्यस्तस्य भास इव भास प्रभा 'स्यु प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तय ' इत्यमर । यस्य तस्य क्षतात्त्रायत इति क्षत्र क्षत्रियकुल तस्योष्मा तेजस्तस्य क्षत्रोष्मण क्षात्रतेजसो दृष्टेर्विघात इति दृष्टिविघात दृष्टिविनाशस्तस्य हेतो कारणात् परित्रस्तो भयभीत इति हेतुना क्षण क्षणमात्रमपि कटाक्ष स्वापाङ्गदर्शन 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने' इत्यमर । न चिक्षेप न प्रसारयामास । अत्र क्षत्रोष्मण उष्णगभस्तिना सूर्येण सादृश्यप्रतिपादनादुपमालङ्कार ।

**भाषा**

स्वाभाविक सूर्य के समान तेज वाले क्षत्रिय तेज से, दृष्टिनाश होने के भय

से भयभीत कली, एक क्षण के लिये भी उस राजा पर अपनी कुटिल दृष्टि नही डालता था।

**अन्यायमेकं कृतवान् कृती यश्चालुक्यगोत्रोद्भववत्सलोऽपि ।**
**यत्पूर्वभूपालगुणान्प्रजानां विस्मारयामास निजैश्चरित्रैः ॥१०१॥**

### अन्वयः

चालुक्यगोत्रोद्भववत्सलः अपि कृती यः एक अन्यायं कृतवान् यत् निजैः चरित्रैः प्रजाना पूर्वभूपालगुणान विस्मारयामास ।

### व्याख्या

चालुक्यगोत्रे चालुक्यवशे उद्भव उत्पत्तिर्येषा राँज्ञा तेषु वत्सल स्निग्धो भक्त इत्यर्थ स्वकुलोत्पन्नपूर्ववर्तिनृपाणा भक्तोऽपि 'लक्ष्मीवान् लक्ष्मण श्रील श्रीमान् स्निग्धस्तु वत्सल' इत्यमर । कृती कार्यकुशल पुण्यवाँश्च यो राजाऽऽहवमल्लदेव एकमन्यायमनुचितकार्यं कृतवान् यद्यस्मात्कारणान्निजैस्स्वीयैश्चरित्रैरुत्कृष्टगुणै प्रजाना जनाना षष्ठी 'शेषे—इत्यनेन' प्रजानामित्यत्र सम्बन्धसामान्ये षष्ठी । पूर्वभूपालगुणान्स्ववशजपूर्ववर्तिनृपगुणान् विस्मारयामास । अस्य गुणोत्कर्षेण भूतपूर्वनृपा विस्मृता इत्यर्थ । एकस्याऽन्यायकार्यस्य विधानादादौ निन्दाया प्रतीति पर्यवसाने तु राज्ञ प्रभावप्रशसा प्रतीयते । अत्र व्याजस्तुतिरलङ्कार । 'व्याजस्तुतिर्मुखे निन्दास्तुतिर्वा रूढिरन्यथेति' ।

### भाषा

पुण्यात्मा, कार्यकुशल उस राजा ने चालुक्यवशीय प्राचीन राजाओ मे श्रद्धा भक्ति रखते हुवे भी एक यह अन्याय किया था कि अपने उत्कृष्ट गुणो से प्रजाओ को पूर्ववर्ती राजाओ के गुणो का विस्मरण करा दिया था। अर्थात् पूर्ववर्ती राजाओ से यह आहवमल्लदेव अधिक गुणी था।

**विशीर्णकर्णा कलहेन यस्य पृथ्वीभुजङ्गस्य निरर्गलेन ।**
**संगच्छतेऽद्यापि न डाहलश्रीः कर्पूरताडङ्कनिभैर्यशोभिः ॥१०२॥**

### अन्वयः

यस्य पृथ्वीभुजङ्गस्य निरर्गलेन कलहेन विशीर्णकर्णा डाहलश्रीः कर्पूरताडङ्कनिभैः यशोभिः अद्यापि न सङ्गच्छते ।

**व्याख्या**

पृथ्व्या भूमेर्भुजङ्ग पति कामुकश्च तस्य पृथिवीश्वरस्य निरर्गलेन निष्प्रति-बन्धेन कलहेन विवादेन युद्धेन च विशीर्णौ कर्णौ यस्या सा, विशीर्णो नष्ट कर्णस्तन्नामधेयो नृपो यस्या सा च च्छिन्नकर्णा डाहलाना डाहलदेशीयनृपाणा (डाहलदेशश्चेदीदेशादभिन्न ।) श्री राजलक्ष्मी कर्पूरस्य यत्ताडङ्क कर्णभूषण 'ताटङ्कमपि पाठ' तन्निभैस्तत्समानैर्यशोभि कीर्तिभिरधुनाप्यद्य यावन्न सङ्गच्छते न मिलति न शोभत इत्यर्थ । कर्णाभावात्तद्भूषणाभावस्तत्कीर्त्यभावश्च । यशस कर्पूरताटङ्केनसादृश्यादुपमा ।

**भाषा**

उस राजा के या कामुक के बिना रोक टोक के युद्ध से अथवा अत्यधिक झगडा हो जाने से डाहल के राजा कर्ण के मर जाने के कारण या दोनो कान कट जाने के कारण, डाहल देश की राजलक्ष्मी, कपूर के बने हुए या कपूर के ऐसे श्वेत कर्णभूषण के समान यशो से अभीतक शोभित नही होती है ।

**पाठान्तरम्-भङ्ग्यन्तरेण तदेव वर्णनं, न तु पाठ भेदः—**

उसी भाव को कवि दूसरे प्रकार से वर्णित करते है ।

**कर्णे विशीर्णे कलहेन यस्य पृथ्वीभुजङ्गस्य निरर्गलेन ।**
**कीर्तिः समाश्लिष्यति डाहलोर्वीं न दन्तताडङ्कनिभाधुनापि ॥१०३॥**

**अन्वयः**

यस्य पृथ्वीभुजङ्गस्य निरर्गलेन कलहेन कर्णे विशीर्णे (सति) दन्तता-डङ्कनिभा कीर्तिः अधुना अपि डाहलोर्वीं न समाश्लिष्यति ।

**व्याख्या**

यस्य प्रसिद्धस्य पृथ्वीभुजङ्गस्य पृथ्वीपते कामुकस्य वा निरर्गलेन कोलाहल-सम्पन्नेन कलहेन विवादेन युद्धेन वा कर्णे तन्नामके डाहलनृपे श्रोत्रे वा विशीर्णे मृते वा त्रुटिते सति दन्तताडङ्कनिभा गजदन्तनिर्मितकर्णभूषणवच्छुभ्रा कीर्ति रधुनाऽपि डाहलोर्वीं डाहलदेश न समाश्लिष्यति नाऽऽलिङ्गति । गजदन्त-ताडङ्केन कीर्तेर्धावल्येन साम्यादुपमा । भुजङ्गकर्णपदयो श्लिष्टत्वात्कामिनी रूपाप्रकृतार्थेन डाहलोर्वीरूपप्रकृतार्थस्योपमानोपमेयभावो व्यङ्ग्य । एव भुजङ्ग-पदवाच्ययोरपि । तथा च शब्दशक्तिमूलध्वनि. समासोक्तिर्वा ।

**भाषा**

जिस कामुक के समान राजा के (व कामिनी के समान डाहलोर्वी के) अत्यधिक युद्ध से या कलह से कर्ण राजा के मरने पर या कान के कट जाने पर हाथी दात के बने हुवे कान के आभूषण के समान श्वेत कीर्ति अभी भी डाहलदेश को नही प्राप्त हो रही है। (कान कट जाने से कर्ण भूषण पहनने का सौभाग्य ही अप्राप्य हो जाता है। कर्ण राजा के ऐसे प्रतापी राजा के मर जाने से कीर्ति कहाँ से आ सकती है)।

**यस्यासिरत्युच्छलता रराज धाराजलेनेव रणेषु धाम्ना ।**
**दृप्तारिमातङ्गसहस्रसङ्गामभ्युक्ष्य गृह्णन्निव वैरिलक्ष्मीम् ॥१०४॥**

**अन्वयः**

यस्य असिः रणेषु अत्युच्छलता धाराजलेन इव धाम्ना दृप्तारिमातङ्ग सहस्रसङ्गा वैरिलक्ष्मीम् अभ्युक्ष्य गृह्णन् इव रराज ।

**व्याख्या**

यस्य भूपतेरसि खड्गो रणेषु युद्धेष्वत्युच्छलतोर्ध्वं गच्छता धाराजलेन खड्ग-धाराजलेनेव धाम्ना तेजसा, दृप्ता मदान्धा अरिमातङ्गा शत्रुहस्तिनो विपक्ष-चाण्डालाश्च तेषा सहस्र तस्य सङ्ग ससर्गो यस्या सा ता वैरिलक्ष्मी शत्रुश्रिय मभ्युक्ष्य प्रक्षाल्य 'उक्ष् सेचने' इत्यस्माद्धातोरभ्युपसर्गाल्ल्यप्यभ्युक्ष्येतिनिष्पन्नम्।' गृह्णन्निवाऽऽसादयन्निव रराज शुशुभे। यथा चाण्डालसङ्गादशुद्ध वस्तु जलेन सम्प्रोक्ष्य शुद्ध विधाय गृह्यते तथैवाऽत्राऽपि मातङ्गसहस्रसगजनिताशुद्धियुक्ता वैरिलक्ष्मी धाराजलेन पवित्रीकृत्य गृहीता। धाराजलेन सह धाम्नस्सादृश्यप्रती तिरित्युपमा। मातङ्गशब्देन गजाना चाण्डालनाञ्चप्रतीत्या श्लेषोऽलङ्कार। खड्गे वैरिलक्ष्मीकर्मकग्रहणक्रियाया उत्प्रेक्षणादुत्प्रेक्षा। अतस्तेषा सङ्कर।

**भाषा**

जिस राजा की तलवार, युद्धो मे ऊपर उठने वाले अपनी धार के जल के समान तेज से मदोन्मत्त हजारो शत्रुरूपी हाथियो के अथवा हजारो शत्रु चाण्डालो के ससर्ग दोष से अपवित्र शत्रुओ की लक्ष्मी का मानो प्रोक्षण कर ग्रहण करती हुई शोभित हुई। अर्थात् अपवित्र शत्रुलक्ष्मी पर अपनी तेज धार का पानी छिडक, उसे पवित्र कर उसका ग्रहण किया। (अपवित्र वस्तु पर गङ्गाजल छिडक कर पवित्र करने की परिपाटी है)।

**यद्वैरिसामन्तनितम्बिनीनामश्रान्तसन्तापकदर्थ्यमाने ।**
**पराङ्मुखं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥१०५॥**

अन्वयः

यद्वैरिसामन्तनितम्बिनीनाम् अश्रान्तसन्तापकदर्थ्यमाने कुचस्थले शोष-विशङ्कया इव कुङ्कुमपङ्क पराङ्मुखम् आसीत् ।

व्याख्या

यस्याऽऽहवमल्लदेवस्य वैरिसामन्ता शत्रुनृपास्तेषा नितम्बिनीनामङ्गनाना मश्रान्तो निरन्तरश्चासौ सन्तापश्च सज्वरश्च 'सन्ताप सज्वर समौ' इत्यमर । तेन कदर्थ्यमाने दुर्दशामापन्ने तप्ते इत्यर्थ । कुचस्थले स्तने शोषस्य शोषणकर्मणो विशङ्कयेव सन्देहेनेव, कुचयो शुष्कत्व कुङकुमलेपजन्योष्णत्वेन माभूदिति हेतो कुङकुमपङ्क पराङमुखमासीत् नोपलिप्तमित्यर्थ । पतिविरहात्कुङकुमलेपादी-नामभाव । अत्र कुचस्थले कुङकुमलेपस्य पराङमुखत्वे स्तनयो शोषशङ्काया हेतुत्वेनोत्प्रेक्षणाद्धेतूत्प्रेक्षा ।

भाषा

जिस राजा के विपक्षी सामन्तो की नारियो के निरन्तर दु ख से दुर्दशा को प्राप्त, स्तन, कही सूख न जॉय इस सन्देह से मानो उन पर केसर का लेप नही किया गया था । अर्थात् पतियो के मर जाने से केसर का लेप आदि शृङ्गार बन्द हो गया था ।

**एकत्र वासादवसानभाजस्ताम्बूललक्ष्म्या इव संस्मरन्ती ।**
**वक्त्रेषु यद्वैरिविलासिनीनां हासप्रभा तानवमाससाद ॥१०६॥**

अन्वयः

यद्वैरिविलासिनीनां वक्त्रेषु हासप्रभा एकत्र वासात् अवसानभाजः ताम्बूललक्ष्म्याः संस्मरन्ती इव तानवम् आससाद ।

व्याख्या

यस्य राज्ञो वैरिविलासिनीना विपक्षाङ्गनाना वक्त्रेषु वदनेषु विद्यमाना हासस्य हास्यस्य प्रभा कान्तिरेकत्रवासात्तत्रैव वदनेषु विद्यमानत्वात्ताम्बूललक्ष्म्या

स्ताम्बूलशोभाया सस्मरन्तीव स्मरन्ती सतीव ताम्बूललक्ष्मी पत्युर्विरहवेदनया समाप्ति गतेति सहवासात्सखीवृत्तान्त स्मरन्ती सतीव तानव कृशत्वमाससाद प्राप । पतिविरहात्ताम्बूलभक्षणेन सह हास्यमपि लुप्तमितिभावः । अत्र हासप्रभाया ताम्बूललक्ष्मीसमाप्तिस्मरणस्य हासप्रभानिष्ठतनुत्व-प्राप्तौ हेतुत्वेनोत्प्रेक्षणाद्धेतूत्प्रेक्षा । अप्रस्तुतसखीवृत्तान्तस्य हासप्रभावृत्तान्तेऽभेदसमारोपात्समासोक्तिरलङ्कार ।

### भाषा

जिस राजा के शत्रुओ की स्त्रियो के मुखो की हास्यशोभा, एकत्र वास होने से शीघ्र समाप्त होनेवाली ताम्बूल शोभा को स्मरण करती हुई, कम होने लगी । अर्थात् पतियो के मर जाने से वैधव्य प्राप्त होने पर आनन्दजनित हसी और ताम्बूलभक्षण दोनो ही न रहा ।

**यं वारिधिः प्रज्वलदस्त्रजालं वेलावनान्तेषु नितान्तभीतः ।**
**भूयः समुत्सारणकारणेन समागतं भार्गवमाशशङ्के ॥१०७॥**

### अन्वयः

नितान्तभीतः वारिधिः वेलावनान्तेषु प्रज्वलदस्त्रजालं य समुत्सारणकारणेन भूयः समागतं भार्गवम् आशशङ्के ।

### व्याख्या

नितान्तमत्यन्त भीतो भयाकुलो वारिधिस्समुद्रो वेलावनान्तेषु तटगतारण्यभूमिषु प्रज्वलज्जाज्वल्यमानमस्त्र यस्य त य नृप समुत्सारणस्याऽपसारणस्य कारणेन हेतुना भूय पुनरपि समागत सम्प्राप्त भार्गव परशुराममाशशङ्के शङ्कितवान् । अत्र नृपे परशुरामस्य सभावनादुत्प्रेक्षा[1] ।

### भाषा

अत्यधिक भयभीत समुद्र, तट के जगलो मे चमकते हुवे अस्त्रो से शोभित इस राजा को देखकर अपने को हटाने के लिये फिर से परशुराम आये है क्या, ऐसा सन्देह करने लगा ।

---

[1] कोकणदेश पूर्व समुद्राभ्यन्तरे वर्तमानो भार्गवेण समुद्र समुत्सार्य स्वनिवासार्थ निर्मित इति पौराणिकीकथाऽत्राऽनुसन्धेया ।

**रत्नोत्करग्राहिषु यद्भटेषु तटत्रुटन्मौक्तिकशुक्तिभङ्ग्या ।**
**अस्फोटयत्तीरशिलातलेषु रोषेण मूर्धानमिवाम्बुराशिः ॥१०८॥**

**अन्वयः**

अम्बुराशिः यद्भटेषु रत्नोत्करग्राहिषु (सत्सु) तटत्रुटन्मौक्तिकशुक्तिभङ्ग्या तीरशिलातलेषु रोषेण मूर्धानम् अस्फोटयत् इव ।

**व्याख्या**

अम्बूना जलाना राशिस्समुद्रो यस्य राज्ञो भटेषु योद्धृषु रत्नानामुत्करा. समूहास्तेषा ग्राहिषु सत्सु स्वायत्तीकृतवत्सु सत्सु तटेषु त्रुटन्ति स्फुटितानि मौक्तिकानि याभ्यस्ता शुक्तयस्तासा भङ्ग्या व्याजेन तीरे तटे यानि शिलातलानि प्रस्तरभूमयस्तेषु रोषेण कोपेन मूर्धानं शिरसमस्फोटयदिवाऽखण्डयदिव । अत्राऽपन्हुतिमूलकोत्प्रेक्षालङ्कार । समुद्रे शिरस्फोटनस्य क्रियाया उत्प्रेक्षणादुत्प्रेक्षा । नेमा स्फुटितमुक्ताशुक्तय किन्तु समुद्रकर्तृकशिरस्फोटनमिति प्रतीत्या प्रतीयमानाऽर्थापन्हुतिरुत्प्रेक्षाङ्गम् । 'प्रकृत यन्निषिध्यान्यत्साध्यते सात्वपन्हुति ।'

**भाषा**

जिस राजा के योद्धाओ के, समुद्र के रत्न समूहो को ले लेने पर, तट पर पडी हुई मोती निकाली, सीपो के मिष से मानो समुद्र ने क्रोध से किनारे पर के पत्थरो पर माथा पटक २ कर अपना सिर टुकडे २ कर डाला ।

**यं वीक्ष्य पाथोधिरधिज्यचापं शोणाश्मभिः शोणितशोणदेहैः ।**
**क्षोभादभीक्ष्णं रघुराजबाण-जीर्णव्रणस्फोटमिवाचचक्षे ॥१०९॥**

**अन्वयः**

पाथोधिः अधिज्यचापं य वीक्ष्य शोणितशोणदेहैः शोणाश्मभिः अभीक्ष्णं क्षोभात् रघुराजबाणजीर्णव्रणस्फोटम् इव आचचक्षे ।

**व्याख्या**

पाथासि जलानि धीयन्तेऽस्मिन्निति पाथोधि समुद्रो ज्या मौर्वीमधिगतोऽधिज्यश्चापो धनुर्यस्य त य नृप वीक्ष्याऽऽलोक्य शोणितवद्रुधिरवत् 'रुधिरेऽसृक्-

लोहितास्त्ररक्तक्षतजशोणितम्' इत्यमर । शोणा रक्ता देहा येषा तै रुधिरक्तदेहैः शोणाश्मभी रक्तवर्णपाषाणै समुद्रान्तस्तलस्थितैस्तद्दर्शनव्याजेनेत्यर्थ । अभीक्ष्णं शश्वत् 'युक्ते द्वे साम्प्रत स्थानेऽभीक्ष्ण शश्वदनारते' इत्यमर । क्षोभात् दु खात रघुराजस्य रामस्य बाणास्तेषा तत्प्रहारजनिता जीर्णा पुरातना व्रणाः क्षतास्तेषा स्फोट विघटनमाचचक्ष इव सदर्शयामासेवेत्यर्थ । रामचन्द्रबाण-जनितक्षता नाऽद्याऽपि गता अतो भवद्भिर्न बाणसधान कार्यमिति प्रार्थयामासेति भाव । अत्र रक्तपाषाणेषु जीर्णव्रणस्फोटस्य सभावनादुत्प्रेक्षालङ्कार ।

### भाषा

मौर्वी चढे धनुष को लिये हुवे उस राजा को देखकर सतत दु ख से समुद्र, अपने भीतर के रक्त के सदृश लाल रग के लाल पत्थरो के द्वारा मानो रामचन्द्र के बाणो के पुराने घाव फट रहे हो ऐसा दिखाने लगा । अर्थात् रामचन्द्र के बाणो से भये घाव अभी तक भरे नही है अब तुम बाण मत मारो ऐसी प्रार्थना करने लगा ।

**राशीकृतं विश्वमिवावलोक्य वेलावने यस्य चमूसमूहम् ।**
**अम्भोविभूतेरपरिक्षयेण क्षारत्वमब्धिर्बहुमन्यते स्म ॥११०॥**

### अन्वयः

अब्धिः वेलावने राशीकृतं यस्य चमूसमूहं विश्वम् इव अवलोक्य अम्भोविभूतेः अपरिक्षयेण क्षारत्वं बहुमन्यते स्म ।

### व्याख्या

अब्धि समुद्रो वेलावने तटारण्ये राशीकृतमेकत्रीकृत यस्य राज्ञश्चमूसमूह सैन्यसङ्घमेकत्रीभूत सम्पूर्णं विश्वमिव जगदिवाऽवलोक्य दृष्ट्वाऽम्भसो जलाना विभूते सम्पदोऽपरिक्षयेण वैरस्येन पानादिकर्मणि व्ययाभावात् क्षारत्व लवण-रसाधिक्य बहुमन्यते स्म प्रशसितवान् । अत्राऽपरिक्षयरूपकार्ये क्षारत्व कारण-मिति प्रशसाहेतु । सेनासमूहस्य विश्वेन सह साम्यादुपमालङ्कार ।

### भाषा

सम्पूर्ण जगत् एकत्रित हो गया है ऐसा दिखाई पडने वाले जिस राजा के सेनासमूह को अपने तट पर एकत्रित देखकर जलसम्पत्ति का जरा भी खर्च न

होने से, समुद्र, अपने जल के खारेपन की सराहना करने लगा। अर्थात् यदि जल निमकीन न होता तो उस राजा की सेना उसका सब जल पी जाती।

**उत्तम्भयामास पयोनिधेर्यस्तीरे जयस्तम्भमदम्भवीरः।**
**असूयितं स्वैरविहारशीलैरालानभीत्या जलवारणेन्द्रैः॥१११॥**

### अन्वय

अदम्भवीरः यः पयोनिधेः तीरे स्वैरविहारशीलैः जलवारणेन्द्रैः आलानभीत्या असूयितं जयस्तम्भम् उत्तम्भयामास।

### व्याख्या

नास्ति दम्भ कपटो यस्मिन्स अदम्भ आडम्बररहितश्चाऽसौ वीरो योद्धा यो राजा पयोनिधे समुद्रस्य तीरे तटे स्वैरं स्वच्छन्द विहारस्य विहरणस्य शील स्वभावो येषा तैर्जलवारणेन्द्रैस्समुद्रहस्तिभिरालानस्य करिबन्धस्तम्भस्य 'तोत्र वेणुकमालान बन्धस्तम्भेऽथ शृंखले' इत्यमर। भीत्या भयेनाऽसूयित दोषाविष्करणेन निन्दित जयस्तम्भ विजयसूचकस्तम्भमुत्तम्भयामास निचखान। जयस्तम्भे समुद्रगजानामालानस्य भ्रान्त्याऽसूयेति प्रतीत्या भ्रान्तिमानलङ्कारो व्यङ्ग्य।

### भाषा

दम्भरहित वीर, उस राजा ने, स्वच्छन्द विहार करने वाले जल हाथियो द्वारा हाथी बाधने के खूटे के भय से ईर्ष्या युक्त दृष्टि से देखे जानेवाले विजय-स्तम्भ को समुद्र के तट पर गाड दिया।

**लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिष्यन्दमुपान्तभाजाम्।**
**गृहीतसारस्त्रिदशैः पयोधिः पीयूषसंदर्शनसौख्यमाप॥११२॥**

### अन्वयः

त्रिदशैः गृहीतसारः पयोधिः उपान्तभाजा यदन्तःपुरसुन्दरीणां लावण्यनिष्यन्दं लब्ध्वा पीयूषसंदर्शनसौख्यम् आप।

### व्याख्या

त्रिदशैर्देवं 'अमरानिर्जरा देवास्त्रिदशा विबुधा सुरा' इत्यमर.। गृहीत. स्वायत्तीकृत सारस्तत्वममृत यस्य स पयोधि· समुद्र उपान्त सामीप्यं भजन्ति

तास्तासा तटप्रान्तविहारिणीना यस्य नृपस्याऽन्त पुरसुन्दरीणामन्त -पुरपुरन्ध्रीणां लावण्यनिष्यन्द लावण्यरस लब्ध्वा प्राप्य पीयूषस्याऽमृतस्य सदर्शन चिरकालानन्तर प्रत्यक्षीकरण तज्जन्य सौख्यमानन्द सुधादर्शनजन्यामोदसमानमानन्दमाप लेभे। देवैरमृतस्य गृहीतत्वात्स्वसमीपे तस्याऽभावात्साम्प्रत तल्लावण्यामृत दृष्ट्वा पूर्वमानन्द प्रापेति भाव। स्त्रीणा लावण्यस्य पीयूषेण साम्यदर्शनादुपमालङ्कार।

### भाषा

देवो ने, जिसमे से अमृत जैसी सारभूत वस्तु निकाल ली है, ऐसे समुद्र ने अपने तट पर घूमने वाली उस राजा की रानियो के लावण्य रूपी अमृत रस को प्राप्त कर अमृत को प्रत्यक्ष देखने का सौख्य पाया। अर्थात् अपनी गई हुई प्रिय वस्तु के फिर मिल जाने पर जैसा आनन्द होता है वैसा आनन्द समुद्र को प्राप्त हुआ।

**जयैकरागी विजयोद्यमेषु दृष्ट्वा प्रयाणावधिमम्बुधिं यः।**
**उत्कण्ठितोऽभूद्दशकण्ठशत्रु—सेतौ समस्यापरिपूरणाय ॥११३॥**

### अन्वयः

जयैकरागी यः विजयोद्यमेषु अम्बुधि प्रयाणावधि दृष्ट्वा दशकण्ठशत्रुसेतौ समस्यापरिपूरणाय उत्कण्ठितः अभूत्।

### व्याख्या

जयस्य विजयस्यैवैको रागी प्रेमी विजयैकरतिर्यो नृपो विजयोद्यमेषु विजययात्रास्वम्बुधि समुद्र प्रयाणस्य गमनस्याऽवधि चरमा सीमा दृष्ट्वा विज्ञायाऽग्रेगमनस्य प्रतिरोधक मत्वा दशकण्ठस्य रावणस्य शत्रू रामस्तस्य सेतुस्तस्मिन् समस्यापरिपूरणाय राम-निर्मितार्धनष्टसेतो पुनर्निर्माणायोत्कण्ठित समुत्सुकोऽभूत्।

### भाषा

केवल विजय ही प्राप्त करने का प्रेमी वह राजा विजय-यात्राओ की चरमसीमा समुद्र को देखकर रावण के शत्रु राम जी के बनाये हुए टूटे पुल को पूरा बनाने के लिये उत्कण्ठित हुआ।

**दोर्दण्डदर्पाद्द्रविडप्रकाण्डं यः सम्मुखं धावितमेकवीरम्।**
**अभाजनं वीररसस्य चक्रे बाणोत्करच्छिद्रपरम्पराभिः ॥११४॥**

**अन्वयः**

यः दोर्दण्डदर्पात् सम्मुखं धावित द्रविडप्रकाण्डम् एकवीरं बाणोत्क-रच्छिद्रपरम्पराभिः वीररसस्य अभाजनं चक्रे ।

**व्याख्या**

यो राजा दोर्दण्डयोर्भुजदण्डयोर्दर्पादभिमानात्सम्मुखमभिमुख धावित वेगेना-ऽऽगत द्रविडेषु द्रविडदेशीयनृपेषु प्रकाण्ड श्रेष्ठमेकवीरमप्रतिमभट चोलदेशेश्वर बाणानामिषूणामुत्करस्समूहस्तै कृताभिश्छिद्रपरम्पराभि शरवर्षजनितच्छिद्रैर्वीर रसस्योत्साहरूपजलस्याऽभाजनमनाश्रय चक्रे । जलपात्रे च्छिद्रसत्वाद्यथा जलं तत्र न तिष्ठति तथैव तस्मिन् राज्ञि शरवर्षजनितच्छिद्रैर्वीररसस्याऽभावो जात इति भाव ।

**भाषा**

जिस राजा ने, अपने भुजबल के अभिमान से सामने दौड पडे हुए द्रविड देशीय योद्धाओ मे अप्रतिम वीर चोल देश के राजा को बाणो की वर्षा से छिद्रमय बनाकर उसमे वीररस रूपी जल का अभाव कर दिया । अर्थात् उसका सब वीररस, छेद वाले बर्तन मे से जैसे पानी चू कर वह बर्तन खाली हो जाता है वैसे उन छिद्रो से बाहर चू गया और वह वीररसहीन हो गया । अर्थात् हार गया ।

**पृथ्वीभुजङ्गः परिकम्पिताङ्गीं यशःपटोल्लुण्ठनकेलिकारः ।**
**विधृत्य काञ्चीं भुजयोर्बलेन यश्चोलराज्यश्रियमाचकर्ष ॥११५॥**

**अन्वयः**

यः यशःपटोल्लुण्ठनकेलिकारः पृथ्वीभुजङ्गः भुजयोः बलेन काञ्चीं विधृत्य परिकम्पिताङ्गीं चोलराज्यश्रियम् आचकर्ष ।

**व्याख्या**

य प्रसिद्धो यशश्चोलकीर्तिरेव पटस्तस्योल्लुण्ठनमुत्क्षेपणमपहरणमेव केलिस्ता करोतीति यश पटोल्लुण्ठनकेलिकार पृथ्व्या पृथिव्या भुजङ्ग पति कामुकश्च भुजयोर्बलेन काञ्ची तन्नाम्नी नगरी रशनाञ्च विधृत्य जित्वा प्रगृह्य च परिकम्पितमङ्ग यस्या सा भयेन प्रेम्णा च कम्पयुक्ता चोलराजस्य श्रिय लक्ष्मी ललनाञ्चाऽऽचकर्षाऽऽकृष्टवान् । अत्र नृपराज्यलक्ष्मीव्यवहारेऽप्रकृतस्य

विटकर्तृकस्य काञ्चीपरिग्रहेण हठादन्यसाधारणनायिकासमाकर्षणरूपस्याप्रकृत-व्यवहारस्याऽभेदसमारोपात्समासोक्तिरलङ्कार ।

## भाषा

चोलराज की कीर्त्ति रूपी वस्त्र को उतार लेने की अर्थात् अपहरण करने की क्रीडा करने वाले उस राजा या कामुक ने अपनी भुजाओ के बल से काञ्ची-नगरी को जीत कर या करधनी पकड कर भय से या प्रेम से कापने वाली चोल राजा की राज्यलक्ष्मी को या कामिनी को अपनी ओर खीचा। अर्थात् जिस प्रकार कोई कामुक किसी कापती हुई कामिनी की साडी छोडकर अपने हाथो से उसकी करधनी पकड कर उसे अपनी ओर खीचता है उसी प्रकार उस राजाने यश कमाने की इच्छा से अपने भुजबल से काञ्चीनगरी को जीत कर भय से कम्पित चोलराज की लक्ष्मी को अपनी ओर खीच लिया।

**चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।**
**अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि[1] ॥११६॥**

## अन्वयः

वनान्ताः कण्टकिनः यद्भीतिपलायितस्य चोलस्य भालत्वचम् अद्यापि (अयं) किं वा अनुभविष्यति इति अक्षराणि द्रष्टुम् इव व्यपाटयन् ।

## व्याख्या

वनान्ता वनप्रान्तस्था कण्टकिन कण्टकाकीर्णा वृक्षा यस्माद्राज्ञ आहवमल्ल-देवाद्भीत्या भयेन पलायितस्य सुतरा दूर गतस्य चोलस्य चोलदेशनृपस्य भालत्वच ललाटचर्म, अद्याप्यत परमपि चोलराजाऽय कि वा कीदृशाण्यन्यदु खान्यनु-भविष्यतीत्यक्षराणि ललाटलिखितानि द्रष्टुमिव व्यपाटयन् विदारितवन्त । अत्र वनान्तकण्टकवृक्ष-कर्तृकभालत्वग्विपाटने 'अद्यापि कि वाऽयमनुभविष्यतीत्यक्षर-दर्शनस्य प्रयोजनत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा ।

## भाषा

जगल के कण्टकी वृक्षो ने इस आहवमल्ल देव राजा के भय से भागने वाले चोल देश के राजा के ललाट के चमडे को मानो इसके भाग्य मे अब और

---

[1] श्लोकोऽय बहुष्वलङ्कारग्रन्थेषूदाहरणार्थमुद्धृत ।

कौन २ दु ख लिखे है इन अक्षरो को पढने के लिये चीर डाला। अर्थात् भय से काटो मे से भागते २ उसके ललाट का चमडा कट गया।

**दहत्यशेषं प्रतियोगिवर्गमनर्गले यद्भुजशौर्यवन्हौ।**
**प्रत्यर्थिपृथ्वीपतिचिन्त्यमानो न कोऽपि मन्त्रः प्रतिबन्धकोऽभूत् ।११७।**

### अन्वय

अनर्गले यद्भुजशौर्यवन्हौ अशेष प्रतियोगिवर्ग दहति(सति) प्रत्यर्थि-पृथ्वीपतिचिन्त्यमानः कः अपि मन्त्रः प्रतिबन्धकः न अभूत्।

### व्याख्या

नास्त्यर्गल प्रतिबन्धक यस्मिन्तस्मिन् यस्य राज्ञो भुजस्य शौर्यरूपाग्नौ वीर्यरूपवन्हावशेष समग्र प्रतियोगिवर्ग शत्रुसमूह दहति भस्मसाद्भवति सति प्रत्यर्थिपृथ्वीपतिभि शत्रुभूतराजभिश्चिन्त्यमानो विचार्यमाण स्मृत कोऽपि मन्त्र काऽपि मन्त्रशक्ति 'षड्गुणा शक्तयस्तिस्र प्रभावोत्साहमन्त्रजा' इत्यमर। वन्हिशामकमन्त्रश्च यथा-उत्तरस्मिश्च दिग्भागे मरीचो नाम राक्षस। तस्य मूत्रपुरीषाभ्या हुतस्तम्भ प्रजायते'। प्रतिबन्धक प्रतिरोधको नाऽभूत्। मन्त्रेण वन्हि प्रतिबध्यते मन्त्रशक्त्या च राज्य रक्ष्यते। भुजशौर्ये वन्हित्वारोपाद्रूपकम्। शौर्यव्यवहारे वन्हिव्यवहारस्याऽप्यभेदप्रतिपत्ति।

### भाषा

जिस राजा की अप्रतिहत भुजबल रूपी अग्नि मे सब शत्रुओ के जलते रहने पर अर्थात् उसके भुजबल से शत्रुओ का नाश होते रहने पर, विपक्षी राजाओ द्वारा प्रयुक्त षाड्गुण्यादि उपाय या "उत्तरस्मिँश्चदिग्भागे मरीचो नाम राक्षस। तस्य मूत्रपुरीषाभ्या हुतस्तम्भ प्रजायते" सदृश अग्निस्तम्भक मन्त्र उस अग्नि का शामक न हुवा। अर्थात् उस राजाको विपक्षी राजाओ को परास्त करते रहने से रोकने मे विपक्षियो का कोई उपाय सफल न हुआ।

**ब्रूमस्तस्य किमस्त्रकौशलविधौ देवस्य विक्रामतः**
**पुष्पेषोरिव यस्य दुष्परिहराः सर्वैरखर्वाः शराः।**
**राज्ञामप्रतिभानमेव विदधे युद्धेषु यस्योर्जित-**
**ज्यानिष्ठ्यूतनितान्तनिष्ठुररवप्राप्ताग्रवादो भुजः ॥११८॥**

### अन्वयः

यस्य पुष्पेषोः इव अखर्वाः शराः सर्वैः दुष्परिहराः यस्य ऊर्जितज्या-निष्ठ्यूतनितान्तनिष्ठुररवप्राप्ताग्रवादः भुजः युद्धेषु राज्ञाम् अप्रतिभानम् एव विदधे, तस्य विक्रामतः देवस्य अस्त्रकौशलविधौ किं ब्रूमः ।

### व्याख्या

यस्य राज्ञ पुष्पेषो कुसुमबाणस्य कामस्य इवाऽखर्वा प्रबला शरा बाणास्स-र्वैर्वीरैर्दुष्परिहरा दु खेन परिहर्तुं शक्या कृच्छ्रेण प्रतिरोधनीया निवारणीया इत्यर्थ । यस्योर्जितया बलवत्या ज्यया मौर्व्या निष्ठ्यूतो निस्सृतो नितान्त-मत्यन्त निष्ठुर कठोरो रव शब्दस्तेन प्राप्तो लब्धोऽग्रवादो युद्धाव्हानाय प्रथम-ध्वानो यस्य स भुजो युद्धेषु रणेषु राज्ञा नृपाणामप्रतिभान प्रतिभाराहित्य विवेकशून्यत्व मूकत्व वा किं कर्तव्यताविमूढत्वमित्यर्थ । विदधे चक्रे, तस्य विक्रामत पराक्रमशालिनो देवस्याऽऽहवमल्लदेवस्य, 'नामैकदेशग्रहणे नामग्रहणम् ।' अस्त्राणा कौशलविधौ सचालनप्रावीण्यविधो शस्त्रास्त्रविद्यानैपुण्यविषये किं ब्रूम किमपि कथनीय नाऽस्ति । अवाग्गोचरत्वमेवेत्यर्थ । अत्र शार्दूलविक्रीडितचछन्द. । 'सूर्याश्वैर्मसजास्ततस्सततगा शार्दूलविक्रीडितमिति' ।

### भाषा

उस पराक्रमी राजा आहवमल्लदेव की अस्त्र चलाने की प्रवीणता के सम्बन्ध मे विशेष क्या कहा जाय, जिसके कामदेव के समान प्रबल बाणो को कोई भी टाल नही सकता था और जिसकी शक्तियुक्त मोर्वी के अत्यन्त कठोर शब्दो द्वारा सर्व प्रथम ललकार ने वाली भुजा, युद्धो मे शत्रुओ को किं कर्तव्यता-विमूढ अतएव मूक बना देती थी ।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये प्रथम सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाज-बुधोत्तमात्समुदितः श्रीविश्वनाथः सुधीः ।**
**चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यकः**
**सर्गेऽस्मिन्प्रथमे रमाकरुणया टीकाद्वय निर्मलम् ॥**

ॐ शान्ति शान्ति शान्ति



॥ श्री ॥

## महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

## द्वितीयः सर्गः ।

अथ कल्याणनाम्नी चालुक्यराजधानी पञ्चविंशतिश्लोकैर्वर्णयति महाकविः ।

चकार कल्याणमिति क्रमादसौ पुरं परार्ध्यं पृथिवीपुरन्दरः ।
यदुच्चहर्म्यावलिदीपसंपदां विभाव्यते कज्जलसंनिभं नभः ॥१॥

### अन्वयः

असौ पृथिवीपुरन्दरः क्रमात् कल्याणम् इति परार्ध्यं पुरं चकार यदुच्चहर्म्यावलिदीपसंपदा कज्जलसंनिभं नभः विभाव्यते ।

### व्याख्या

असावाहवमल्लदेवनामा पृथिव्या पृथ्व्याः पुरन्दर इन्द्रः क्रमात् कियता कालेन कल्याणमिति कल्याणनामकं परार्ध्यं श्रेष्ठं 'पराघ्यग्रिप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः । पुरं नगरं चकार निर्मापयामास यस्य पुरस्य हर्म्याणि प्रासादास्तेषामावलिः पंक्तिः 'वीथ्यालिरावलिः पंक्तिः श्रेणीत्यमरः' । तस्या दीपसंपदा दीपजालाना कज्जलसंनिभं कज्जलसदृशं नभोऽन्तरिक्षं 'नभोन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः । विभाव्यते ज्ञायतेस्म । उत्प्रेक्षालङ्कारः । सर्गेऽस्मिन्वंशस्थच्छन्दः 'जतौतु वंशस्थमुदीरितं जरौ' ।

### भाषा

इस आहवमल्लदेव राजा ने धीरे २ कल्याण नामका एक श्रेष्ठ नगर बसाया

जिसके धनियो के ऊँचे २ मकानो की कतार पर जलने वाले असख्य दीयो के कज्जल के समान आकाश दिखाई देता था। अर्थात् काला आकाश उन दीयो का धूवाँ मालुम होता था।

**निवर्तिताश्चन्दनलेपपाण्डुभिर्नतभ्रुवां यत्र समुन्नतैः स्तनैः ।**
**मुखानिला एव कदर्थनक्षमा भवन्ति माने मलयाद्रिवायवः ॥२॥**

### अन्वयः

यत्र नतभ्रुवां चन्दनलेपपाण्डुभिः स्तनैः निवर्तिता मुखानिलाः एव माने कदर्थनक्षमाः मलयाद्रिवायवः भवन्ति।

### व्याख्या

यत्र पुरे नते वक्रे भ्रुवौ दृग्भ्यामूर्ध्वभागौ 'ऊर्ध्वे दृग्भ्या भ्रुवौ स्त्रियौ' इत्यमर। यासा तास्तासामङ्गनाना चन्दनस्य लेपेन पाण्डुभि शुक्लवर्णै समुन्नतैस्तुङ्गै स्तनै पयोधरैर्निर्वातिता मुखान्निसृत्य स्तनैस्सघटच पुन परावृत्ता मुखानिला एव माने मानावस्थाया कदर्थने व्यथोत्पादने मानभङ्गकरणे च क्षमा समर्था मलयाद्रेर्वायवो दक्षिणानिला भवन्ति। मलयाद्रिवायुवद्विरहव्यथासदीप-नक्षमा भवन्तीति भाव। अत्र रूपकालङ्कार।

### भाषा

जिस नगर की नारियो के मुख से निकलने वाले वायु ही चन्दन के लेप से श्वेत वर्ण उच्च कुचो से टकरा कर फैलते हुए, मानावस्था मे विरह व्यथा को उत्पन्न करने मे समर्थ मलयानिल ही हो जाते हे। मलयानिल जिस प्रकार चन्दन वृक्षो के सम्पर्क से सुगन्धित होकर पहाडो से टकरा कर फैलते हुए अपनी सुगन्ध और शैत्य से विरह व्यथा कारक होते हैं वैसे ही नारियो के मुखानिल स्तन पर के चन्दन लेप से सुवासित व शीत होकर ऊचे कठोर स्तनो से टकरा कर मन्दगति से फैलते हुए मानावस्था मे उनके पतियो को विरह व्यथा कारक होकर उनका मान भङ्ग करने मे समर्थ होते थे।

**क्षपाकरः कातररश्मिमण्डलः पुरन्ध्रिगण्डस्थलकान्तिसम्पदा ।**
**विकीर्णसंमार्जनभस्मरेणुना बिभर्ति यस्मिन्मुकुरेण तुल्यताम् ॥३॥**

**अन्वयः**

यस्मिन् पुरन्ध्रिगण्डस्थलकान्तिसम्पदा कातररश्मिमण्डलः क्षपाकरः विकीर्णसंमार्जनभस्मरेणुना मुकुरेण तुल्यता बिभर्ति ।

**व्याख्या**

यस्मिन्नगरे पुरन्ध्रीणा पतिव्रतास्त्रीणा 'पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता' इत्यमर । गण्डस्थलस्य कपोलस्थलस्य कान्तीना रुचीना सपदा समूहेन कातर हतप्रभ रश्मिमण्डल किरणजाल यस्य स 'किरणप्रग्रहौ रश्मी-त्यमर । क्षपाकरश्चन्द्र 'नक्षत्रेश क्षपाकर' इत्यमर । विकीर्ण पतित समार्जनस्य गृहसमार्जनस्य भस्मरेणुर्धूलिर्यस्मिन्स तेन मुकुरेण दर्पणेन 'दर्पणे मुकुरादर्शौ' इत्यमर । सह तुल्यता समानता बिभर्ति धारयति । उपमा-लङ्कार ।

**भाषा**

जिस नगर मे सती स्त्रियो के कपोलस्थल की कान्ति के आधिक्य से हतप्रभ किरण समूह वाला चन्द्रमा, झाडू देने मे उडी हुई धूली के कणो से आच्छादित ऐने के समान दिखाई देता था ।

**विलासदोलायितदन्तपत्रयोः क्षपासु यत्रेन्दुरलक्ष्यमण्डलः ।**
**प्रविश्य संक्रान्तिमिषेण योषितां कपोलयोः कान्तिजलं विलुम्पति ।।४।।**

**अन्वयः**

यत्र क्षपासु सक्रान्तिमिषेण प्रविश्य विलासदोलायितदन्तपत्रयोः योषिता कपोलयोः अलक्ष्यमण्डलः इन्दुः कान्तिजल विलुम्पति ।

**व्याख्या**

यत्र पुरे क्षपासु रात्रिषु विलासे स्वैरक्रीडाया दोलायिते दोलावदाचरिते पुर पश्चाद्गतागते दन्तपत्रे ताटङ्कौ ययोस्तयोर्योषिता नारीणा 'स्त्रीयोषिदबला योषा नारी सिमन्तिनी वधु' इत्यमर । कपोलयोर्गण्डस्थलयोरलक्ष्यमविज्ञात मण्डल बिम्ब यस्य स इन्दुश्चन्द्र सक्रान्तिमिषेण प्रतिबिम्बव्याजेन प्रविश्य गत्वा कान्तिजल लावण्यामृत विलुम्पति पिबति । चन्द्रतोऽधिककान्तिमत्वात्कपोलयो पतितस्य चन्द्रप्रतिबिम्बस्य व्याजेनेन्दु कामिनीना स्वकान्तिविवृद्धचर्थ लावण्या-

मृतपान करोतीत्यर्थ । चन्द्रतोऽप्यधिककान्तिमन्मुख्य स्त्रिय इति भाव । अत्र सापन्हवा गम्योत्प्रेक्षा तत उपमानापेक्षयोपमेयस्य गुणाधिक्यप्रतीत्या व्यतिरेकध्वनिश्च ।

### भाषा

जिस नगर मे रात्रियो मे विलास मे हिलने वाले कर्ण के आभूषणो से युक्त स्त्रियो के कपोल स्थलो मे चन्द्रमा अप्रत्यक्ष रूप से, प्रतिबिम्ब के बहाने से प्रविष्ट होकर उनके लावण्यामृत का पान करता है । अर्थात् उन स्त्रियो के मुख, चन्द्रमा से अधिक कान्तियुक्त थे ।

**गतोऽपि यत्र प्रतिबिम्बवर्त्मना समीपतां वञ्चयितुं प्रगल्भते ।**
**मुखानि जाग्रन्मदनानि सुभ्रुवां सयामिकानीव न यामिनीपतिः ॥५॥**

### अन्वयः

यत्र यामिनीपतिः प्रतिबिम्बवर्त्मना समीपता गतः अपि जाग्रन्मदनानि सयामिकानि इव सुभ्रुवा मुखानि वञ्चयितुं न प्रगल्भते ।

### व्याख्या

यत्र पुरे यामिन्या रात्रे पति स्वामी चन्द्र 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमर । प्रतिबिम्बवर्त्मना प्रतिबिम्बमार्गेण प्रतिबिम्बव्याजेन वा समीपता सामीप्य गतोऽपि प्राप्तोऽपि जाग्रन्मदन कामो येषु तानि समुद्दीप्त-मन्मथानीति भाव । अतएव यामिकै प्रहररक्षकै सहितानि युक्तानीव सुभ्रुवा कामिनीना मुखान्यास्यानि वञ्चयितु प्रतारयितु न प्रगल्भते न समर्थो भवति । अत्र नूतनहेतुकल्पनया काव्यलिङ्गमलङ्कार 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग निगद्यते ।'

### भाषा

जिस पुर मे, चन्द्रमा, प्रतिबिम्ब के बहाने से समीप आने पर भी कामोद्दीपन से मस्त कामिनियो के मुखो को, पहरा देने वालो के समान कामदेव के वहाँ जागते रहन के कारण, ठग नही सकता था । अर्थात् अपनी सौभाग्यसम्पत्ति तथा सौन्दर्य से उन कामिनीयो के मुखो को नीचा नही दिखा सकता था ।

**जलाशया यत्र हसन्ति सन्ततं नवेन्द्रनीलद्रवनिर्मलोदराः ।**
**शरत्समुत्सारितमेघकर्दमं कलिन्दकन्याह्रदमेचकं नभः ॥६॥**

### अन्वयः

यत्र नवेन्द्रनीलद्रवनिर्मलोदराः जलाशयाः शरत्समुत्सारितमेघकर्दमं कलिन्दकन्याह्रदमेचक नभः सन्तत हसन्ति ।

### व्याख्या

यत्र कल्याणकटकनामकनगरे नवो नूतन इन्द्रनीलमणीना द्रवो द्रुतपदार्थस्तद्व-न्निर्मल मलरहितमुदर मध्य येषा ते जलाशया सरासि शरदा शरदृतुना समुत्सारिता दूरीकृता मेघा एव कर्दमा पङ्का यस्मात्तत् कलिन्दकन्याया यमुनाया ह्रदोऽगाधपयस्तद्वन्मेचक कृष्णवर्ण नभ आकाश सन्तत सतत हसन्ति स्वशोभया तिरस्कुर्वन्ति । शरदृतौ नभसि मेघा न दृश्यन्ते जले च पङ्करा-हित्यान्नैर्मल्य जायते । अत्र जलाशयाना नभसा सादृश्यप्रतीत्योपमाया हसन्तीति पदेन व्यङ्ग्यत्वम् ।

### भाषा

जिस कल्याणकटक नगर मे नये इन्द्रनील मणियो के द्रव के समान स्वच्छ स्तर वाले जलाशय, शरद ऋतु के आने पर मेघ रूपी कीचड से रहित और यमुनानदी के अगाध जल के समान नीले रग के आकाश की हँसी उडाते है । अर्थात् उन जलाशयो की नीलिमा आकाश की नीलिमा से सुन्दर थी ।

**प्रकर्षवत्या कपिशीर्षमालया यदुद्भटस्फाटिकवप्रसंहतिः ।**
**विलोकयत्यम्बरकेलिदर्पणे विलासधौतामिव दन्तमण्डलीम् ॥७॥**

### अन्वयः

यदुद्भटस्फाटिकवप्रसंहतिः प्रकर्षवत्या कपिशीर्षमालया विलासधौतां दन्तमण्डलीम् अम्बरकेलिदर्पणे विलोकयति इव ।

### व्याख्या

यस्य कल्याणपुरस्योद्भटा बृहती स्फाटिका स्फटिकमणिशिलानिर्मिता वप्रस्य प्राकारस्य सहति सन्तति श्रेणि प्रकर्षवत्याऽत्युन्नतया कपिशीर्षाणि प्राकारस्यो-

च्चतमभागा ( बुर्जिया इतिलोके प्रसिद्धा ) तेषा माला पक्तिस्तया विलासेनाऽप्रयासेन सुगन्धिमञ्जनेन वा धौता क्षालितामत एव शुभ्रा दन्ताना रदाना मण्डली समूहमम्बरमेवाऽऽकाशमेव केलिदर्पणस्तस्मिन्नवलोकयतीव पश्यतीव । आकाशरूपदर्पणे वप्रस्य स्वकपिशीर्षरूपदन्तानामवलोकनमुत्प्रेक्ष्यते । अत उत्प्रेक्षालङ्कार ।

### भाषा

जिस कल्याण नगरी की स्फटिक की चट्टानो से बनी दीवारो की कतार, उन्नत श्वेत गुम्बजो के बहाने से मानो सुगन्धित मञ्जन से अप्रयास से ही दतुवन किए हुए अपने श्वेत दाँतो को आकाशरूपी क्रीडादर्पण मे देखती है ।

**पुराङ्गनावक्त्रसहस्रकान्तिभिस्तिरोहिते रात्रिषु तारकापतौ ।**
**क्व रौप्यकर्पूरकरण्डपाण्डुरः शशीति यत्र भ्रममेति रोहिणी ॥८॥**

### अन्वयः

यत्र रात्रिषु रोहिणी तारकापतौ पुराङ्गनावक्त्रसहस्रकान्तिभिः तिरोहिते (सति) रौप्यकर्पूरकरण्डपाण्डुरः शशी क्व इति भ्रमम् एति ।

### व्याख्या

यत्र रात्रिषु निशासु 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमर । रोहिणी चन्द्रप्रिया तारकाणा ताराणा 'नक्षत्रमृक्ष भ तारा तारकाऽप्युडु वा स्त्रियाम्' इत्यमर । पतिश्चन्द्रस्तस्मिन् पुरस्य कल्याणपुरस्याऽङ्गना ललनास्तासा वक्त्राणि मुखानि तेषा सहस्राणि तेषा कान्तिभिरत्युत्कटप्रभाभिस्तिरोहिते पिहिते सति रूपेण रजतेन निर्मितो रौप्यो य कर्पूरकरण्ड कर्पूराधानपात्रविशेषस्तद्वत्पाण्डुर शुभ्र शशी चन्द्र क्व कुत्र वर्तत इति भ्रम भ्रान्तिमर्थात्सन्देहमेति समासादयति । अङ्गनामुखाना चन्द्रसादृश्यातिशयमूलकचन्द्राभेदप्रतीत्या पार्थक्येन चन्द्रप्रतीतिरेव नास्तीति भाव । अथवा पुराङ्गना मुखचन्द्रसहस्रकान्तिभिस्तिरोहिते चन्द्रेऽस्मत्पतिश्चन्द्र क्वेति रोहिणी भ्रममेति । अत्रसन्देहालङ्कारो व्यङ्ग्य । मीलितालङ्कारश्च । 'मीलित वस्तुनो गुप्ति. केनचित्तुल्यलक्ष्मणा ।'

### भाषा

जिस पुर मे रात को हजारो स्त्रियो के मुखो की कान्ति से चन्द्रमा के न

पहिचाने जाने पर चादी की कपूर की डिबिया के सदृश शुभ्रवर्ण चन्द्रमा कहाँ है, ऐसा चन्द्रपत्नी रोहिणी को सन्देह हुआ करता था।

**यदीयलीलास्फटिकस्थलीभुवाममुग्धदुग्धाब्धिसमत्विषां पुरः।**
**दवाग्निनिर्दग्धवनस्थलोपमं विलोक्यते कज्जलकश्मलं नभः ॥६॥**

### अन्वयः

अमुग्धदुग्धाब्धिसमत्विषा यदीयलीलास्फटिकस्थलीभुवा पुरः कज्जलकश्मल नभः दवाग्निनिर्दग्धवनस्थलोपम विलोक्यते।

### व्याख्या

अमुग्ध स्वच्छश्चासौ दुग्धाब्धि क्षीरसागरस्तेन समा समानास्त्विष कान्तयो यासा ता यदीया कल्याणपुरसम्बन्धिन्यो लीलाया विलासस्य क्रीडार्थमारचिता स्फटिकस्थल्य स्फटिकमणिनिर्मितभूमयस्तासा पुरोऽग्रे कज्जलवत्कश्मल श्यामवर्ण नभ आकाश दवाग्निना दावानलेन निर्दग्ध भस्मीकृत वनस्थलमरण्यप्रान्तस्तस्योपमासादृश्य यस्य तद्वद्विलोक्यते दृश्यते। स्फटिकस्थल्याकाशयोर्नैर्मल्यसामान्यत्वेऽपि स्फटिकस्थल्या शुभ्रवर्णत्वादधिकसौन्दर्यमिति भाव। ततश्च व्यतिरेकध्वनि।

### भाषा

निर्मल क्षीर सागर के समान शुभ्र कान्ति वाले जिस कल्याण पुर के स्फटिक के बने हुवे क्रीडाङ्गणो के सामने कज्जल के ऐसा काला आकाश दावानल से जले हुए वनस्थल के समान दिखाई देता था।

**तटद्रुमाणां प्रतिबिम्बमालया सपारिजातामिव दर्शयञ्छ्रियम्।**
**स यत्तडागः कुरुते विडम्बनां गृहीतसारस्य सुरैः पयोनिधेः ॥०१॥**

### अन्वयः

सः यत्तडागः तटद्रुमाणां प्रतिबिम्बमालया सपरिजाता श्रियं दर्शयन् सुरैः गृहीतसारस्य पयोनिधेः विडम्बनाम् इव कुरुते।

### व्याख्या

स प्रसिद्धो यस्य कल्याणपुरस्य तडागस्सरस्तटद्रुमाणा तीरस्थवृक्षाणा

तडागे प्रतिबिम्बाना प्रतिच्छायाना मालया पक्त्या पारिजातैरनेककल्पवृक्षै सहिता युक्ता श्रिय शोभा दर्शयन् विज्ञापयन सुरैर्देवैर्गृहीतसारस्याऽपहृतकल्पवृक्षस्य पयोनिधे समुद्रस्य विडम्बनामुपहासमिव कुरुते । समुद्रात्तु पारिजातस्यैकस्यैवोत्पत्ति सोऽपि देवैरपहृत इति समुद्रो निस्सार । अस्मिन्तडागेत्वनेकेकल्पवृक्षा परिदृश्यन्ते केनाऽपि हृताश्च नेति समुद्रात्स्वोत्कर्षे परिहासस्य बीजम् । अत्रोत्प्रेक्षालङ्कारो गम्य ।

### भाषा

जिस कल्याणपुर का तालाव, तटपर के वृक्षो की परछाही पडने से अपन भीतर अनेक कल्पवृक्ष होने की शोभा दिखाता हुआ, देवताओ द्वारा कल्पवृक्ष निकाल लिए गए हुए समुद्र की मानो हँसी उडा रहा है ।

**प्रतिक्षणं क्षालितमन्युना रणे प्रयुक्तरक्षस्य नृपेण मानिना ।**
**न यस्य कक्षां शतमन्युरक्षिता पुरी पुरप्राग्रहरस्य गाहते ॥११॥**

### अन्वयः

शतमन्युरक्षिता पुरी रणे प्रतिक्षण क्षालितमन्युना मानिना नृपेण प्रयुक्तरक्षस्य पुरप्राग्रहरस्य यस्य कक्षा न गाहते ।

### व्याख्या

शत मन्यवो क्रतवो कोपाश्च यस्य स शतमन्युरिन्द्र 'मन्युर्दैन्ये क्रतौ क्रुधि ।' इत्यमर । 'जिष्णुर्लेखर्षभ शक्र शतमन्युर्दिवस्पति ।' इत्यमर । तेन रक्षिता पालिता पुरी अमरावतीनगरी रणे युद्धे प्रतिक्षण निरन्तर क्षालितो दूरीकृतो मन्यु क्रोधो येन स तेन निर्मन्युना क्रतुरहितेन वा मानिना सगर्वेण, 'गर्वोभिमानोऽहङ्कारोमानश्चित्तसमुन्नति ।' इत्यमर । नृपेण राज्ञाऽऽहवमल्लदेवेन प्रयुक्ता कृता रक्षा यस्य तस्य पुराणा 'निर्धारणे षष्ठी' नगराणा मध्ये प्राग्रहरस्य श्रेष्ठस्य यस्य कल्याणपुरस्य कक्षा साम्य न गाहते न प्राप्नोति । शतक्रतुकारिणा शतकोपकारिणा चेन्द्रेण यत्कार्यं क्रियते तत्कार्यमनेनाऽऽहवमल्लदेवराजेन निर्मन्युनैव यज्ञरहितेनाऽपि यज्ञानुष्ठानादिक विनैव साध्यत इतिभाव । अत्र व्यतिरेकालङ्कार । 'अधिक्यमुपमेयस्योपमानान्न्यूनता तथा ।'

### भाषा

एक सौ यज्ञ करने वाले और सैकडो बार क्रोध करने वाले इन्द्र से रक्षित

अमरावती पुरी, युद्धो मे लगातार शत्रुओ का सहार करने से प्रशान्त क्रोध वाले, या यज्ञो से अपनी कार्य-सिद्धि की अपेक्षा न करने वाले, अभिमानी आहवमल्लदेव राजा से रक्षित, पुरो मे श्रेष्ठ कल्याणपुर की बराबरी नही कर सकती है।

**करोति गण्डस्थलचन्द्रमण्डले विलासवेल्लन्मणिकुण्डलातिथौ।**
**न यत्र वित्रस्तकुरङ्गचक्षुषां निघर्षभीत्येव पदं कुरङ्कः ॥१२॥**

### अन्वयः

यत्र वित्रस्तकुरङ्गचक्षुषां विलासवेल्लन्मणिकुण्डलातिथौ गण्डस्थल-चन्द्रमण्डले कुरङ्कः निघर्षभीत्या इव पद न करोति।

### व्याख्या

यत्र कल्याणपुरे वित्रस्तानि स्त्रीणा विशालनेत्रकान्त्या भीतानि कुरङ्गाणा मृगाणा चक्षूंषि नयनानि याभ्यस्तासा पुराङ्गनाना विलासेन विभ्रमेण वेल्लन्ती-तस्तत परिकम्पमानानि मणिनिर्मितकुण्डलानि कर्णभूषणान्येवाऽतिथयो यस्य तस्मिन्, क्रीडाचञ्चलमणिनिर्मितकर्णावतसविभूषिते गण्डस्थलमेव चन्द्रमण्डल शुभ्रत्वाद्वर्तुलत्वादतिशयशोभास्पदत्वाद्वा तस्मिन् कुरङ्कश्चन्द्रमण्डलस्थित-कलङ्करूपो मृगो निघर्षस्य कुण्डलसघर्षजन्याङ्गच्छेदस्य भीत्या भयेन पद स्थान न करोति तत्र न गच्छति। पुराङ्गनाना मुखानि निष्कलङ्कानीति भाव। अत्रोत्प्रेक्षालङ्कार।

### भाषा

जिस नगर मे, अपनी बडी - सुन्दर आखो से मृगो के नेत्रो को [illegible] करने वाली स्त्रियो के, खेल मे हिलने वाले कान के आभरणो से शोभित गण्ड-स्थल (गाल) रूपी चन्द्रमण्डल मे चन्द्रमा का कलङ्क रूप मृग, कर्णाभरणो की रगड के भय से नही आता। अर्थात् चन्द्र सदृश कपोल होने पर भी [illegible] सकलङ्क है किन्तु उनका गण्डस्थल निष्कलङ्क है।

**समुच्छलन्मौक्तिककान्तिवारिभिः सुवर्णकुम्भैः सुरसद्ममूर्धगैः।**
**प्रपा पिपासापरितापशान्तये नभश्चरीणामिव येन निर्मिता ॥१३॥**

**अन्वयः**

येन नभश्चरीणां पिपासापरितापशान्तये समुच्छलन्मौक्तिककान्तिवारिभिः सुरसद्ममूर्धगैः सुवर्णकुम्भैः प्रपा निर्मिता इव (प्रतीयते)।

**व्याख्या**

येन कल्याणपुरेण नभश्चरीणामाकाशविहरणशीलानामप्सरसा देवाङ्गनाना वा पातुमिच्छा पिपासा तृषा तस्या परिताप सन्तापस्तस्य शान्तये दूरीकरणाय समुच्छलन्त्य ऊर्ध्वं प्रसारिण्यो मौक्तिकाना मुक्ताना कान्तय इव वारीणि जलानि स्वच्छत्वाद्येषु तै सुराणा देवाना सद्मानि मन्दिराणि तेषा मूर्ध्नि गच्छन्तीति सुरसद्ममूर्धगास्तैर्देवमन्दिरशिरोप्रधार्यमाणै सुवर्णकुम्भै स्वर्णनिर्मितघटै 'कुम्भौ घटेऽत्र मूर्धांशौ डिम्भौ तु शिशुबालिशौ' इत्यमर। प्रपा पानीयशालिका 'प्रपा पानीयशालिकेत्यमर'। निर्मितेव सम्पादितेव प्रतीयते। उत्प्रेक्षालङ्कारोऽतिशयोक्तिश्च।

**भाषा**

जिस नगर ने आकाश मे उडने वाली अप्सरा या देवाङ्गनाओ की प्यास के कष्ट को दूर करने के लिये देवताओ के मन्दिरो के ऊपर रक्खे हुए, ऊपर फैलने वाली मोतियो की कान्ति के सदृश कान्ति वाले जल से युक्त, सोने के घडो से मानो पोसरा बैठाया था।

**जगत्त्रयीकार्मणकर्मणि क्षमं निरीक्ष्य लीलायितमेणचक्षुषाम्।**
**स्मरेण यत्र स्मरता पराभवं भवाय भूयः परिबोध्यते धनुः ॥१४॥**

**अन्वयः**

यत्र पराभव स्मरता स्मरेण एणचक्षुषा लीलायितं जगत्त्रयीकार्मणकर्मणि क्षम निरीक्ष्य भवाय भूयः धनुः परिबोध्यते।

**व्याख्या**

यत्र पुरे शिवात्पराभव पराजय स्मरता स्मरेण कामेन 'काम पञ्चशर स्मर' इत्यमर। एणाना मृगाना चक्षूषीव चक्षूषि नेत्राणि यासा तासा 'गोकर्ण पृषतैणर्श्यरोहिताक्षमरो मृगा' इत्यमर। लीलायित विभ्रम 'कार्मणमोषधिप्रयोगेण वशीकरणकर्म,' जगता त्रयी जगत्त्रयी तस्या कार्मण वशीकरणकर्म तस्य

कर्मणि विषये क्षम समर्थं निरीक्ष्य विलोक्य भवाय शिवाय शिवेन सह युद्धकरणार्थं तस्य वशीकरणार्थं वा भूय पुन धनु कार्मुक परिबोध्यते सज्जीक्रियते। एण चक्षुषा साहाय्येन साफल्य निश्चितमिति धियेति भाव । अत्र वाक्यार्थहेतुक काव्यलिङ्गमलङ्कार ।

**भाषा**

जिस नगरी की मृगनयनी स्त्रियो के हावभावो को तीनो लोको को वश कर लेने मे समर्थ समझ, शकर की हार का स्मरण रखने वाला कामदेव मानो शिव को हराने या वश मे करने के लिये फिर अपना धनुष तयार कर रहा है। अर्थात् इन मृगनयनियो की सहाय्यता से अब शकर को वश मे कर लेना सरल है, ऐसे विचार से फिर से धनुष तयार किया ।

**स्मर–प्रशस्तिप्रतिवस्तुतां गताः सलीलदात्यूहसमूहनिस्वनाः।**
**भवन्ति यत्र क्षणमात्रविश्रम–प्रदायिनः कण्ठरवेषु योषिताम् ॥१५॥**

**अन्वयः**

यत्र स्मरप्रशस्तिप्रतिवस्तुतां गताः सलीलदात्यूहसमूहनिस्वनाः योषिता कण्ठरवेषु क्षणमात्रविश्रमप्रदायिनः भवन्ति ।

**व्याख्या**

यत्र पुरे स्मरस्य कामस्य प्रशस्ति कीर्तिप्रशसा तस्या प्रतिवस्तुता तत्पर्यायरूपत्व गता प्राप्ता लीलया विलासेन सहितास्सलीला दात्यूहा जलकाका पक्षिविशेषा 'दात्यूह कालकण्ठक' इत्यमर । तेषा समूहस्य नि स्वना शब्दा योषिता स्त्रीणा कण्ठरवेषु भाषणकार्येषु गीतेषु वा क्षणमात्रमीषत्कालपर्यन्तं विश्रम शान्ति प्रददतीतिविश्रमप्रदायिनो शान्तिदातारो भवन्ति । तत्रत्याना नारीणा शब्दो दात्यूहकूजितवन्मधुर इति व्यज्यते । उपमाध्वनि ।

**भाषा**

जिस नगरी मे कामदेव की विरुदावलिस्वरूप पिहकने वाले पपीहो के शब्द, स्त्रियो के बोलने या गाने मे उनकी आवाज थोडे देर के लिये बन्द कर उन्हे विश्राम देते है । अर्थात् पपीहो के शब्द के समान मनोहर उन स्त्रियो की कण्ठध्वनि थी ।

**निराकृते यत्र रुषां समुद्गमे भुजङ्गसौभाग्यगुणेन सुभ्रुवाम् ।**
**वनान्तपुंस्कोकिलपञ्चमोर्मयो भवन्ति मानज्वरशेषभेषजम् ॥१६॥**

**अन्वयः**

यत्र सुभ्रुवा रुषा समुद्गमे भुजङ्गसौभाग्यगुणेन निराकृते (सति) वनान्तपुंस्कोकिलपञ्चमोर्मयः मानज्वरशेषभेषजं भवन्ति ।

**व्याख्या**

यत्र पुरे सुभ्रुवा सुन्दरभ्रुकुटियुक्तानामङ्गनाना रुषा कोपाना 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमर । समुद्गमे उत्पत्तौ भुजङ्गा विटजना कामुका वा तेषा यत्सौभाग्य स्त्रीप्रसादानुकूलकलाप्रावीण्य तस्य गुणेन प्रभावेणोत्कर्षेण वा निराकृते दूरीकृते सति वनान्तस्यारण्यमध्यस्य पुस्कोकिला पिकास्तेषा पञ्चमोर्मय पञ्चमस्वरतरङ्गा, (कोकिला पञ्चमस्वर एव शब्दायन्त इति लोकप्रसिद्धि ) । मानज्वरस्य प्रणयकोपरूपज्वरस्य शेषोऽवशिष्टाशस्तस्य भेषज तच्छामकौषधि 'भेषजौषधभैषज्यान्यगदोजायुरित्यपि' इत्यमर । भवन्ति जायन्ते । रूपकालङ्कार । 'रूपक रूपितारोपाद्विषये निरपन्हवे' ।

**भाषा**

जिस नगरी मे अच्छी भौवो वाली नारियो मे प्रणयकोप उत्पन्न होने पर कामुको या विटो द्वारा अपनी प्रणयकोप को दूर करने की चातुरी से उनका कोप शान्त होने पर, वन मे बोलने वाली कोयलो के पञ्चम स्वर की लहरे उनके अवशिष्ट मान रूपी ज्वर को मिटाने के लिये औषध का काम करती है । अर्थात् कोयल के शब्दो को सुनकर उनका सम्पूर्ण प्रणयकोप दूर हो जाता था ।

**प्रविष्य यद्वेश्मसु रोहिणीपतिर्गुणं महान्तं लभते न संशयः ।**
**यदेष राहोरुपयात्यलक्ष्यतां पुरन्ध्रिवक्त्रेन्दुसहस्रमध्यगः ॥१७॥**

**अन्वयः**

रोहिणीपतिः यद्वेश्मसु प्रविश्य महान्तं गुणं लभते, न संशयः । यत् एषः पुरन्ध्रिवक्त्रेन्दुसहस्रमध्यगः सन् राहोः अलक्ष्यताम् उपयाति ।

### व्याख्या

रोहिणीपतिश्चन्द्रो यस्य पुरस्य वेश्मसु गृहेषु 'गृह गेहोदवसित वेश्म सद्म निकेतनम्' इत्यमर । प्रविश्य गत्वा महान्त विशिष्ट गुण चमत्कार लाभमित्यर्थ प्राप्नोति अत्र सशय सन्देहो नास्ति । यद्यस्मात्कारणादेष चन्द्र पुरन्ध्रीणा नारीणा वक्त्रेन्दूना मुखचन्द्राणा सहस्रस्य मध्य गच्छतीति पुरन्ध्रिवक्त्रेन्दुसहस्र-मध्यग सन् स्त्रीमुखेन्दुसहस्रमध्यवर्तित्वाद्राहोरलक्ष्यतामपरिभाव्यतामुपयाति प्राप्नोति । चन्द्रबाहुल्याद्वास्तविकचन्द्रपरिचयाभावादपरिभाव्यतामुपयातीति भाव'। अत्र सामान्य नाम अलङ्कार । 'सामान्य प्रकृतस्याऽन्यतादात्म्य सदृशैर्गुणै ।'

### भाषा

रोहिणी के पति चन्द्रमा को इस नगर के घरो मे प्रवेश कर बहुत लाभ होता था इसमे सन्देह नही। क्योकि राहू, हजारो स्त्रियो के मुखचन्द्रो के बीच मे इसके रहने से, इसको नही पहचान पाता था।

**यदीयसौधध्वजपट्टपट्टिकाः समुच्चलन्मौक्तिककान्तिनिर्झरैः।**
**नभस्तलान्दोलनविभ्रमाहृतं विनिक्षिपन्तीव सुरापगापयः ॥१८॥**

### अन्वयः

यदीयसौधध्वजपट्टपट्टिकाः समुच्चलन्मौक्तिककान्तिनिर्झरैः नभस्तलान्दोलनविभ्रमाहृत सुरापगापयः विनिक्षिपन्ति इव।

### व्याख्या

यदीयेषु यत्पुरसम्बन्धिषु सौधेषु राजसदनेषु 'सौधोऽस्त्रि राजसदनम्' इत्यमर । ध्वजा पताका 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमर । तेषा पट्टस्य कौशेयस्य पट्टिका वस्त्राणि समुच्चलन्ति प्रकम्पमानानि ध्वजपटप्रान्तभागविनिविष्टानि मौक्तिकानि तेषा कान्तिनिर्झरै. प्रभाप्रवाहै 'प्रवाहो निर्झरो झर' इत्यमर नभस्तले व्योम्नि आन्दोलनस्येतस्तत. सचलनस्य विभ्रमेण विलासेनाऽऽहृत समाकृष्ट सुरापगाया स्वर्गङ्गाया पयो जल विनिक्षि-पन्तीव सिञ्चन्तीव। अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

जिस नगर के प्रासादो पर के झण्डो की रेशम की पट्टियो मे लग हुए मोतियो की कान्ति रूपी जल के झरनो से मालूम होता था कि पट्टियो के आकाश मे सतत हिलते रहने से उनकी झडप से खीचे गए हुए आकाश गगा के जल को मानो वे पट्टियाँ छिडक रही थी।

**अविस्मृतत्र्यम्बकनेत्रपावकः स्मरः स्मितेन्दीवरदीर्घचक्षुषाम् ।**
**विलासपीयूषनिधानकुम्भयोर्न यत्र पार्श्वं कुचयोर्विमुञ्चति ॥१६॥**

**अन्वयः**

यत्र अविस्मृतत्र्यम्बकनेत्रपावकः स्मरः स्मितेन्दीवरदीर्घचक्षुषां विलासपीयूषनिधानकुम्भयोः कुचयोः पार्श्वं न मुञ्चति ।

**व्याख्या**

यत्र पुरे न विस्मृतस्त्र्यम्बकस्य शिवस्य नेत्रपावको नयनाग्निदाहो येन स स्मर कामदेव स्मितानि विकसितानीन्दीवराणि कमलानीव चक्षुषि नेत्राणि यासा तासामङ्गनाना विलासरूपं यत्पीयूषममृत तस्य निधान निक्षेपण ययोस्तौ कुम्भौ तयोस्तद्रूपयो कुचयो स्तनयो पार्श्वं सामीप्य न मुञ्चति न परित्यजति । दाहजन्यमृत्युनिवारक, भेषजस्यामृतस्य स्तनयो स्थितत्वात्तत्रैव नियतस्थिति समाचकाङ्क्ष काम इति भाव । काव्यलिङ्गमलङ्कार, तेन उत्प्रेक्षा व्यज्यते ।

**भाषा**

जिस नगर मे, महादेव के तृतीय नेत्र की अग्नि के दाह को न भूलने वाला कामदेव खिले हुए कमल के समान बडे२ नेत्र वाली नारियो के, विलास रूपी अमृत का खजाना स्वरूप दो घडो से अभिन्न स्तनो से दूर नही होता है।

**स्मरस्य यत्राद्भुतमस्त्रकौशलं तथाह्यसौ चारुदृशां विलोचनैः ।**
**उपागतैरुत्पलपत्रमित्रतां शिलाकठोराणि मनांसि विध्यति ॥२०॥**

**अन्वयः**

यत्र स्मरस्य अस्त्रकौशलम् अद्भुतम्, तथाहि असौ उत्पलपत्रमित्रताम् उपागतैः चारुदृशा विलोचनैः शिलाकठोराणि मनासि विध्यति ।

### व्याख्या

यत्र पुरे स्मरस्य कामस्याऽस्त्राणा कौशल नैपुण्यमद्भुतमाश्चर्यकारि परिदृश्यते । तथाह्यसौ स्मर उत्पलपत्राणा कमलपत्राणा मित्रता साम्यमुपागतै प्राप्तैरतिकोमलैरित्यर्थ । चारुदृशा रम्यनयनाना नारीणा विलोचनैरक्षिभि. शिलावत्पाषाणवत्कठोराणि कठिनानि धैर्यातिशययुक्तान्यपि मनासि यूना चेतासि विध्यति भिनत्ति । कार्यकारणयोर्गुणभेदादत्र विषमालङ्कार । 'गुणौ क्रिये वा चेत्स्याता विरुद्धे हेतुकार्ययो । यद्वारब्धस्य वैफल्यमनर्थस्य च सभ्भव । विरूपयो सघटना या च तद्विषम मतम्' ।

### भाषा

इस नगर मे कामदेव का अस्त्रप्रयोग का कौशल आश्चर्य जनक था। इसीलिये वह कमल के पत्तो की समानता अर्थात् कोमलता को प्राप्त, सुन्दर नेत्रवाली नारियो के नेत्रो से पत्थर के ऐसे कडे युवको के हृदयो को वेध देता था।

**समुद्रवेला रतिरत्नसम्पदा वधूतडित्ताण्डवमेघमण्डली ।**
**नभ :स्थली विभ्रमतारकस्रजा विभाति यत्र स्मरतल्पकल्पना ॥२१॥**

### अन्वयः

यत्र स्मरतल्पकल्पना रतिरत्नसम्पदा समुद्रवेला, वधूतडित्ताण्डवमेघमण्डली, विभ्रमतारकस्रजा नभःस्थली, विभाति ।

### व्याख्या

यत्र पुरे स्मरस्य कामस्य तल्पस्य शय्याया कल्पना रचना 'तल्प शय्याट्टदारेषु स्तबेऽपि विटपोऽस्त्रियाम्' इत्यमर । रति कामस्त्री तत्स्वरूपा या रत्नसम्पत् तया सर्वजनहृद्यत्वाद्रते रत्नसम्पद्यभेदारोप । समुद्रवेला सागरतटभूमि, स्मरतल्पकल्पनाया समुद्रवेलाया आरोप, रतिस्वरूपरत्नसम्पदस्समुद्रवेलाया स्थितत्वात् । वधूस्वरूपतडितस्ताण्डव नृत्य यत्रैवम्भूता मेघमण्डली, अस्या स्मरतलपकल्पनाया-मारोप । अत्र स्मरपत्नीरतिस्थानीया वधूरूपा तडित् । विभ्रमेण विलासेन युक्ताना तारकाणा स्रजा मालया नभ स्थली व्योमभूमि । अत्र रतिस्थानीया तारकस्रक् । स्मरतलपकल्पनाया नभ स्थल्याश्चारोप । विभाति शोभते । रतिस्वरूप रत्नसम्पत्तडित्तारकस्रग्भि समुद्रवेलामेघमण्डलीनभ स्थलीना स्मरतल्प कल्पनेति भाव । अत्रोत्प्रक्षा गम्या ।

**भाषा**

जहाँ कामदेव की शय्या रचना, रति स्वरूप रत्नसम्पत्ति होने से समुद्रतट, रतिस्वरूप बिजली से युक्त होने से मेघमण्डली, और रति स्वरूप विलास युक्त ताराओ की माला होने से आकाश स्थली शोभित है ।

**त्यजन्ति हंसाः सरसीगुणैः स्थितिं न यत्र वर्षास्वपि हर्षगद्गदाः ।**
**अलङ्घनीयस्य निकाममुन्नतेर्दिशन्ति वप्रस्य यशस्तु दुर्जनाः ॥२२॥**

**अन्वयः**

यत्र हर्षगद्गदाः हंसाः सरसीगुणैः वर्षासु अपि स्थिति न त्यजन्ति । दुर्जनाः तु अलङ्घनीयस्य वप्रस्य निकाम उन्नतेः यशः दिशन्ति ।

**व्याख्या**

यत्र पुरे हर्षेणाऽऽनन्देन गद्गदा पुलकिता हसा सरसीना कासाराणा 'पद्माकरस्तडागोऽस्त्री कासार सरसी सर' इत्यमर । गुणैर्नैमल्यादिगुणैर्वर्षास्वपि वर्षर्तावपि स्थिति निवास न त्यजन्ति न मुञ्चन्ति । वर्षाकाले मानस यान्ति हसा इति नियमान्मानस न यान्तीति भाव । दुर्जना अलङ्घनीयस्य पार कर्तुमयोग्यस्य वप्रस्य प्राकारस्य निकाममत्यन्तमुन्नतेरुच्छ्रायस्य यश कीर्ति दिशन्ति कुर्वन्त्यारोपयन्तीत्यर्थ । दुर्जना परनिन्दाकुशला सरसीगुणान्विहाय वर्षासु हसाना मानसाऽगमने प्राकाराणामौन्नत्यमेव कारणमुद्घोषयन्तीति भाव । अत्राऽतिशयोक्त्यलङ्कार ।

**भाषा**

जहा आनन्द मग्न हसगण वर्षाऋतु मे भी तलावो का पानी गदला न होने से, अन्य स्थानो के हसो के सदृश मानससरोवर को न जाकर वही रहते थे । दुर्जन लोग जो कभी किसी के गुण की प्रशसा नही करते वे हसो के अन्यत्र न जाने मे इस नगर की चहार दिवारी की उचाई का यश गाते थे । अर्थात् उस नगरी के अत्यन्त रमणीय सरोवर की प्रशसा न कर वप्र की ऊँचाई की प्रशसा करते थे ।

**निशासु यत्रोन्नतसौधसङ्गतिं विगाहमानस्य विधोः कुरङ्गकः ।**
**वतंसदूर्वाङ्कुरमेणचक्षुषां ग्रहीतुमाकाङ्क्षति वक्रकन्धरः ॥२३॥**

**अन्वयः**

यत्र निशासु उन्नतसौधसंगति विगाहमानस्य विधोः कुरङ्कः वक्रकन्धरः (सन्) एणचक्षुषा वतसदूर्वाङ्कुर ग्रहीतुम् आकाङ्क्षति ।

**व्याख्या**

यत्र पुरे निशासु रात्रिषु उन्नता अत्युच्चा प्रासादा राजसदनानि तेषा सङ्गति समागम विगाहमानस्य विदधतो विधोश्चन्द्रस्य कुरङ्गक कलङ्करूपमृगो वक्रा वक्रीकृता कन्धरा ग्रीवा येन स एवम्भूतस्सन् एणचक्षुषा मृगनयनानामङ्गनाना वतस आभूषणरूपश्चासौ दूर्वाङ्कुरश्च त "वतस अवतस । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो । आप चैव हलन्ताना यथा वाचा निशा दिशा" इति । कर्णावतसरूप दूर्वाङ्कुर ग्रहीतु भक्षणार्थं स्वीकर्तुमाकाङ्क्षत्यभिलषति । अत्रातिशयोक्त्यलङ्कार ।

**भाषा**

जहाँ रात्रियो मे, चन्द्र के, बहुत ऊँचे राजसदनो के समीप आने से, चन्द्रमा मे का मृग, टेढी गर्दन करके, मृगनयनी नारियो के कानो पर आभूषण के रूप मे खोसे हुवे दूब के अकुर को खाने की इच्छा करता था ।

**अवागुरं नेत्रकुरङ्गबन्धनं निरक्षरं पञ्चशरस्य शासनम् ।**
**गृहे गृहे यत्र विचित्रमन्वहं वितन्वते नृत्तमधीरलोचनाः ॥२४॥**

**अन्वयः**

यत्र अधीरलोचनाः गृहे गृहे अन्वहम् अवागुरं नेत्रकुरङ्गबन्धनं पञ्चशरस्य निरक्षरं शासन विचित्रं नृत्तं वितन्वते ।

**व्याख्या**

यत्र पुरेऽधीरे चञ्चले लोचने नेत्रे यासा ताश्चञ्चलनयना कामिन्यो गृहे गृहे प्रतिगृहमन्वह प्रतिदिन नास्ति वागुरा मृगबन्धनी यस्मिन्तदवागुर नेत्राण्येव युवकजननयनान्येव कुरङ्गा मृगास्तेषा बन्धन बन्धनस्वरूप पञ्चशरस्य कामस्य निरक्षरमक्षरोच्चारणरहित शासनमाज्ञास्वरूप विचित्रमाश्चर्यकर नृत्त नृत्य 'नृत्त ताललयाश्रयम्' वितन्वते कुर्वन्ति । तासा नृत्य दृष्ट्वा सर्वे युवान काममोहिता भवन्तीति भाव । अधिकारूढवैशिष्ट्य रूपकमलङ्कार ।

**भाषा**

जिस नगर मे रोज, घर २, चञ्चलनेत्रवाली कामिनियाँ, बिना जाल के कामुको के नेत्र रूपी मृगो को फँसाने वाला और कामदेव की अलिखित व अनुच्चारित आज्ञा स्वरूप ताल लय से युक्त विचित्र नाच किया करती थी ।

**अमुष्य लोकत्रितयाद्भुतैर्गुणैरतीत्य मार्गं मनसोऽपि तिष्ठतः ।**
**असौ सदा मानसगोचरस्थिता कथं तुलायामलका प्रगल्भते ॥२५॥**

**अन्वयः**

असौ सदा मानसगोचरस्थिता अलका लोकत्रितयाद्भुतैः गुणैः मनसः अपि मार्गम् अतीत्य तिष्ठतः अमुष्य तुलाया कथं प्रगल्भते ।

**व्याख्या**

असौ प्रसिद्धा सदा नित्य मानस सरश्चिन्तञ्च तस्य मानससरसो मनसश्च गोचरो देशो हिमालयप्रदेशो दृष्टिश्च तत्र स्थिता विद्यमानाऽलका कुबेरनगरी, लोकत्रितये त्रिषु भुवनेषु 'त्रिष्वथो जगती लोको विष्टप भुवन जगत्' इत्यमर । अद्भुता आश्चर्यकारिणो गुणास्तैर्मनसोऽपि चित्तस्याऽपि मार्ग पन्थानमतीत्याऽतिक्रम्य तिष्ठतो वर्तमानस्याऽचिन्त्यरूपस्याऽमुष्याऽस्य पुरस्य तुलाया साम्ये कथ प्रगलभते समर्था भवति । अत्राऽर्थापत्तिरलङ्कार । 'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ।'

**भाषा**

मानस सरोवर के आसपास हिमालय प्रदेश मे स्थित अथवा मन से जानी जा सकने वाली अलका नामक कुबेर की नगरी तीनो लोको मे अद्भुत गुणो से युक्त और मन से भी कल्पना न की जा सकने वाले, इस कल्याण नगर की कैसे बराबरी कर सकती है ।

**अतःपरमाहवमल्लदेवनृपं स्तौति ।**

**विजित्य सर्वाः ककुभः स भार्गव-प्रचण्डकोदण्डपरिश्रमो नृपः ।**
**उवास तत्राथिशतानि पूरयन् फलं हि पात्रप्रतिपादनं श्रियः ॥२६॥**

**अन्वयः**

तत्र सः भार्गवप्रचण्डकोदण्डपरिश्रमः नृपः सर्वाः ककुभः विजित्य अर्थिशतानि पूरयन् उवास। हि श्रियः फल पात्रप्रतिपादनम्।

**व्याख्या**

तत्र कल्याणपुरे स प्रसिद्धो भार्गवस्य परशुरामस्य प्रचण्डो भयङ्कर कोदण्डो धनु 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमर। तस्य परिश्रम इव परिश्रम सम्प्रहारकार्यं यस्य स नृप आहवमल्लदेव सर्वास्समग्रा ककुभो दिशो विजित्य स्वायत्तीकृत्वाऽर्थिशतानि याचकशतमनोरथान् पूरयन्सफलयन्नुवास। हि यस्मात्कारणाच्छ्रियो लक्ष्म्यास्सम्पदश्च फल सार्थक्य पात्रेषु योग्यस्थानेषु प्रतिपादन दानम्। अत्राऽर्थान्तरन्यासालङ्कार।

**भाषा**

परशुराम के भयकर धनुष के सहार के समान सहार करने वाला वह प्रसिद्ध राजा आहवमल्लदेव, समग्र दिशाओ को जीतकर और सैकडो अर्थिजनो को दान देकर कल्याणपुर मे रहने लगा। क्योकि लक्ष्मी का सार्थक्य योग्य आर्थियो को दान देना ही है।

**जगत्यनर्घेषु समस्तवस्तुषु क्षितीश्वरः पादतलस्थितेष्वपि।**
**अभूद्विना पुत्रमुखेन्दुदर्शनं प्रभातनीलोत्पलदीनलोचनः ॥२७॥**

**अन्वयः**

क्षितीश्वरः जगति अनर्घेषु समस्तवस्तुषु पादतलस्थितेषु अपि पुत्रमुखेन्दु-दर्शनं विना प्रभातनीलोत्पलदीनलोचनः अभूत्।

**व्याख्या**

क्षिते पृथ्व्या ईश्वर प्रभुर्जगति लोके 'त्रिष्वथो जगती लोको विष्टप भुवन जगत्' इत्यमर। अनर्घेष्वमूल्येषु समस्तवस्तुषु सकलपदार्थेषु पादतलेष्वेव समीप एव स्थिता विद्यमानास्तेष्वतिसुलभेषु सत्स्वपि पुत्रस्याऽऽत्मजस्य यन्मुखमानन तदेवेन्दुश्चन्द्रस्तस्य दर्शनमवलोकन विना प्रभाते प्रात काले सूर्योदयानन्तर निष्प्रभे नीलोत्पल इव दीने कान्तिरहिते लोचने नेत्रे यस्य स अभूत्। चन्द्रदर्शन-

समये नीलोत्पलस्य विकासो दृश्यते न तु सूर्योदयानन्तरम् । अत्र विनोक्त्यलङ्कार । 'विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु वा' ।

### भाषा

राजा को ससार की समस्त अमूल्य वस्तुएँ सुलभ होने पर भी पुत्र के चन्द्रसदृश मुख को देखे बिना वह प्रात कालीन नीलकुमुद के सदृश दीन नेत्रो से युक्त था अर्थात् उदास रहा करता था । जैसे चन्द्रदर्शन बिना नीलकुमुद विकसित नही होता वैसे ही पुत्र दर्शन विना राजा की आखे दीन थी । अर्थात् राजा उदास रहते थे ।

**उवाच कण्ठागतबाष्पगद्गदैः पदैः कदाचित्सहधर्मचारिणीम् ।**
**सरस्वतीहारलतामिवोज्ज्वलां प्रकाशयन्दन्तमयूखचन्द्रिकाम् ॥२८॥**

### अन्वयः

(सः)कदाचित् सरस्वतीहारलताम् इव उज्वलां दन्तमयूखमालिका प्रकाशयन् कण्ठागतबाष्पगद्गदैः पदैः सहधर्मचारिणीम् उवाच ।

### व्याख्या

स नृप कदाचित् सरस्वती वाणी वाग्देवता तस्या मौक्तिकनिर्मिता या हारलता तामिवोज्वला शुभ्रवर्णा दन्ताना रदनाना मयूखाना किरणाना 'किरणोस्रमयूखाशुगभस्तिघृणिरश्मय ' इत्यमर । चन्द्रिका ज्योत्स्ना 'चन्द्रिका कौमुदीज्योत्स्ना' इत्यमर । ता प्रकाशयन विस्तारयन् कण्ठे गले आगतानि यानि बाष्पाण्यूष्माश्रुणि 'बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादन द्वयम्' इत्यमर । तैर्गद्गदैर्नातिस्पष्टमुच्चारितै पदै शब्दविन्यासैस्सहधर्मचारिणी स्वपत्नीमुवाच । अत्रोपमालङ्कार ।

### भाषा

किसी समय उस राजा ने सरस्वती की मोती की माला के समान दातो की शभ्र किरणो की चादनी को प्रकाशित करते हुए, भरे गले से अपनी पत्नी से कहा ।

**फलेन शून्यः सुतरां दुनोति मामयं गृहस्थाश्रमधर्मपादपः ।**
**विलोकयामि प्रतिबिम्बमात्मनः सुताभिधानं त्वयि नाधुनापि यत् ॥२९॥**

### अन्वयः

अय फलेन शून्यः गृहस्थाश्रमपादपः मा सुतरां दुनोति यत् अधुना अपि त्वयि सुताभिधानम् आत्मनः प्रतिबिम्ब न विलोकयामि।

### व्याख्या

अय फलेन पुत्ररूपफलेन शून्यो रहितो गृहस्थाश्रमरूपो गार्हस्थ्यस्वरूपो धर्म-पादपो धर्मवृक्षो मा सुतरामत्यन्त दुनोति परितापयति। यथा वृक्ष फलेन शून्यो निष्फलत्वाय कल्पते तथैवाऽय गृहस्थाश्रमोऽपि। यद्यस्मात्कारणादधुनाऽप्यद्या-वध्यपि त्वयि भवत्या सुत पुत्र अभिधान नाम यस्य त पुत्रनामकमात्मन प्रतिबिम्ब प्रतिफल न विलोकयामि न पश्यामि। 'आत्मा वै जायते पुत्र' इति वचनात्। अद्यापि पुत्रोत्पत्तिर्न जातेत्यर्थ। अत्ररूपकालङ्कार।

### भाषा

यह फलरहित गृहस्थाश्रमरूपीवृक्ष मुझे अत्यन्त पीडित करता है। क्योकि अभीतक तुमसे मेरा प्रतिबिम्ब स्वरूप पुत्र उत्पन्न भया हुवा नही दीख पडता है। अर्थात् तुम को मेरा प्रतिबिम्ब स्वरूप पुत्र नही हुआ है।

**अलक्षणं बालमृगाक्षि लक्ष्यते[१] न किञ्चिदङ्गेषु तवेदृशः परम्।**
**पुराकृतः पुण्यविपर्ययो मम ध्रुवं फलर्द्धिप्रतिबन्धकस्त्वयि ॥३०॥**

### अन्वयः

(हे)बालमृगाक्षि तव अङ्गेषु किञ्चित् अलक्षण न लक्ष्यते परं त्वयि ईदृशः फलर्द्धिप्रतिबन्धकः मम पुराकृतः पुण्यविपर्ययः ध्रुवम्।

### व्याख्या

हे बालमृगाक्षि बालकुरङ्गनयने तव अङ्गेषु शरीरावयवेषु किञ्चिद्यत्किञ्चि-दप्यलक्षण कुलक्षण पुत्रोत्पत्तिप्रतिबन्धक वन्ध्यात्वलक्षण न लक्ष्यते दृश्यते। पर किन्तु त्वयि भवत्यामीदृश इत्थम्भूत फलर्द्धिप्रतिबन्धक. पुत्ररूपफलसम्पत्ति-बाधको ममैव पुराकृत पूर्वजन्मकृत पुण्यविपर्यय सुकृतवैपरीत्य पापमित्यर्थ। ध्रुव निश्चयेन वर्तते।

---

[१] 'मग्यते' इत्यपि पाठ।

### भाषा

हे मृगशावकनयनि ! तुम्हारे शरीर के अवयवो मे कोई कुलक्षण नही दीख पडता है । किन्तु तुम्हारे मे इस प्रकार की पुत्र रूपी फल की समृद्धि मे प्रतिबन्धक मेरे ही पूर्वजन्म का पाप है, यह बात निश्चित है ।

**अवीक्षमाणा सदृशं गुणैर्मम क्रमागता श्रीरियमाश्रयं पुरः ।**
**पयोधिमध्यस्थितपोतकूपक-स्थिता शकुन्तीव मुहुः प्रकम्पते ॥३१॥**

### अन्वयः

क्रमागता इयं श्रीः मम गुणैः सदृशम् आश्रयं पुरः अवीक्षमाणा पयोधिमध्यस्थितपोतकूपकस्थिता शकुन्ती इव मुहुः प्रकम्पते ।

### व्याख्या

क्रमेण कुलक्रमेणाऽऽगता प्राप्तेय श्री राज्यलक्ष्मी मम गुणै शौर्यादिभि सदृश समानमत एव योग्यमाश्रयमाश्रयभूत स्थान पुरोऽग्रेऽवीक्षमाणाऽनवलोकयन्ती पयोधे समुद्रस्य मध्ये मध्यभागे स्थितो विद्यमान पोतो यानपात्र 'यानपात्रे शिशौ पोत' इत्यमर । तस्य कूपको गुणवृक्षको नौमध्यस्थितरज्जुबन्धनदण्ड तस्मिन् स्थितोपविष्टा शकुन्तीव पक्षिणीव मुहुरभीक्ष्ण 'मुहु पुन पुन शश्वद-भीक्ष्णमसकृत्समा' इत्यमर । प्रकम्पते बिभेति । स्थिरमाश्रयमपश्यमाणा स्वस्थितेस्सन्देहास्पदत्वाद्भीतेत्यर्थ । अत्रोपमालङ्कार ।

### भाषा

कुल परम्परागत यह राज्य श्री, मेरे गुणो के ऐसे गुण वाले आश्रय को आगे न देखकर बीच समुद्र मे विद्यमान जहाज के मस्तूल पर बैठी चिडिया के समान रह रह कर कॉपती है । अर्थात् स्थिर आश्रय न देखकर अपने अस्तित्व के सन्देह से भयभीत होती है ।

**प्रियप्रसादेन विलाससम्पदा तथा न भूषाविभवेन गेहिनी ।**
**सुतेन निर्व्याजमलीकहासिना यथाङ्कपर्यङ्कगतेन शोभते ॥३२॥**

### अन्वयः

गेहिनी यथा निर्व्याजम् अलीकहासिना अङ्कपर्यङ्कगतेन सुतेन शोभते तथा प्रियप्रसादेन विलाससम्पदा भूषाविभवेन (वा) न शोभते ।

### व्याख्या

गेहिनी गृहिणी गृहधर्मरता स्त्री यथा निर्व्याज निष्कपट यथास्यात्तथाऽलीक हासिनाऽनृतहासिना कारणमन्तरैव प्रकृत्या हास कुर्वता 'अलीक त्वप्रियेऽनृते' इत्यमर । अङ्क उत्सङ्ग एव पर्यङ्क खट्वा 'अङ्को रूपकभेदाऽङ्कचिन्हरेखाजिभूषणे। रूपकाशातिकोत्सङ्गस्थानेऽङ्क पापदु खयोरिति' मेदिनी । 'शयन मञ्चपर्यङ्कपल्यङ्का खट्वया समा' इत्यमर । तद्गतेन सुतेन पुत्रेण शोभते सौभाग्यमालम्बते तथा प्रियस्य पत्यु प्रसादेन प्रसन्नताप्रदर्शनेन विलासस्य भोगस्य सम्पदा विभवेन, भोग्यसुखसमृद्धिसामग्र्या भूषाया भूषणस्य विभवेन वैशिष्ट्येन वा न शोभते ।

### भाषा

गृहिणी जिस प्रकार कपट रहित स्वाभाविक हास्य करने वाले गोद रूपी पलङ्ग पर लेटे हुए पुत्र से शोभित होती है वैसे न तो पती की प्यारी होने से, न उपभोग योग्य सुख समृद्धि की वस्तुओ से, न गहना कपडा पहनने से शोभित होती है ।

**वहन्ति हिंस्राः पशवः कमात्मनो गुणं वितर्क्यात्मजरक्षणश्रमम् ।**
**पदार्थसामर्थ्यमचिन्त्यमीदृशं यदत्र विश्राम्यति निर्भरं मनः ॥३३॥**

### अन्वयः

हिंस्राः पशवः आत्मनः कं गुण वितर्क्य आत्मजरक्षणश्रमं वहन्ति । ईदृशम् अचिन्त्य पदार्थसामर्थ्यं यत् अत्र मनः निर्भरं विश्राम्यति ।

### व्याख्या

हिंस्रा हिंसका पशवो व्याघ्रादय आत्मनो स्वस्य क विशिष्ट गुण प्रयोजन वितर्क्य विमृश्याऽऽत्मजस्य पुत्रस्य रक्षणस्य भरणपोषणादभि पालनस्य श्रम खेदं वहन्ति धारयन्ति । ईदृशमित्थभूतमचिन्त्यमवर्णनीयमनुभवैकगम्य पदार्थसामर्थ्यं पुत्रपदार्थाकर्षकत्व यदत्र पुत्रे मनश्चित्त 'चित्तन्तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । निर्भरमत्यन्त विश्राम्यति सन्तोषसुख शान्तिञ्च लभते ।

**भाषा**

हिसक व्याघ्रादि पशु अपने किस प्रयोजन के विचार से अपने बच्चे के सरक्षण के लिये परिश्रम करते हैं। पुत्र, इस वस्तु मे ऐसी अवर्णनीय शक्ति है जिससे मन अत्यन्त शान्ति प्राप्त करता है।

**किमश्वमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेन्नोभयलोकबान्धवः ।**
**ऋणं पितॄणामपनेतुमक्षमाः कथं लभन्ते गृहमेधिनः शुभम् ॥३४॥**

**अन्वयः**

उभयलोकबान्धवः सुतः न अस्ति चेत् अश्वमेधप्रभृतिक्रियाक्रमैः किम्। पितॄणा ऋणम् अपनेतुम् अक्षमाः गृहमेधिनः कथ शुभ लभन्ते।

**व्याख्या**

उभयलोकस्येहलोकस्य परलोकस्य च बान्धवस्सुखकारी सहायक इत्यर्थ। सुत पुत्रो नास्ति चेत्तर्हि अश्वमेधस्तन्नाम यज्ञ प्रभृतिरादिर्यासा क्रियाणा तासा क्रमै सम्पादनै किम् किम्फलम। पुत्रोत्पत्त्यभावेऽश्वमेधादिसदृशाना स्वालौकिकशक्तिप्रदर्शकाणा कर्मणा सुतरामेव वैयर्थ्यं समायाति। पितॄणा पूर्वपुरुषाणामृणमपनेतु दूरीकर्त्तुमक्षमा असमर्था गृहमेधिनो गृहस्था कथ शुभ मङ्गल लभन्ते प्राप्तु शक्नुवन्ति।

**भाषा**

यदि इस लोक और परलोक दोनो में साथ देनेवाला पुत्र न हुआ तो अश्वमेध आदि यज्ञो के करने से क्या लाभ है। पितृऋण से मुक्त होने मे असमर्थ गृहस्थ लोगो का कैसे कल्याण हो सकता है।

**प्रतापशौर्यादिगुणैरलङ्कृतोऽप्युपैति तावन्न कृतार्थतां नृपः ।**
**सुतेन दोर्विक्रमलब्धकीर्तिना न यावदारोहति पुत्रिणां धुरि ॥३५॥**

**अन्वयः**

नृपः प्रतापशौर्यादिगुणैः अलङ्कृतः अपि तावत् कृतार्थता न उपेति यावत् दोर्विक्रमलब्धकीर्तिना सुतेन पुत्रिणां धुरि न आरोहति।

**व्याख्या**

नृपो राजा प्रतापेन प्रभावेण 'स प्रताप प्रभावश्च यत्तेज कोशदण्डजम्' इत्य-मरः। शौर्यादिगुणैर्वीरतादिगुणैश्चाऽलङ्कृत सम्भूषितोऽपि कृतार्थता जन्म-साफल्य तावन्नोपेति प्राप्नोति यावत् दोष्णोर्भुजयोर्विक्रमेण पराक्रमेण लब्धोपा-र्जिता कीर्तिर्यशो येन तेन सुतेन पुत्रेण पुत्रिणा पुत्रवता धुरि प्राधान्ये नाऽऽरोहति न परिनिष्ठितो भवति।

**भाषा**

राजा, प्रताप वीरता आदि गुणो से विभूषित होने पर भी तब तक अपने जन्म की सफलता को प्राप्त नही करता जब तक भुजबल के पराक्रम से कीर्ति को कमाने वाले पुत्र से पुत्रवान् लोगो मे अग्रणी नही होता।

**निशम्य देवस्य नितान्तदुःखिता कथामिति श्रोत्रपथप्रमाथिनीम्।**
**जगाद किञ्चिन्न नरेन्द्रसुन्दरी परं निशश्वास तरङ्गितालका ॥३६॥**

**अन्वयः**

इति श्रोत्रपथप्रमाथिनि देवस्य कथा निशम्य नितान्तदुःखिता नरेन्द्र-सुन्दरी किञ्चित् न जगाद पर तरङ्गितालका (सती) निशश्वास।

**व्याख्या**

इतीत्थ श्रोत्रयो कर्णयो पन्था मार्गस्तस्य प्रमाथिनी ता कर्णकुहरदु खदायिनीं देवस्य राज्ञ कथा वार्तां निशम्य श्रुत्वा नितान्तमत्यन्त दु खिता पीडिता नरेन्द्रनन्दिनी राजमहिषी किञ्चित्किमपि न जगाद नोवाच पर केवल तरङ्गिता इतस्तत प्रक्षिप्ता· कुन्तला केशा यस्या सा सती निशश्वास दीर्घमुष्णञ्च श्वास प्रवाहितवती। केशस्य स्थानच्युतिर्दीर्घनिश्वासश्च दु खचिन्हम्। परमदु खि-ताऽभूदित्यर्थ।

**भाषा**

इस प्रकार राजा की कर्णकटू बाते सुनकर अत्यन्त दु खी रानी ने कोई उत्तर नही दिया। केवल बिखरे बालो वाली उस रानी ने जोर से साँस भरा। अर्थात् अत्यन्त दु खी हुई।

**स धीरमुर्वीन्दुरधीरलोचनामथाङ्कमारोप्य कृपार्द्रमानसः ।**
**हरन्निवातङ्ककलङ्कमुज्ज्वल-द्विजावलीकान्तिजलैरवोचत ।।३७।।**

**अन्वयः**

अथ सः उर्वीन्दुः कृपार्द्रमानसः सन् अधीरलोचना धीरम् अङ्कम् आरोप्य उज्ज्वलद्विजावलीकान्तिजलैः आतङ्ककलङ्क हरन् इव अवोचत ।

**व्याख्या**

अथाऽनन्तर स्वपत्न्या दु खितदशानिरीक्षणानन्तर स प्रसिद्ध उर्व्या पृथिव्या इन्दुश्चन्द्र पृथिवीशोभाधायको राजा कृपया दययाऽऽर्द्रं परिप्लुत मानस मनो यस्य स एवम्भूतस्सन् अधीरे चञ्चले लोचने नेत्रे 'लोचन नयन नेत्रमीक्षणञ्चक्षु-रक्षिणि' इत्यमर । यस्या सा ता दु खेन चञ्चललोचना धीर यथास्यात्तथा धैर्यमवलम्ब्याऽङ्क स्वोत्सङ्गमारोप्य प्रतिष्ठाप्योज्वला शुभ्रा द्विजाना दन्तानां 'दन्तविप्राण्डजा द्विजा' इत्यमर । आवली पक्तिस्तस्य कान्तय एव जलानि तैरातङ्क एव व्यथैव कलङ्को मालिन्य त हरन्निवाऽपमृजन्निवाऽवोचतोक्तवान् । हास्येन स्वभाव गोपयन् पत्न्या सान्त्वनमकरोत् । अत्रोत्प्रेक्षाऽलङ्कार ।

**भाषा**

अपनी पत्नी को दु खी देखने के अनन्तर राजा के हृदय मे दया का सचार होकर उसने चचल नेत्र वाली रानी को, धीरज के साथ अपनी गोद म बैठाकर मानो सफेद दातो की कतार की कान्ति रूपी जल से पीडा रूपी धब्बे को धोते हुए कहा अर्थात् हँसते हुए रानी से कहा ।

**अलं विषादेन करोषि किं मुखं कवोष्णनिःश्वासविधूसराधरम् ।**
**अभीष्टवस्तुप्रतिबन्धिनामहं कृताग्रहो निग्रहणाय कर्मणाम् ।।३८।।**

**अन्वयः**

विषादेन अलं, मुखं कवोष्णनिःश्वासविधूसराधरं कि करोषि । अहं अभीष्टवस्तुप्रतिबन्धिना कर्मणा निग्रहणाय कृताग्रहः (अस्मि) ।

**व्याख्या**

विषादेनाऽल शोक परिहर्तव्य । 'अल भूषणपर्याप्तिशक्तिवारणवाचकम्'

इत्यमर । मुख स्वानन कवोष्ण कोष्ण 'कोष्ण कवोष्ण मन्दोष्णं कदुष्णं त्रिषु तद्वति' इत्यमर । चाऽसौ निश्वासस्तेन विधूसरो मलिनोऽधर अधरोष्ठो यस्मिन् तत् कि किमर्थं करोषि विदधासि। अहमभीष्टमीप्सित यद्वस्तु पुत्रप्राप्तिरूप तत्प्रतिबध्नन्ति प्रतिरुद्धन्ति तेषा कर्मणामिहजन्मनि पूर्वजन्मनि वा कृताना दुष्कर्मणा निग्रहाय समूलमुन्मूलनाय कृत आग्रह अभिनिवेशो येन स बद्धपरिकरोऽस्मि ।

### भाषा

अब दु ख दूर करो। अपने मुख को गरम श्वास से सूखे अधरोष्ठ वाला क्यो बनाती हो। मैं पुत्र रूपी अभीष्ट सिद्धि के प्रतिबन्धक सम्पूर्ण इस जन्म के या पूर्व जन्म के कर्मो को नष्ट करने के लिये कटिबद्ध हो गया हूँ।

**अधीतवेदोऽस्मि कृतः[१] श्रुतागमः श्रमोऽस्ति भूयानितिहासवर्त्मसु ।**
**गुरुष्ववज्ञाविमुखं सदा मनस्तदभ्युपायोऽत्र मया न दुर्लभः ॥३६॥**

### अन्वयः

(अहं) श्रुतागमः (सन्) अधीतवेदः अस्मि। इतिहासवर्त्मसु भूयान् परिश्रमः कृतः। मनः गुरुषु सदा अवज्ञाविमुखम् अस्ति। तत् मया अत्र अभ्युपायः न दुर्लभः ।

### व्याख्या

अह श्रुता गुरुमुखादार्कार्णिता आगमा शास्त्राणि येन एवम्भूतस्सन् अधीताः सम्यगभ्यस्ता वेदा ऋग्यजुस्सामाथर्ववेदा येन सोऽस्मि। इतिहासाना रामायण-महाभारतादीना वर्त्मसु तत्प्रतिपादितमार्गेष्वपि भूयान्महान्परिश्रम कृत । मम मन गुरुषु पूज्येषु सदा सर्वदैवाऽवज्ञाया अपमानात्पराङमुख विमुखमस्ति। तत्तस्मात्कारणादत्र पुत्रवस्तुनि मयाऽभ्युपायो न दुर्लभ किन्तु सुलभस्सु-साध्यश्चेति भाव. ।

### भाषा

मैंने गुरुमुख से सब शास्त्रो का श्रवण कर वेदो को पढा है। रामायण-महाभारतादि इतिहास प्रतिपादित मार्गो का परिश्रम से पालन किया है।

---

[१] कृतश्रुतागम —इत्यपि पाठ ।

मेरा मन सदैव बडो का अपमान करने से विरत रहा है । ऐसी परिस्थिति मे मेरे लिये पुत्ररूपी वस्तु प्राप्त करने का उपाय दुर्लभ नही हो सकता ।

**किमस्ति दुष्प्रापमसौ निषेव्यते कुलप्रभुर्बालमृगाङ्कशेखरः ।**
**करस्थितस्यापि चकोरलोचने न पात्रमालस्यहतास्तपस्विनः ॥४०॥**

**अन्वय.**

**असौ कुलप्रभुः बालमृगाङ्कशेखरः (यदि) निषेव्यते (तर्हि) कि दुष्प्रापम् अस्ति। हे चकोरनयने आलस्यहताः तपस्विनः करस्थितस्य अपि पात्रं न।**

**व्याख्या**

**असौ प्रसिद्ध कुलस्य वशस्य प्रभुरिष्टदेवता बालोऽर्द्धो मृगाङ्कश्चन्द्र शेखर शिरोभूषण यस्य स शिवो यदि निषेव्यते सेवया प्रसन्नीक्रियते तर्हि किं वस्तु दुष्प्राप दुर्लभमस्ति, न किमपीत्यर्थ । हे चकोरवच्चपले नेत्रे नयने यस्यास्त-त्सम्बुद्धौ हे चकोरनयने चकोरचपलनयने आलस्येनाऽकर्मणा हता आलस्यवशी-भूतास्तपस्विनो वराका करे करतले स्थितस्य विद्यमानस्याऽपि वस्तुन पात्र भाजन न भवन्ति । कर्मशीलानामुद्योगिना पुरुषाणा किमपि दुस्साध्य नेत्यर्थ । अत्राऽर्थापत्त्यलङ्कार ।**

**भाषा**

अपने वश के इष्टदेव चन्द्रशेखर शकर की यदि उपासना की जाय तो कोई वस्तु दुर्लभ नही है। हे चकोर के समान चञ्चल नेत्र वाली ! आलस से भरे अकर्मण्य लोगो को, पास की वस्तु भी प्राप्त नही हो सकती है ।

**तदेष तावत्तपसे सह त्वया प्रभूतभावः प्रयते यतेन्द्रियः ।**
**विभावरीवल्लभखण्डमण्डनः स यावदायाति दयां जगद्गुरुः ॥४१॥**

**अन्वयः**

तत् प्रभूतभावः एषः (अहं) यतेन्द्रियः सन् त्वया सह तावत् तपसे प्रयते यावत् विभावरीवल्लभखण्डमण्डनः जगद्गुरुः सः दया आयाति।

**व्याख्या**

तत्तस्मात्कारणात्प्रभूतो बहुलो भावो भक्तिभावो यस्य स एष अह जितानि वशीकृतानीन्द्रियाणीन्द्रियसमूहो येन स वशीकृतेन्द्रियसमूहस्सन् त्वया सह भवत्या सह तावत्कालपर्यन्त तपसे तपश्चरणाय प्रयते महोद्योग करिष्ये यावत्काल विभावर्या रजन्या 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमर । वल्लभ प्रियश्चन्द्रस्तस्य खण्ड एव कलैव मण्डन भूषण यस्य स जगता भुवनाना 'विष्टप भुवन जगत्' इत्यमर । गुरु श्रेष्ठ स शकरो दया कृपामायाति प्राप्नोति । करुणार्द्रमानसस्सन्नभीष्टवरप्रदान करोतीत्यर्थ ।

**भाषा**

इसलिये दृढ भक्ति से युक्त, मै तुम्हारे साथ इन्द्रियो को वश मे करके अर्थात् सयम से तब तक तप करने मे प्रयत्नशील रहूँगा जब तक अर्धचन्द्र से शोभित जगत्प्रभु शकर को मेरे ऊपर दया न आजाए।

**विधाय शान्त्यै कलुषस्य कर्मणस्तदेष सर्वेन्द्रियतापनं तपः ।**
**नयामि भक्त्या झटिति प्रसन्नतामखण्डया खण्डशशाङ्कशेखरम् ॥४२॥**

**अन्वयः**

**तत् एषः (अहं) कलुषस्य कर्मणः शान्त्यै सर्वेन्द्रियतापनं तपः विधाय अखण्डया भक्त्या खण्डशशाङ्कशेखर झटिति प्रसन्नतां नयामि ।**

**व्याख्या**

तत्तस्मात्कारणादेषोऽह कलुषस्य दुष्कृतस्य 'कलुष वृजिनैनोऽघमहो दुरित-दुष्कृतम्' इत्यमर । कर्मण क्रियाकलापस्य शान्त्यै विनाशाय सर्वेन्द्रियाणा नेत्रादीना तापन पीडन यस्मिन्तत्तपो दुष्करतपस्या विधाय कृत्वाऽखण्डयाऽविच्छिन्न-सन्तानया भक्त्या दृढभक्त्येत्यर्थ । खण्डश्चासौ शशाङ्कश्चन्द्रश्च स शेखर शिरोभूषण यस्य त शिव झटिति द्राक् 'स्राक् झटित्यजसान्हाय द्राङ्‌ मक्षु सपदि द्रुते' इत्यमर । प्रसन्नता प्रसाद नयामि प्रापयामि । अत्रानुप्रासोऽलङ्कार. ।

**भाषा**

इसलिये मै पुत्रप्राप्ति के बाधक पापकर्मो का नाश कर डालने के लिये समग्र इन्द्रियो को कष्टप्रद, घोर तपस्या कर, अविच्छिन्न दृढभक्ति से चन्द्रशेखर भगवान् शङ्कर को शीघ्र ही प्रसन्न करूगा ।

**तथेति देव्या कृतसम्मतिस्ततः समस्तचिन्तां विनिवेश्य मन्त्रिषु ।**
**अभूदनुष्ठानविशेषतत्परः स पार्थिवः प्रार्थितवस्तुसिद्धये ॥४३॥**

### अन्वय

ततः देव्या इति तथा कृतसम्मतिः सः पार्थिवः समस्तचिन्ता मन्त्रिषु विनिवेश्य प्रार्थितवस्तुसिद्धये अनुष्ठानविशेषतत्परः अभूत् ।

### व्याख्या

ततस्तदनन्तर देव्या पत्न्येतीद भवदुक्त पुत्रोत्पत्तिरूप कार्यं तपस्साधनेन स्या-दिति हेतोस्तथैवाऽस्तु, इति कृता सम्मतिर्येन स कृतनिश्चयस्स पार्थिवो राजा समस्ता सम्पूर्णां चिन्ता राज्यभारचिन्ता मन्त्रिष्वमात्येषु विनिवेश्य विनिक्षिप्य प्रार्थितस्याऽभीष्टस्य वस्तुन पुत्रस्य सिद्धये प्राप्तयेऽनुष्ठानविशेषे विशिष्टानुष्ठाने तत्पर आसक्तोऽभूत् । 'तत्परे प्रसितासक्तौ' इत्यमर ।

### भाषा

इसके अनन्तर, अपनी रानी की सम्मति मिलने पर, उस राजाने राजकाज का बोझ मन्त्रियो को सौपकर अभीष्ट पुत्रप्राप्ति की सिद्धि के लिये विशिष्ट अनुष्ठान करना प्रारम्भ कर दिया ।

**तपः स्वहस्ताहृतपुष्पपूजित-त्रिलोचनः स्थण्डिलवासधूसरः ।**
**तथा स राजर्षिरसाधयद्यथा महर्षयोऽस्मादपकर्षमाययुः ॥४४॥**

### अन्वयः

सः राजर्षिः स्वहस्ताहृतपुष्पपूजितत्रिलोचनः स्थण्डिलवासधूसरः (सन्) तथा तपः असाधयत् यथा अस्मात् महर्षयः अपकर्षम् आययुः ।

### व्याख्या

स राजर्षि ऋषिव्रतगृहीतो नृप स्वहस्ताभ्या स्वकराभ्यामाहृतानि समानीतानि च तानि पुष्पाणि कुसुमानि तै पूजितोऽभ्यर्चितस्त्रिलोचन शकरो येन स स्थण्डिले भूमिविशेषे वासेन शयनादिना 'य स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ' इत्यमर. । धूसर सरजस्कस्सन् तथोग्र तपस्तपश्चरणमसाधयत् कृतवान्

यथा येन कारणेनाऽस्मान्नृपान्महर्षयोऽपि ब्रह्मर्षयोऽप्यपकर्षं निम्नकोटिमाययु॰ प्राप्ता॰। स्थण्डिल चत्वर, यागार्थं परिष्कृता भूमिस्तत्र शयनादिक महद्व्रतम्।

### भाषा

अपने हाथो से तोडे हुए फूलो से शकर की पूजा करने वाले उस राजर्षि ने स्थण्डिल पर ही निवास करने से धूली से धूसरित होकर ऐसी उग्र तपस्या की जिससे महर्षि लोग भी तपस्या मे इससे नीचे हो गये।

**स सौकुमार्यैकधनोऽपि सोढवाँस्तपोधनैर्दुष्प्रसहं परिश्रमम्।**
**रराज तीव्रे तपसि स्थितो नृपः शशीव चण्डद्युतिमण्डलातिथिः ॥४५॥**

### अन्वयः

सौकुमार्यैकधनः अपि सः तपोधनैः दुष्प्रसहं परिश्रम सोढवान्। तीव्रे तपसि स्थितः नृपः चण्डद्युतिमण्डलातिथिः शशी इव रराज।

### व्याख्या

सुकुमारस्यभावस्सौकुमार्यं तदेव धन द्रव्य यस्य स परमकोमलाङ्गोऽपि तप एव धन येषा तैस्तपस्विभिर्दु खेन यथाकथञ्चित्प्रकर्षेण सोढु शक्य सहनायोग्य-मित्यर्थ परिश्रम क्लेश सोढवानसहत। तीव्रेऽत्युग्रे तपसि तपस्याया स्थितो वर्तमानो नृपो भूपतिश्चण्डद्युतिस्सूर्यस्तस्य मण्डलस्य चक्रवालस्य 'चक्रवाल तु मण्डलम्' इत्यमर। अतिथिस्समीपस्थ शशी चन्द्र इव रराज शुशुभे। यथा सूर्यमण्डल-गतश्चन्द्र कान्तिहीनो भवति तथैव परिश्रमाधिक्येन स नृपो म्लानस्सजात इति भाव॰। अत्रोपमालङ्कार।

### भाषा

स्वभाव से ही अत्यन्त सुकुमार होने पर भी उसने तपस्वियो से भी अत्यन्त कठिनता से सहने योग्य क्लेश सहन किया। घोर तपस्या मे लगा हुआ वह राजा सूर्यमण्डल के निकट आए हुए चन्द्रमा के समान म्लान दिखाई पडने लगा।

**नृपं कठोरव्रतचर्यया कृशं समाहिता सा नरनाथसुन्दरी।**
**निशातशाणोल्लिखितं समन्वगात् प्रभेव माणिक्यमतीव निर्मला ॥४६॥**

**अन्वयः**

कठोरव्रतचर्यया कृशं नृपं सा समाहिता नरनाथसुन्दरी निशातशाणोल्लिखितं माणिक्यम् अतीव निर्मला प्रभा इव समन्वगात् ।

**व्याख्या**

कठोर कठिनञ्चतद्व्रतञ्च तपस्यारूप कठोरव्रत तस्य चर्याऽऽचरण तया कृशं कृशतनु नृप राजान सा प्रसिद्धा समाहिता समाधौ स्थिता, निश्चलचित्तेन तप - परायणा नरनाथस्य राज्ञ सुन्दरी पत्नी निशातस्तीक्ष्ण शाण कषोपल 'शाणस्तु निकष कष" इत्यमर । तेनोल्लिखित घर्षितमत एव कृश माणिक्य मणिमतीवाऽत्यन्त निर्मला स्वक्छा प्रभेव कान्तिरिव समन्वगादनुसृतवती । यथा माणिक्यस्य कषे घर्षणेन कृशता प्रभा चाऽनुसरति तथैव कठोरव्रतेन कृश नृप तस्य राज्ञी समनुसृतवतीति भाव । अत्रोपमालङ्कार ।

**भाषा**

जिस प्रकार तेज सान पर चढाए हुए माणिक्य मे कृशता के साथ अत्यन्त उज्वल चमक भी आजाती है उसी प्रकार कठोर तपस्या से कृश उस राजा का, तपस्या मे लगी रानी बराबर निश्चल चित्त से साथ देती रही ।

**मृगाङ्कचूडस्य किरीटनिम्नगा-तरङ्गवातैरिव वारितश्रमा ।**
**उपाचरत्सम्यगसौ नराधिपं स्वहस्तलिप्तेश्वरमन्दिराजिरा ॥४७॥**

**अन्वयः**

स्वहस्तलिप्तेश्वरमन्दिराजिरा मृगाङ्कचूडस्य किरीटनिम्नगातरङ्गवातैः वारितश्रमा इव असौ नराधिपं सम्यक् उपाचरत् ।

**व्याख्या**

स्वहस्तेन निजकरेण लिप्त गोमयादिनोपलिप्तमीश्वरस्य शिवस्य मन्दिरस्याऽजिरमङ्गण यया सा मृगाङ्कश्चन्द्रश्चूडे ललाटे यस्य तस्य शिवस्य किरीटरूपा मुकुटरूपा 'मुकुट किरीट पुन्नपुसकम्' इत्यमर । या निम्नगा गङ्गानदी तस्यास्तरङ्गवातैर्वीचिपवनैर्वारितोऽपनीत श्रम क्लेशो यस्या सा वारितश्रमेवाऽसौ नृपपत्नी राजमहिषी नराधिप राजान सम्यक् प्रकारेण सिषेवे सेवितवती । अत्रोत्प्रेक्षालङ्कारः ।

**भाषा**

अपने हाथो से शङ्कर के मन्दिर के आँगन को लीपपोत कर सफा करने वाली रानी, शङ्कर का मुकुट स्वरूप गङ्गानदी की लहरो के वायु से मानो अपना श्रम दूर करती हुई, राजा की अच्छी तरह सेवा करती थी।

**तथाविधायाः सदृशं यदुन्नतेर्मतं यदौदार्यधनस्य चेतसः।**
**तदद्रिकन्यादयितस्य पूजने जितेन्द्रियः कल्पयति स्म पार्थिवः ॥४८॥**

**अन्वयः**

जितेन्द्रियः पार्थिवः तथाविधायाः उन्नतेः यत् सदृश, औदार्यधनस्य यन् मतं तत् अद्रिकन्यादयितस्य पूजने कल्पयति स्म।

**व्याख्या**

जितानि वशीकृतानीन्द्रियाणि येन स यतेन्द्रिय पार्थिवो राजा 'राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षित' इत्यमर। तथाविधायास्तादृश्या पुत्रप्राप्ति-रूपाया उन्नतेरभ्युदयस्य यत् सदृश योग्य कार्यमौदायमेव धन यस्य तस्य चेतस-श्चित्तस्य यन्मतमिष्टमुदारचित्तेन च यत्सम्पादनीय स्यात्तत्सर्वं सेवाकार्यं तत्सामग्री च 'वित्तशाठ्यविवर्जित' इति स्मरणात्। अद्रिकन्याया. पार्वत्या दयितस्य पत्यु शिवस्य पूजने पूजाया कल्पयति स्म रचयति स्म। यक्षानुकूलो बलिरिति न्यायाद्यथाकार्य सर्वमकल्पयदिति भाव।

**भाषा**

जितेन्द्रिय राजा, वैसी पुत्र प्राप्ति के सदृश उच्च कामना के अनुरूप और उदारचित्त की प्रेरणा के अनुसार शकर के पूजन मे सब उत्तम वस्तुओ का प्रयोग करता था।

**इति क्षितीन्द्रश्चिरमिन्दुशेखर-प्रसादनाय व्रतमुग्रमाश्रितः।**
**कदाचिदाकर्णयति स्म भारतीं प्रभातपूजासमये नभश्चरीम् ॥४९॥**

**अन्वयः**

इति इन्दुशेखरप्रसादनाय चिरम् उग्रं व्रतम् आश्रितः क्षितीन्द्रः कदाचिन् प्रभातपूजासमये नभश्चरीं भारतीम् आकर्णयति स्म।

**व्याख्या**

इति पूर्वोक्तरीत्येन्दुशेखरस्य शिवस्य प्रसादनाय प्रसन्नतासम्पादनार्थं चिर चिरकालमुग्र कठिन व्रत नियम 'नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्' इत्यमर । आश्रितस्समाश्रित क्षितीन्द्रो राजा कदाचित्कस्मिंश्चित्समये प्रभाते प्रात काले या पूजाऽर्चन तस्या अवसरे नभसि गगने चरतीति नभश्चरी तामाकाशगामिनी भारती वाणी 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमर । आकाशवाणीमित्यर्थ । आकर्णयति स्म श्रुतवान् ।

**भाषा**

इस प्रकार शकर भगवान् को प्रसन्न करने मे चिरकाल तक कठोर व्रत पालन करने वाले राजा ने किसी दिन सबेरे की पूजा के काल मे आकाशवाणी सुनी ।

**अलं चुलुक्यक्षितिपालमण्डन-श्रमेण विश्राम्यतु कर्कशं तपः ।**
**कमप्यपूर्वं त्वयि पार्वतीपतिः प्रसादमारोहति भक्तवत्सलः ॥५०॥**

**अन्वयः**

हे चुलुक्यक्षितिपालमण्डन श्रमेण अलं, कर्कशं तपः विश्राम्यतु, भक्तवत्सलः पार्वतीपतिः त्वयि कम् अपि अपूर्वं प्रसादम् आरोहति ।

**व्याख्या**

हे चुलुक्यस्य चुलुक्यवशस्य क्षितिपाला नृपास्तेषा मण्डनमाभूषण तत्सम्बुद्धौ हे चुलुक्यवशक्षितिपालमण्डन ! राजन् ! श्रमेणाऽलमत पर व्रतादिषु परिश्रमो न कर्तव्य । कर्कश कठिन तपो नियमो विश्राम्यतु विश्रान्तिमेतु भक्ताना प्रपन्नाना वत्सल स्निग्ध 'स्निग्धस्तु वत्सल' इत्यमर । पार्वत्या पति शिवस्त्वयि त्वद्विषये कमप्यपूर्वं कमप्यनिर्वचनीय प्रसाद प्रसन्नता कृपामारोहति करोति ।

**भाषा**

हे चालुक्य वशीय राजाओ के भूषण ! अब परिश्रम मत करो । कठोर तप बन्द करो । भक्तवत्सल शकर ने तुम्हारे ऊपर एक अवर्णनीय कृपा की है ।

**इयं त्वदीया दयिता भविष्यति क्षितीन्द्र पुत्रत्रितयस्य भाजनम् ।**
**चुलुक्यवंशः शुचितां यदर्जितैर्यशोभिरायास्यति मौक्तिकैरिव ॥५१॥**

**अन्वयः**

हे क्षीतीन्द्र इयं त्वदीया दयिता पुत्रत्रितयस्य भाजनं भविष्यति। मौक्तिकैः इव यदर्जितैः यशोभिः चुलुक्यवंशः शुचिताम् आयास्यति।

**व्याख्या**

हे क्षितीन्द्र हे राजन्! इय त्वदीया तव दयिता महिषी पुत्राणां सुताना त्रितयस्य त्रयस्य त्रिसख्याकसुताना वा भाजन पात्र भविष्यति। मौक्तिकैरिव मुक्तामणिभिरिवाऽतिस्वच्छै शुक्लवर्णैर्यैस्तवपुत्रैरर्जितानि निष्पादितानि यशोभि· कीर्तिभि 'यश कीर्ति समज्ञा च' इत्यमर। चुलुक्यवशश्चुलुक्यनृपाणा कुल शुचितामुज्वलता पवित्रता वाऽऽयास्यति गमिष्यति। 'शृङ्गार शुचिरुज्वल' इत्यमर। ते त्रय पुत्रा कुलभूषणा भविष्यन्तीति भाव। अत्रोपमालङ्कार।

**भाषा**

हे राजा तुम्हारी इस धर्मपत्नी से तुम्हे तीन पुत्र होगे। उनके द्वारा उपार्जित मोतियो की ऐसी स्वच्छ और शुभ्र कीर्ति से यह चालुक्यवश उज्वल या पवित्र हो जाएगा।

**निधिः प्रतापस्य पदं जयश्रियः कलालयस्ते तनयस्तु मध्यमः।**
**दिलीपमान्धातृमुखादिपार्थिव-प्रथामतिक्रम्य विशेषमेष्यति ॥५२॥**

**अन्वयः**

ते मध्यमः तनयः तु प्रतापस्य निधिः जयश्रियः पद कलालयः (सन्) दिलीपमान्धातृमुखादिपार्थिवप्रथाम् अतिक्रम्य विशेषम् एष्यति।

**व्याख्या**

ते तव मध्यमो द्वितीयस्तनय पुत्रस्तु 'आत्मजस्तनय· सूनु सुत पुत्र' इत्यमर। प्रतापस्य प्रभावस्य 'स प्रताप प्रभावश्च यत्तेज कोशदण्डजम्' इत्यमर·। विधिर्निधान जयश्रियो जयलक्ष्म्या पद स्थान कलानाञ्चतु षष्ठि-कलानामालयो गृह सन् दिलीपश्चमान्धाता च दिलीपमान्धातारौ सुर्यवशसमुत्पन्नौ प्रतापिनौ राजानौ मुख आदौ येषा ते दिलीपमान्धातृमुखा आदिपार्थिवा प्राचीननृपास्तेषा प्रथा ख्यातिमतिक्रम्य समुत्क्रम्य विशेष विशेषतामधिकोत्कृष्टता-मेष्यति प्राप्स्यति।

### भाषा

तुम्हारा मङ्गल। लडका बडा प्रतापी, विजय लक्ष्मी का पात्र तथा चौसठो कलाओ का ज्ञाता होकर सूर्यवशी दिलीप मान्धाता आदि प्राचीन राजाओ की ख्याति से भी अधिक प्रतिष्ठा प्राप्त करेगा।

**सुतद्वयं ते निजकर्मसम्भवं मम प्रसादात्तनयस्तु मध्यमः।**
**पयोनिधेः पारगतामपि श्रियं स दोर्बलाद्राम इवाहरिष्यति ॥५३॥**

### अन्वयः

सुतद्वयं ते निजकर्मसम्भवं, मध्यमः तनयः तु मम प्रसादात्, सः रामः इव दोर्बलात् पयोनिधेः पारगताम् अपि श्रियम् आहरिष्यति।

### व्याख्या

सुतद्वय द्वौ पुत्रौ ते तव निजेन स्वकीयेन कर्मणा तपसा सुकृतेन वा सम्भव उत्पत्तिर्ययोस्तत्। द्वौ पुत्रौ तव कठिनव्रतफलरूपाविति भाव। मध्यमो द्वितीयस्तनय पुत्रस्तु मम शिवस्य प्रसादादनुग्रहविशेषाद्भविष्यति। स राम इव दाशरथिरिव दोष्णोर्भुजयोर्बल शक्तिस्तस्मात् 'भुजबाहू प्रवेष्टो दो' इत्यमर। पयोनिधे समुद्रस्य पारगता पारे गता श्रिय राज्यलक्ष्मीं रामपक्षे सीतामाहरिष्यति समानेष्यति। अत्रोपमालङ्कार.।

### भाषा

दो पुत्र तुम्हारे किये हुवे कठिन अनुष्ठानादि कर्मो से प्राप्त होगे। किन्तु तुम्हारा मध्यम पुत्र तो मेरी विशेष कृपा से तुम्हे प्राप्त होगा। वह रामचन्द्र के समान समुद्र के पार गई हुई सीता रूपी लक्ष्मी को अपने भुजबल से ले आएगा।

**गिरं निपीय श्रुतिशुक्तिमागतां सुधामिव व्योमपयोनिधेरिति।**
**उदञ्चिरोमाञ्चतया समन्ततः स शैत्यसम्पर्कमिव न्यवेदयत् ॥५४॥**

### अन्वयः

सः व्योमपयोनिधेः श्रुतिशुक्तिम् आगतां सुधाम् इव इति गिरं निपीय समन्ततः उदञ्चिरोमाञ्चतया शैत्यसम्पर्कम् इव न्यवेदयत्।

### व्याख्या

स आहवमल्लदेवो व्योमैवाऽभ्रमेव 'द्योदिवौ द्वे स्त्रियामभ्र व्योमपुष्करमम्बरम्' इत्यमर । पयसा जलाना निधिस्समुद्रस्तस्माच्छ्रुतिरेव कर्ण एव शुक्तिर्मुक्तास्फोट 'मुक्तास्फोट स्त्रिया शुक्ति' इत्यमर । ता समागता प्राप्ता सुधामिव पीयूषमिवेतीत्थ पूर्वोक्ता गिरमाकाशवाणी निपीय श्रुत्वा समन्तत परित उदञ्ची उद्गतो रोमाञ्च रोमहर्षण यस्य स उदञ्चिरोमाञ्चस्तस्य भावस्तत्ता तया 'रोमाञ्चो रोमहर्षणम्' इत्यमर । शैत्यस्य शीततायास्सम्पर्क सम्बन्धस्तमिव न्यवेदयत् प्रकटयाञ्चकार । अत्राऽऽकाशे समुद्रतादात्म्यारोप श्रुतौ शुक्तित्वारोपे वाण्या सुधात्वारोपे च कारणमिति परम्परितरूपकम् । अत्रोपमोत्प्रेक्षयो सकर ।

### भाषा

राजा आहवमल्लदेव, आकाशरूपी समुद्र से कर्णरूपी सीप मे अमृत रूपी आकाशवाणी पडने से हर्ष के कारण रोमाञ्चित होकर अपने को मानो जाडा लग रहा है ऐसा प्रकट करने लगा । (जाडा लगने से भी रोगटे खडे हो जाते है ।)

**उदश्रुदानन्दजलप्लुतेक्षणस्ततः प्रमोदालसलोचनोत्पलाम् ।**
**स वल्लभामन्यपुरन्ध्रिदुर्लभैर्गुणैरुपेतां गुणवानतोषयत् ॥५५॥**

### अन्वयः

ततः गुणवान् सः उदश्रुदानन्दजलप्लुतेक्षणः (सन्) अन्यपुरन्ध्रिदुर्लभैः गुणैः उपेता प्रमोदालसलोचनोत्पला वल्लभाम् अतोषयत् ।

### व्याख्या

ततस्तदनन्तर गुणवान्दयादाक्षिण्यादिगुणोपेत स आहवमल्लदेवनृप उदञ्चदुद्गच्छदानन्दजलमानन्दाश्रुजल तेन प्लुते व्याप्त ईक्षणे नेत्रे 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणि' इत्यमर । यस्यैवम्भूतस्सन्नन्याश्चपुरन्ध्रयश्च नार्यश्च तासु दुर्लभैरप्राप्यैर्गुणैस्सौजन्यलज्जापातिव्रत्यादिगुणैरुपेता युक्ता प्रमोदेनाऽऽनन्देनाऽलसे निस्पन्दे लोचन एवोत्पले कमले यस्यास्ता वल्लभा प्रियामतोषयत् समाश्वासितवान् । अत्ररूपकमलङ्कार ।

**भाषा**

इसके अनन्तर उस गुणी राजा ने उत्कट आनन्द जनित अश्रुओ से भरी आँखो से अन्य स्त्रियो मे अप्राप्य गुणो से युक्त तथा आनन्द से निर्निमेष नेत्र कमल वाली अपनी रानी की सान्त्वना की ।

**शनैर्विधाय व्रतपारणाविधिं धनैः कृतार्थीकृतविप्रमण्डलः ।**
**अखण्डसौभाग्यविलासया पुनस्तया समं राज्यसुखेष्वरज्यत ॥५६॥**

**अन्वयः**

(सः) शनैः व्रतपारणाविधि विधाय धनैः कृतार्थीकृतविप्रमण्डलः (सन्) अखण्डसौभाग्यविलासया तया सम पुनः राज्यसुखेषु अरज्यत ।

**व्याख्या**

स राजा शनै स्वस्थचित्तेन व्रतस्य पूर्वाचरितानुष्ठानस्य पारणाविधि समाप्तिकृत्य ब्राह्मणभोजनादिपूर्वक स्वभोजनादिक विधाय कृत्वा कृतार्थीकृत दानभोजनादिना सन्तुष्टमनोरथीकृत विप्रमण्डल ब्राह्मणसमुदायो येनैवम्भूतस्सन्नखण्ड निरन्तर यत्सौभाग्य सधवत्व तस्य विलास सौख्य यस्यास्सा तया स्ववल्लभया सह राज्यसुखेषु राजकीयसुखोपभोगेष्वरज्यत सरक्तो बभूव । मन्त्रिविनिविष्ट राज्यकार्यभारमुररीकृत्य पूर्ववत्प्रजापालनतत्परोऽभूदिति भाव ।

**भाषा**

वह राजा, स्वस्थ चित्त से व्रत का पारण कर और ब्राह्मणो को दान भोजन आदि से सन्तुष्ट करते हुए राज्य कार्य का भार लेकर अखण्ड सौभाग्यवती होने के सौख्य से युक्त अपनी रानी के साथ राज्य सुख के उपभोग करने मे प्रवृत्त हुआ ।

**क्रमेण तस्यां कमनीयमात्मजं शुभे मुहूर्ते पुरुहूतसन्निभः ।**
**अवाप्य सम्पादितमांसलोत्सवः परामगान्निर्वृतिमीश्वरः क्षितेः ॥५७॥**

**अन्वयः**

पुरुहूतसन्निभः क्षितेः ईश्वरः क्रमेण शुभे मुहूर्ते तस्यां कमनीयम् आत्मजम् अवाप्य सम्पादितमासलोत्सवः (सन्) परां निर्वृतिम् अगात् ।

## व्याख्या

पुरुहूतसन्निभ इन्द्रसदृश 'वृद्धश्रवा शुनाशीर पुरुहूत पुरन्दर' इत्यमर. । क्षिते पृथिव्या ईश्वर स्वामी क्रमेण किञ्चित्कालानन्तर शुभे माङ्गलिके 'कल्याण मङ्गल शुभम्' इत्यमर । मुहूर्ते काले तस्या स्ववल्लभाया कमनीय सुन्दरमात्मज पुत्र 'आत्मा वै जायते पुत्र' इति श्रुते । अवाप्य लब्ध्वा सम्पादित. कृतो मासलोऽतिबहुलोऽतिसमृद्धश्चोत्सवो महो येन स. 'मह उद्धव उत्सव.' इत्यमर । एवम्भूतस्सन् परा समुत्कृष्टा निर्वृति सुखमगात् प्राप ।

## भाषा

आगे चलकर इन्द्र के समान प्रतापी पृथ्वीपति आहवमल्लदेव ने उस रानी से सुमुहूर्त मे एक सुन्दर पुत्र प्राप्त कर और उस उपलक्ष्य मे एक बडा उत्सव मना कर बहुत आनन्द प्राप्त किया ।

**स सोमवन्नेत्रचकोरपारणां चकार गोत्रस्य यदुज्वलाननः ।**
**यथोचितं सोम इति क्षमापतेस्ततः प्रसन्नादभिधानमाप्तवान् ॥५८॥**

## अन्वयः

यत् उज्ज्वलाननः सः गोत्रस्य सोमवत् नेत्रचकोरपारणा चकार ततः प्रसन्नात् क्षमापतेः यथोचितं सोमः इति अभिधानम् आप्तवान् ।

## व्याख्या

यद्यस्मात्कारणादुज्ज्वल विशिष्टशोभान्वितमानन मुख यस्य स नूतनजात-शिशुर्गोत्रस्य चुलुक्यवशस्य सोमवच्चन्द्र इव नेत्राणि नयनान्येव चकोराश्चकोरका. "जीवजीवश्चकोरक" इत्यमर । पक्षिविशेषा ये चन्द्रिकया तृप्यन्ति । तेषां पारणा सन्तोष चकार ततस्तस्मात्कारणात्प्रसन्नादानन्दयुक्तात्क्षमापते राज्ञो यथोचितमुचितमनतिक्रम्य वर्तत इति यथायोग्य सोम इत्याकारकमभिधान नामाऽऽप्तवात् प्राप्तवान् । अत्रोपमारूपकयो सकर ।

## भाषा

चूँकि सुन्दर मुखवाले उस बालक ने चन्द्रमा के समान चुलुक्यवशीयो के नेत्र रूपी चकोरो को सन्तुष्ट किया इसलिये प्रसन्न चित्त राजा से उसने सोम यह नाम पाया । अर्थात् उसका नाम सोम रक्खा गया ।

**अनन्यसामान्यतनूजशंसिनीं स्मरन्नजस्रं गिरमुद्गतां दिवः ।**
**द्वितीयगर्भार्थमभूत्स निर्भरं समुत्सुको मध्यमलोकनायकः ॥५९॥**

### अन्वयः

मध्यमलोकनायकः सः दिवः उद्गतां अनन्यसामान्यतनूजशंसिनीं गिरं अजस्रं स्मरन् द्वितीयगर्भार्थं निर्भरं समुत्सुकः अभूत् ।

### व्याख्या

मध्यमश्चासौ लोकश्च मध्यमलोको भूलोकस्तस्य नायको मध्यमलोकपालो भूपाल स राजाऽऽहवमल्लदेवो दिव आकाशादुद्गता समागता नाऽन्य सामान्यस्समानो यस्य स चाऽसौ तनूज पुत्रश्च त शसति निवेदयतीति ता गिर वाणीमजस्र निरन्तर 'नित्यानवरताजस्रम्' इत्यमर । स्मरन् द्वितीयगर्भार्थं द्वितीयगर्भकृते निर्भरमत्यन्त समुत्सुक उत्कण्ठितोऽभूत् ।

### भाषा

वह भूलोक का राजा असाधारण व अलौकिक पुत्र प्राप्त होने की आकाशवाणी को सदैव स्मरण करता हुआ, दूसरे गर्भ के लिये अत्यन्त उत्कण्ठित हुआ ।

**स्थितस्य गर्भे प्रभयेव कस्यचिद् विलिप्यमानां स्फटिकामलत्विषः ।**
**स गण्डपालीं बिसदण्डपाण्डुरां ददर्श देव्याः पृथिवीपतिस्ततः ॥६०॥**

### अन्वयः

ततः पृथिवीपतिः स्फटिकामलत्विषः गर्भे स्थितस्य कस्यचित् प्रभया इव विलिप्यमानां बिसदण्डपाण्डुरा देव्याः गण्डपाली ददर्श ।

### व्याख्या

ततस्तदनन्तर पृथिवीपती राजा स्फटिकस्याऽमला निर्मलात्विडिव प्रभेव 'स्यु प्रभारुग्रुचिस्त्विड्भाभाच्छविद्युतिदीप्तय' इत्यमर । त्विट् प्रभा यस्य स तस्य स्फटिकमणिसमानशुभ्रकान्तेर्गर्भे उदराभ्यन्तरे स्थितस्य विद्यमानस्य कस्यचिद् गर्भस्य प्रभयेव कान्त्येव विलिप्यमाना रज्यमानामनुलिप्यमानाञ्च बिसदण्ड इव मृणालदण्ड इव 'मृणाल बिसमब्जादि' इत्यमर । पाण्डुरा शुभ्रवर्णां देव्या महिष्या गण्डपाली कपोल ददर्श दृष्टवान् । अत्रोपमोत्प्रेक्षयो सकर ।

## भाषा

इसके अनन्तर राजा ने स्फटिक की निर्मल कान्ति के समान शुभ्र कान्ति वाले गर्भस्थित किसी (गर्भ) की कान्ति से मानो छाए हुए, कमलनाल के सदृश श्वेत रग के रानी के कपोलस्थल को देखा ।

**स हेमवृष्टिं महतीमकारयच्चकार चित्राण्युपयाचितानि च ।**
**हरप्रसादोचितसूनुलालसश्चकार किं किं न नरेन्द्रचन्द्रमाः ॥६१॥**

## अन्वयः

सः महतीं हेमवृष्टि चित्राणि उपयाचितानि च चकार । हरप्रसादोचितसूनुलालसः नरेन्द्रचन्द्रमाः कि कि न चकार ।

## व्याख्या

स राजा महतीं विशाला हेमवृष्टि सुवर्णवृष्टि चित्राण्याश्चर्यकराण्युपयाचितानि स्वमनोरथसिद्धये स्वाभीष्टदेवतायै पूर्वं सकल्पितानुपहारांश्च चकार । “दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितक दिव्य दोहद तद्विदुर्बुधा ” । स राजा याचकेभ्य प्रचुर सुवर्णं दत्तवान् देवेभ्यश्च स्वाभिलषितसिद्धये पूर्वसकल्पितानुपहारान् पूजनादिमिषेणार्पितवानिति भाव । हरस्य शिवस्य य प्रसाद प्रसन्नता ‘प्रसादस्तु प्रसन्नता’ इत्यमर । तदुचितस्तदनुकूलो य सूनु पुत्रस्तस्मिन् लालसोत्कटकामना यस्य स ‘कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयो ’ इत्यमर । नरेन्द्राणा राज्ञा तारकाणामिव मध्ये चन्द्रमाश्चन्द्र इवाऽऽल्हादको मनोहारी च स राजा किं किं समुचित कार्यं न चकार कृतवान् । सर्वमेव तद्योग्य समुचित कार्य कृतवानित्यर्थ । अत्रार्थापत्त्यलङ्कारस्तेन सम्पदामुत्कर्ष प्रतीयते ।

## भाषा

उस राजा ने सुवर्ण की घोर वृष्टि की अर्थात् याचको को खूब सुवर्णदान दिया । देवताओ की जो विचित्र मनौतियाँ की थी उनको पूरा किया । शकर के प्रसाद के अनुकूल पुत्र पाने की लालसा रखने वाले उस राजा ने क्या २ नही किया अर्थात् तदनुकूल सब कुछ किया ।

**उवाह धौतां क्षितिपालवल्लभा सुधाप्रवाहैरिव देहकन्दलीम् ।**
**विषादपङ्कक्षयतः क्षमापतेर्निरन्तरं तु प्रससाद मानसम् ॥६२॥**

### अन्वयः

क्षितिपालवल्लभा सुधाप्रवाहैः धौताम् इव देहकन्दलीम् उवाह । क्षमापतेः मानस तु विषादपङ्कक्षयतः निरन्तरं प्रससाद ।

### व्याख्या

क्षितिपालस्य भूपालस्य वल्लभा प्रिया राज्ञी सुधाया अमृतस्य प्रवाहै. सतानैर्धौता प्रक्षालितामत एव श्वेतामिव देहकन्दली शरीरलतामुवाह धारितवती । क्षमापते पृथ्वीपते 'विपुला गह्वरी धात्री गौरिला कुभिनी क्षमा । भूतधात्री रत्नगर्भा जगती सागराम्बरा ।' इत्यमर । मानस मनस्तु विषादो दु ख स एव पङ्क कर्दमस्तस्य क्षयतो विनाशात् निरन्तरमजस्र प्रससाद प्रसन्नता समवाप । मानस सर पङ्कराहित्याद्यथा निर्मलजलेन प्रसन्नता प्राप्नोति तथैव नृपस्य मनो दु खराहित्याद् गर्भचिन्है सुख प्राप । अत्रोत्प्रेक्षारूपकश्लेषाणा सकरस्तेन शरदृतुवृत्तान्त प्रतीयत इति वस्तुध्वनि ।

### भाषा

रानी, अमृत से धोई हुई के समान श्वेत शरीर को धारण करने लगी अर्थात् रानी सफेद पडने लगी । राजा का मन दु ख रूपी कीचड का क्षय होने से निरन्तर प्रसन्न होने लगा । जिस प्रकार कीचड दूर होकर निर्मल जल रहने से मानस सरोवर प्रसन्न होता है वैसे ही राजा का मन दु ख दूर होकर गर्भ के चिन्ह से निरन्तर प्रसन्न हुआ ।

**निपीड्य चन्द्रं पयसे निवेशिता ध्रुवं तदीयस्तनकुम्भयोः सुधा ।**
**यदुत्पलश्यामलमाननं तयोः सलाच्छनच्छायमिव व्यराजत ॥६३॥**

### अन्वयः

पयसे चन्द्र निपीड्य सुधा तदीयस्तनकुम्भयोः ध्रुवं निवेशिता । यत् तयोः उत्पलश्यामलम् आननं सलाच्छनच्छायम् इव व्यराजत ।

## व्याख्या

पयसे दुग्धाय 'पय क्षीर पयोऽम्बु च' इत्यमर । चन्द्र सुधाशु निपीड्य निष्पीड्य सुधा चन्द्रगत पीयूष तस्या राज्ञा अय तदीयस्तौ तवीयौ स्तनौ एव कुम्भौ तयोर्नृपपत्निकुचकुम्भयोर्ध्रुव निश्चयेन निवेशिता प्रवेशिता । यद्यस्मात्कारणात् तयो कुचयोरुत्पल नीलोत्पलमिव श्यामल कृष्णवर्णमानन चूचुक 'चूचुको ना कुचाननम्' इति रत्नकोश । लाञ्छनस्य चन्द्रस्थकृष्णचिन्हस्य छाया कान्तिस्तया सहितमिति सलाञ्छनच्छायमिव व्यराजत शुशुभे । चन्द्रस्थसुधागमसम्बन्धेन कलङ्ककान्त्या अप्यागमनसम्भवादुत्प्रेक्षालङ्कार ।

## भाषा

(उस बालक के दूध पीने के लिये) दूध के स्थान पर चन्द्रमा को निचोड कर अमृत ही रानी के स्तन रूपी घडो मे अवश्य भरा गया होगा । क्यो कि उन दोनो स्तनो के नीले कमल के ऐसे काले चूचुक, (ढेपनी, स्तन के ऊपर की घुडी) चन्द्रमा के कलङ्क की कान्ति से युक्त दिखाई देते थे अर्थात् काले थे । गर्भिणी के चूचुक काले हो जाते है ।

**नरेन्द्रकान्ताकुचहेमकुम्भयोः सुधारसं चीरमिषेण बिभ्रतोः ।**
**हिमोपचारार्पितमार्द्रचन्दनं श्रियं दधौ गालनशुभ्रवाससः ॥६४॥**

## अन्वयः

क्षीरमिषेण सुधारसं बिभ्रतोः नरेन्द्रकान्ताकुचहेमकुम्भयोः हिमोपचारार्पितम् आर्द्रचन्दनं गालनशुभ्रवाससः श्रियं दधौ ।

## व्याख्या

क्षीरस्य दुग्धस्य मिषेण व्याजेन सुधारसममृतरस बिभ्रतोर्धारयतो नरेन्द्रस्याऽऽहवमल्लदेवस्य कान्ता वल्लभा तस्या कुचावेव हेमकुम्भौ सुवर्णकुम्भौ तयोरुपरि हिमोपचाराय शीतोपचारायाऽर्पित विलिप्तमार्द्रचन्दन कृतार्द्रचन्दनलेपो गालन स्रावण क्षरण वा तस्य शुभ्र शुक्ल वासो वस्त्र तस्याऽमृतरसस्रावणार्थश्वेतवस्त्रस्य शोभा कान्ति दधौ बभार । चन्दनस्य शुभ्रवर्णत्वात्तस्मिञ्छुभ्रवस्त्रत्वारोप । अत्रनिदर्शनाऽलङ्कार । 'संभवन्वस्तुसम्बन्धोऽसंभवन्वाऽपि कुत्रचित् । यत्र बिम्बानुबिम्बत्व बोधयेत्सा निदर्शना ।'

**भाषा**

दूध के व्याज से अमृत के रस को रखने वाले उस रानी के स्तन रूपी सोने के घडो पर, ठडक पहुँचाने के लिये लगाया हुआ सफेद चन्दन, अमृत को छानने के लिये घडो के ऊपर रक्खे हुए सफेद छन्नो (छननो) की शोभा दे रहा था ।

**नरेन्द्रपुत्रस्य कृते सुरक्षितं क्षितीशकान्ताकुचकुम्भयोः पयः ।**
**विलासहारोज्ज्वलमौक्तिकच्छलात् समल्लिकावासमिव व्यधीयत ।६५।**

**अन्वयः**

नरेन्द्रपुत्रस्य कृते क्षितीशकान्ताकुचकुम्भयोः सुरक्षितं पयः विलासहारोज्ज्वलमौक्तिकच्छलात् समल्लिकावासम् इव व्यधीयत ।

**व्याख्या**

नरेन्द्रस्य नृपस्य पुत्र सूनुस्तस्य कृते क्षितीशस्य पृथ्वीपते कान्ताया प्रियायाः कुचावेव स्तनावेव कुम्भौ घटौ तयोस्सुरक्षित सुनिहित पय दुग्ध विलासाय धारितश्चासौ हारश्च तस्योज्ज्वलाश्शुभ्राश्चते मौक्तिकाश्च तेषाञ्छलान्मिषेण विलासार्थधारितहारप्रोतशुभ्रमुक्ताफलव्याजेन मल्लिकापुष्पाणा 'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका । शीतभीरुर्मदायती भूपदी तृणशून्यकम्' इति वाचस्पति । वासस्सुगन्धस्तेन सहित युक्तमिति समल्लिकावासमिव व्यधीयत कृतम् । शुभ्रत्वान्मौक्तिकोपरि मल्लिकापुष्पत्वारोप । सुगन्धार्थं दुग्धोपरि मल्लिकापुष्पाणा स्थितिरिति भाव । अत्र सापन्हवोत्प्रेक्षालङ्कार ।

**भाषा**

राजपुत्र के लिये रानी के स्तनरूपी घडो मे सुरक्षित रक्खा हुवा दूध, शोभा के लिये पहने हुए हार के सफेद मोतियो के मिष से मानो सफेद बेले के फूलो की सुगन्ध से सुगन्धित किया गया था ।

**मृगीदृशः श्यामलचूचुकच्छलात् कुचद्वये भूपसुतोपयोगिनि ।**
**प्रभावसंक्रान्तरसायनौषधी-दलद्वयं नीलमिव व्यराजत ॥६६॥**

**अन्वयः**

मृगीदृशः भूपसुतोपयोगिनि कुचद्वये श्यामलचूचुकच्छलात् नीलं प्रभावसंक्रान्तरसायनौषधीदलद्वयम् इव व्यराजत ।

**व्याख्या**

मृगीदृश एणनयनाया नृपस्त्रियो भूपसुतस्य राजपुत्रस्योपयोगिन्युपभोगयोग्ये कुचद्वये स्तनद्वये श्यामले कृष्णवर्णे च ते चूचुके कुचाग्रे 'चूचुक तु कुचाग्र स्यात्' इत्यमर । तयोश्छलाद्व्याजेन नील कृष्णवर्णं प्रभावेणाऽलौकिकशक्त्या सक्रान्त सगत रसायनौषध्या आयुर्वर्धकजरानिवारकभेषजस्य दलद्वयमिव पत्रयुगलमिव रराज शुशुभे । अत्र सापन्हवोत्प्रेक्षालङ्कार ।

**भाषा**

राजपुत्र के उपयोग मे आने वाले मृगनयनी रानी के दोनो स्तनो पर काले रग के चुचुको (ढेपनी, स्तन के ऊपर की घुडी) के मिष से मानो अलौकिक शक्ति से युक्त आयुष्य वर्धक और जरा निवारक किसी औषधि के काले रग के दो पत्ते शोभित हो रहे थे ।

**निरन्तरायाससमर्थमर्थिनां कथं नु दारिद्र्यमसौ सहिष्यते ।**
**न येन मध्यस्थमपि व्यषह्यत स्थितेन गर्भे नरनाथयोषितः ॥६७॥**

**अन्वयः**

**असौ अर्थिनां निरन्तरायाससमर्थं दारिद्र्य कथं नु सहिष्यते । गर्भे स्थितेन येन नरनाथयोषितः मध्यस्थम् अपि (दारिद्र्यं) न व्यषह्यत ।**

**व्याख्या**

असौ सजनिष्यमाणपुत्रोऽर्थिना याचकाना निरन्तर सतत आयास क्लेशस्त-स्मिन्समर्थं क्लेशकारकमित्यर्थ । दारिद्र्य धनाभाव कथ केन प्रकारेण सहिष्यते न सहिष्यत इत्यर्थ । यतो गर्भे उदरे स्थितेन येन भाविराजपुत्रेण नरनाथस्य नृपस्य योषित सीमन्तिन्या 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधू' इत्यमर । मध्यस्थमुदरस्थ दारिद्र्य कृशत्व न व्यषह्यत न सोढम् । गर्भिण्या उदर वर्धत एव । अत अनेनोदरस्थकृशत्वरूपदारिद्र्यमपहृतम् । अत्रोत्प्रेक्षा गम्या ।

**भाषा**

यह गर्भस्थ बालक याचको को निरन्तर कष्ट देने वाली दरिद्रता को कैसे सहन करेगा । क्योकि उसने गर्भ मे आकर रानी के पेट की कृशता रूपी दरिद्रता न सहन की । अर्थात् गर्भवती स्त्रियो का पेट स्वभावत ही बडा हो जाता है । रानी गर्भवती होने से उसका मध्य भाग बडा हो गया था ।

**बलेः समुल्लासमपाचकार यः स कारणादत्र कुतोऽपि वर्तते ।**
**इतीव गर्भः क्षितिपालयोषितः शशंस भञ्जन्नुदरे वलिस्थितिम् ॥६८॥**

### अन्वयः

क्षितिपालयोषितः गर्भः उदरे वलिस्थिति भञ्जन्, यः बलेः समुल्लासम् अपाचकार सः कुतः अपि कारणात् अत्र वर्तते इति शशंस इव ।

### व्याख्या

क्षितिपालयोषितो नृपपत्न्या गर्भो गर्भस्थो बाल उदरे वलिस्थिति त्रिवलिरेखा भञ्जन्नपहरन् यो विष्णुर्वामनरूपो बलेर्बलिनामकदैत्यस्य समुल्लासमौद्धत्यमपाचकार दूरीकृतवान् स विष्णु कुतोऽपिकारणात्कस्मादप्यनिर्वचनीयकारणादत्रोदरे वर्तते प्रतिवसतीति शशसेव प्रकटीचकारेव । वबयोरभेदादुत्प्रेक्षा । नाविष्णु- पृथिवीपतिरिति वचनात्तस्य राजपुत्रस्य विष्णुरूपत्व गम्यते ।

### भाषा

रानी के गर्भ मे का राजपुत्र, रानी के पेट पर की त्रिवली दूर करते हुए यह द्योतित करता था मानो यहाँ पेट मे किसी कारण से राजा बलि के औद्धत्य का भङ्ग करने वाले विष्णु के अवतार रूप वामन आये है । (गर्भिणी के पेट पर की त्रिवली पेट बढने से नही दिखाई पडती ।)

**कृतावतारः क्षितिभारशान्तये न पीड्यमानां सहते महीमयम् ।**
**इतीव सा गर्भभरालसा शनैः पदानि चिक्षेप मृगायतेक्षणा ॥६९॥**

### अन्वयः

गर्भभरालसा मृगायतेक्षणा सा, क्षितिभारशान्तये कृतावतारः अयं पीड्यमाना महीं न सहते इति इव शनैः पदानि चिक्षेप ।

### व्याख्या

गर्भभरेण गर्भभारेणाऽलसा मन्थरगतिर्मृगस्याऽऽयत ईक्षण इवेक्षणे नेत्रे यस्यास्सा नृपस्त्रीः क्षिते पृथ्वा भार कुनृपतिकृतान्यायविशेषस्तस्य शान्तये दूरी- करणाय कृतोऽवतारो येन स गृहीततनुरय कुमारो मयैव पीडचमाना सबाध्यमाना महीं पृथ्वीं कथ सहते सहिष्यत इति हेतोरिव शनैर्मन्द मन्द पदानि पादान् भुवि

पृथिव्या विक्षेप दत्तवती। गर्भिण्यो मन्दगत्यैव चलन्तीति भाव । अत्रोत्प्रेक्षा-लङ्कार ।

### भाषा

गर्भ के बोझ मे धीरे २ चलने वाली, मृग के समान बडी २ आखो वाली रानी, मानो यह सोच कर कि पृथ्वी का बोझ कम करने के लिये शरीर धारण करने वाला मेरा गर्भस्थ कुमार, मुझ से पृथ्वी का बोझ द्वारा पीडित होना कैसे सहन करेगा, पृथ्वी पर धीरे २ पावो को डालती थी । (गर्भिणी स्त्रियाँ प्रायः धीरे २ ही चला करती हैं ।)

**सशब्दकाञ्चीमणिबिम्बितैर्बभौ सखीजनैः साद्भुतगर्भधारिणी ।**
**उपास्यमाना कुलदेवतागणैः समन्ततो यामिकतां गतैरिव ॥७०॥**

### अन्वयः

अद्भुतगर्भधारिणी सा सशब्दकाञ्चीमणिबिम्बितैः सखीजनैः समन्ततः यामिकता गतैः कुलदेवतागणैः इव उपास्यमाना बभौ ।

### व्याख्या

अद्भुतश्चासौ गर्भश्च त धारयतीत्यद्भुतगर्भधारिण्याऽऽश्चर्यशसिगर्भ-धारिणी सा राज्ञी शब्देन सहिता सशब्दा, सशब्दा चाऽसौ काञ्ची रशना तस्या समुद्ग्रन्थिता मणयस्तासु प्रतिबिम्बितै प्रतिफलितै 'रत्न मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमर । सखीजनै समन्ततश्चतुर्दिक्षु यामिकता प्राहरिकता गतै सप्राप्तै कुलस्य वशस्य देवतागणैरिष्टदेवतासमूहैरिवोपास्यमाना ससेव्य-माना बभौ शुशुभे । यथा प्राहरिका सशब्द परितो गत्वा स्वकार्य कुर्वन्ति तथैव सशब्दरशनागतमणि–प्रतिबिम्बित–सखीगणरूप–कुलदेवतागणै समन्तत प्राहरिककार्यं क्रियत इति भाव । उत्प्रेक्षालङ्कार ।

### भाषा

अद्भुत (शक्ति शाली) गर्भ को धारण करने वाली रानी झन झनाने वाली करधनी मे जडे हुए मणियो मे सखी जनो की परछाही पडने से मानो चारो ओर से चिल्ला २ कर पहरा देने वाली कुलकी इष्ट देवताओ से सेवित दिखाई पडती थी ।

**अलङ्कृता दुष्प्रसहेन तेजसा रराज सा रत्नमयीषु भूमिषु ।**
**महागृहाणां प्रतिबिम्बडम्बरैः प्रणम्यमानेव कुलाचलैरपि ॥७१॥**

**अन्वयः**

दुष्प्रसहेन तेजसा अलङ्कृता सा रत्नमयीषु भूमिषु महागृहाणां प्रतिबिम्बडम्बरैः कुलाचलैः अपि प्रणम्यमाना इव रराज ।

**व्याख्या**

दु खेन प्रकर्षेण सोढु शक्येन दुष्प्रसहेन दुर्धर्षेण सोढुमशक्येन वा तेजसा दीप्त्या 'तेज प्रभावे दीप्तौ च नले शुक्रेऽप्यतस्त्रिषु' इत्यमर । अलङ्कृता विभूषिता सा राज्ञी रत्नमयीषु रत्ननिर्मितासु भूमिषु स्थानेषु कुट्टिमेष्वित्यर्थ । महागृहाणा प्रासादाना प्रतिबिम्बस्य प्रतिच्छायाया डम्बरैरारोपै कुलाचलै-स्सप्तभि कुलपर्वतैरपि "महेन्द्रो मलय सह्य शुक्तिमान् ऋक्षपर्वत । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वता ॥" प्रणम्यमानेव वन्द्यमानेव रराज शुशुभे । विशालाकारत्वात्प्रासादप्रतिबिम्बेषु कुलपर्वतत्वारोप । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

अत्यधिक तेज से विभूषित वह रानी, रत्नो से निर्मित फरसो पर बडे २ महलो की परछाही पडने से मानो सात कुलपर्वतो से भी प्रणमित हो रही हो, ऐसी शोभित हो रही थी । अर्थात् महलो की परछाही मानो पर्वत थे जो उसके चरणो पर पड रहे थे ।

**कलत्रमूर्वीतिलकस्य मेखला-कलापमाणिक्यमरीचिभिर्दधे ।**
**उदेष्यतः सूर्यसमस्य तेजसः समुद्गतं बालमिवातपं पुरः ॥७२॥**

**अन्वयः**

ऊर्वीतिलकस्य कलत्रं मेखलाकलापमाणिक्यमरीचिभिः उदेष्यतः सूर्यसमस्य तेजसः पुरः समुद्गतं बालम् आतपम् इव दधे ।

**व्याख्या**

ऊर्व्या पृथिव्यास्तिलकस्य भूषणस्य श्रेष्ठस्य वा नृपस्य कलत्र भार्या 'कलत्र श्रोणिभार्ययो' इत्यमर । मेखलाया रशनाया 'स्त्रीकट्या मेखला काञ्ची सप्तकी

रशना तथा' इत्यमर । कलापस्समुहस्तत्र स्थितानि माणिक्यानि मणयस्तेषा मरीचिभि कान्तिभिर्हेतुभूतैरुदेष्यतो भविष्णो सूर्यसमस्य भास्करतुल्यस्य तेजसो दीप्त्या पुरोऽग्रे समुद्गत समुदित बाल नूत्नमातपमिव प्रकाशमिव 'प्रकाशो द्योत आतप' इत्यमर । दधे धारयामास । भविष्णो सूर्यसमतेजस्विन पुत्रस्य जन्मत प्राक् प्रकाशमिवेति भाव । अत्र मणिकिरणेषु बालातपस्योत्प्रेक्षणादुत्प्रेक्षा ।

**भाषा**

पृथ्वी के भूषण रूप राजा की पत्नी, करधनी मे जडे हुए माणिक्यो की ज्योति से मानो उदय होने वाले सूर्य के तेज के पहिले फैले हुए प्रात कालीन प्रकाश को धारण करती है । अर्थात् जिस प्रकार सूर्य का उदय हो कर तेज फैलने के पूर्व ही प्रकाश होने लगता है उसी प्रकार तेजस्वी पुत्र के उत्पन्न होने के पूर्व ही मानो वह करधनी मे के माणिक्य का प्रकाश पड रहा था ।

**क्षपामुखेषु प्रतिबिम्बितः शशी हृदि क्षमावल्लभलोलचक्षुषः ।**
**जगाम गर्भे दधतः सुखस्थितिं नरेन्द्रसूनोरुपधानतामिव ॥७३॥**

**अन्वयः**

क्षपामुखेषु क्षमावल्लभलोलचक्षुषः हृदि प्रतिबिम्बितः शशी गर्भे सुखस्थिति दधत नरेन्द्रसूनोः उपधानताम् इव जगाम ।

**व्याख्या**

क्षपामुखेषु प्रदोषेषु 'प्रदोषो रजनीमुखम्' इत्यमर । क्षमाया पृथ्व्या वल्लभस्य प्रियस्य पृथ्वीपतेरित्यर्थ । लोलचक्षुषश्चञ्चलनयनाया कान्ताया हृदि हृदये 'चित्तन्तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । प्रतिबिम्बित प्रतिबिम्बत्व प्राप्त शशी चन्द्रो गर्भ उदरे सुखेनाऽऽनन्देन स्थिति निवास दधत कुर्वतो नरेन्द्रसूनो राजपुत्रस्योपधानतामिवोपधीयते आरोप्यते शिरोऽत्रेत्युपधान तस्य भावस्तामुपबर्हत्वमिव 'उपधान तूपबर्ह' इत्यमर । जगाम प्राप । उपबर्हस्य सादृश्य ययाविति । उपधान वर्तुलाकार लम्बाकारञ्च भवति । अत्र चन्द्र-सादृश्याद्वर्तुलाकारस्यैवोपधानस्य ग्रहणम् । बालार्थं वर्तुलाकारमुपधानमेव लोके दृश्यते । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

सायकाल के समय मे पृथ्वीपति की चञ्चल नेत्रवाली रानी के हृदय मे प्रतिबिम्बित चन्द्रमा मानो गर्भ मे सुख से रहने वाले राजपुत्र की गोल तकिया का काम करता था ।

**अतः परं भविष्णुवीरपुत्रानुरूपं तस्य दोहदं वर्णयति कविः—**

**नृपप्रिया स्थापयितुं पदद्वयीमियेष दिक्कुञ्जरकुम्भभित्तिषु ।**
**चिराय धाराजलपानलम्पटा कृपाणलेखासु मुमोच लोचने ॥७४॥**

**अन्वयः**

नृपप्रिया दिक्कुञ्जरकुम्भभित्तिषु पदद्वयी स्थापयितुम् इयेष । चिराय धाराजलपानलम्पटा कृपाणलेखासु लोचने मुमोच ।

**व्याख्या**

नृपप्रिया राजपत्नी दिक्कुञ्जराणा दिग्दन्तिना कुम्भा एव भित्तय कुड्यानि 'भित्ति स्त्री कुड्यम्' इत्यमर । तासु पदद्वयी चरणयुगल स्थापयितु निक्षेप्तु-मियेषाऽऽचकाङ्क्ष । चिराय चिरकालात् 'चिराय चिररात्राय चिरस्याद्याश्चि-रार्थका' इत्यमर । धाराया प्रवाहस्य जल पयस्तस्य पाने लम्पटा लालसा-युक्ता सा नृपपत्नी कृपाणाना करवालाना रेखा धारा तासु करवालधारासु लोचने नयने मुमोच प्रहितवती । अत्र खड्गधाराया जलधारात्वारोप ।

**भाषा**

रानी, दिग्गजो के गण्डस्थलरूपी दीवारो पर अपने दोनो पैर रखने की इच्छा करने लगी । चिरकाल से धार का जल पीने की लालसा रखने वाली रानी तलवारो की धारो पर अपनी आँखे डालने लगी । अर्थात् गर्भस्थित बालक मे वीर रस प्रधान रहने से रानी को वीर रस का दोहद होने लगा ।

**मुहुः प्रकोपादुपरि स्थितासु सा चकार तारास्वपि पाटले दृशौ ।**
**गुरुस्मया कारयितुं दिगङ्गनाः पदाब्जसंवाहनमाजुहाव च ॥७५॥**

**अन्वयः**

गुरुस्मया सा प्रकोपात् उपरिस्थितासु तारकासु अपि मुहुः पाटले दृशौ चकार । पदाब्जसंवाहन कारयितुम् दिगङ्गनाः आजुहाव च ।

### व्याख्या

गुरुर्महान् स्मयो मदो यस्या सा 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेक स्मयो मद' इत्यमर । प्रकोपात् क्रोधादुपर्याकाशे स्थितासु विद्यमानासु तारास्वपि तारकास्वपि 'नक्षत्रमृक्ष भ तारा तारकाप्युडु वा स्त्रियाम्' इत्यमर । मुहुर्वारवार पाटले क्रोधारुणे दृशौ नयने चकार कृतवती । किं तारा स्त्रियो मत्त-श्रेष्ठा । कथ तर्हि ता मदुपरि तिष्ठन्तीति क्रोधस्य कारणम् । दिशा काष्ठानामङ्गना देव्यस्ता पद पादोऽब्जमिव कमलमिव तस्य सवाहन समर्दन स्वचरणारविन्दसमर्दन कारयितुमाजुहावाऽऽमन्त्रितवती च । चित्तोद्रेकेण दिगङ्गना-स्वचरणसवाहनयोग्या निर्धारिता इति भाव ।

### भाषा

अत्यधिक मद से भरी रानी, ऊपर रहने वाली ताराओ की ओर क्रोध से लाल आँखे कर बार बार ताकने लगी और दिगङ्गनाओ को अपने पदकमलो को दबाने के लिए बुलाने लगी। अर्थात् गर्भ स्थित प्रतापी बालक जनित मद से तारारूपी स्त्रियाँ मेरे ऊपर कैसे गई इससे क्रोध हुआ और दिगङ्गनाएँ मेरे पैर दबाने योग्य है, ऐसा अभिमान हुआ ।

**उदञ्चितभ्रूर्मुखराणि संततं विलोकयामास विभूषणान्यपि ।**
**अजायत स्तब्धशिरःसु तेजसा गृहप्रदीपेष्वपि बद्धमत्सरा ॥७६॥**

### अन्वयः

उदञ्चितभ्रूः (सा) मुखराणि विभूषणानि अपि सततं विलोकयामास । तेजसा स्तब्धशिरःसु गृहप्रदीपेषु अपि बद्धमत्सरा अजायत ।

### व्याख्या

उदञ्चिते समुन्नते भ्रुवौ दृग्भ्यामूर्ध्वभागौ यस्या सा राज्ञी क्रोधभावयुक्तेत्यर्थ । मुखराणि शब्दायमानानि विभूषणान्याभूषणान्यपि सततमनारत 'सततेऽनारताश्रान्त सतताविरतानिशम्' इत्यमर । विलोकयामास ददर्श । क्रोधे भ्रुवौ समुन्नते भवत इति क्रोधेन वाचालता प्राप्तान्याभूषणान्यवलोकितवती । महान्तो वाचालत्व नैव सहन्त इति भाव । तेजसा तेज पुञ्जेन स्तब्धानि निश्चलानि शिरासि ज्योतिषि येषा तेषु गृहप्रदीपेषु गृहस्थदीपेष्वपि बद्धमत्सरा कृतवैराऽजायताऽभूत् । मयि विद्यमानाया कस्तेजसाऽविनीतस्सन् ज्वलतीत्याशयेन

मात्सर्यं वहति स्मेति भाव । उक्तञ्च 'प्रकृति खलु सा महीयसा सहते नान्यसमुन्नति ययेति' ।

### भाषा

रानी क्रोध से अपनी भौएँ उठा कर शब्द करने वाले आभूषणो को भी देखती थी और तेज से अपनी जोत रूपी मस्तक को ऊपर स्थिर रखने वाले घर के दीपो से भी ईर्ष्या करती थी। अर्थात् मेरे सामने इन भूषणो की बोलने की हिम्मत कैसी और इन तेजस्वी दीयो को बिना सिर झुकाए मेरे सामने ठहरने की हिम्मत कैसी—ऐसी वीर रस की, दोहदजनित भावनाएँ उस रानी के मन मे होती थी।

**इति स्फुरच्चारुविचित्रदोहदा निवेदयन्ती सुतमोजसां निधिम् ।**
**प्रतिक्षणं सा हरिणायतेक्षणा दृशोः सुधावर्तिरभून्महीभुजः ॥७७॥**

### अन्वयः

इति स्फुरच्चारुविचित्रदोहदा सुतम् ओजसां निधिं निवेदयन्ती हरिणायतेक्षणा सा प्रतिक्षणं महीभुजः दृशोः सुधावर्तिः अभूत् ।

### व्याख्या

इतीत्थ पूर्वोक्तरीत्या स्फुरत्प्रकाशितञ्चारुशोभन विचित्रमसाधारणचमत्कारि दोहद गर्भिणीच्छा 'दोहद गर्भिणीच्छायामिच्छामात्रेऽपि दोहदम्' यस्या सा सुत पुत्रमोजसा बलाना 'ओजो दीप्तौ बले' इत्यमर । निधिं निधान निवेदयन्ती विज्ञापयन्ती हरिण इव मृग इवाऽऽयते विस्तीर्णे ईक्षणे नेत्रे यस्या सा मृगायतनेत्रा राज्ञी प्रतिक्षण क्षणे क्षणे महीभुजो नृपस्य दृशोर्नयनयो सुधावर्ति सुखसमर्पका पीयूषशलाकाऽभूत् । राज्ञी पीयूषशलाकावन्नृपस्य नेत्रयोरानन्दसमर्पकाऽभूदिति भाव । अत्र रूपकालङ्कार ।

### भाषा

उपर्युक्त प्रकार से मनोहर और आश्चर्यजनक दोहदो से युक्त, (अतएव) अपने पुत्र को बल का निधान सिद्ध करती हुई, मृग के समान बडे बडे नेत्र वाली रानी, आँखो की अमृताञ्जन की शलाका के ऐसा राजा को, प्रतिक्षण आनन्द देती थी। अर्थात् ऐसी अपनी रानी को देख कर राजा को प्रतिक्षण आनन्द होता था।

कृतेषु सर्वेष्वथ शास्त्रवर्त्मना यथाक्रमं पुंसवनादिकर्मसु ।
विशेषचिह्नैर्निजमीशितुः क्षितेर्वधूः समासन्नफलं न्यवेदयत् ॥७८॥

**अन्वयः**

अथ क्षितेः ईशितुः वधूः यथाक्रमं सर्वेषु पुंसवनादिकर्मसु शास्त्रवर्त्मना कृतेषु (सत्सु) विशेषचिह्नैः निज समासन्नफलं न्यवेदयत् ।

**व्याख्या**

अथाऽनन्तर क्षिते पृथ्व्या ईशितुरीश्वरस्य राज्ञो वधू स्त्री क्रममनतिक्रम्य वर्तत इति यथाक्रम क्रमानुसारेण सर्वेषु समग्रेषु पुसवनमादिर्येषा तानि कर्माणि सस्कारास्तेषु, पुसवनसीमन्तोन्नयने द्वावेव सस्कारौ गर्भाधानसस्कारानन्तरमिति बहुवचनमत्राऽनपेक्षितम् । परन्तु तान्त्रिकविधिना तृतीयोऽपि सस्कारो भवति । शास्त्रवर्त्मना धर्मशास्त्रप्रतिपादितमार्गेण कृतेषु सम्पादितेषु सत्सु विशेषचिन्हैर्विशिष्टलक्षणैर्निज स्वीय समासन्न निकटवर्ति च तत् फल पुत्रोत्पत्तिरूप न्यवेदयत् सूचितवती ।

**भाषा**

इसके अनन्तर पृथ्वी के स्वामी की स्त्री रानी ने धर्मशास्त्र के अनुसार क्रम से पुसवन सीमन्तोन्नयन प्रभृति सस्कारो के सम्पादित होने पर, विशेष लक्षणो से, शीघ्र होने वाले अपने पुत्र रूप फल की सूचना दी ।

त्रिलोकलक्ष्म्येव सलीलमीक्षितः कृतद्रवैश्चन्द्रकरैरिवाप्लुतः ।
अदूरवाच्छालतिकाफलोदयः क्वचिन्न माति स्म मुदा नरेश्वरः ॥७९॥

**अन्वयः**

त्रिलोकलक्ष्म्या सलीलम् ईक्षितः इव कृतद्रवैः चन्द्रकरैः आप्लुतः इव अदूरवाच्छालतिकाफलोदयः नरेश्वरः मुदा क्वचित् न माति स्म ।

**व्याख्या**

त्रिलोकस्य त्रिभुवनस्य लक्ष्म्या राजश्रिया सलील सविलासमीक्षितो दृष्ट इव, कृतो द्रवो जलरूप येषा ते कृतद्रवास्तैर्द्रवीभूतैश्चन्द्रकरैश्शशिकिरणैराप्लुतोऽभिषिक्त इवाऽदूरे समीपस्थ एव वाच्छालतिकाया इच्छालताया फलस्य पुत्ररूप-

स्योदय प्रादुर्भावो यस्य स नरेश्वरो राजा मुदाऽऽनन्दप्रवाहेण क्वचिन्न माति स्म हर्षस्येयत्ता न प्राप्नोति स्म । राजनि तस्मिन् हर्षातिरेको जात इति भाव । अत्रोत्प्रेक्षारूपकयो ससृष्टि ।

### भाषा

त्रिभुवन की राज्यश्री से सप्रेम अवलोकित होने के समान तथा चन्द्रकिरणो को जलरूप मे परिवर्तित कर उस जल से स्नान किये हुए के समान, शीघ्र ही जिसकी इच्छा लता मे पुत्र रूप फल का उद्गम होने वाला है, ऐसा वह राजा हर्ष से फूले नही समाता था ।

**अथ युग्मेन नृपवल्लभायाः सूतिकागृहप्रवेशं वर्णयति कविः—**

**भिषग्भिरापादितसर्वभेषजं वितीर्णरक्षाविधिमण्डलाक्षतम् ।**
**विशारदाभिः प्रसवोचिते विधौ निरन्तरं गोत्रवधूभिरञ्चितम् ॥८०॥**
**विवेश सुभ्रूरथ सूतिकागृहं प्रधानदैवज्ञनिवेदिते दिने ।**
**समुल्लसद्भिः शकुनैः सहस्रशः समर्पयन्ती नृपतेर्महोत्सवम् ॥८१॥**

### अन्वयः

अथ सुभ्रूः प्रधानदैवज्ञनिवेदिते दिने भिषग्भिः आपादितसर्वभेषजं वितीर्णरक्षाविधिमण्डलाक्षतं प्रसवोचिते विधौ विशारदाभिः गोत्रवधूभिः निरन्तरम् अञ्चितं सूतिकागृहं समुल्लसद्भिः सहस्रशः शकुनैः नृपतेः महोत्सव समर्पयन्ती विवेश ।

### व्याख्या

अथाऽनन्तर सुष्ठु भ्रुवौ यस्या सा सुभ्रू राजमहिषी प्रधानै श्रेष्ठैर्दैवज्ञैर्मौहूर्तिकै 'सावत्सरो ज्योतिषिको दैवज्ञगणकावपि । स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि' । इत्यमर । निवेदिते कथिते दिने शुभदिवसे भिषग्भिर्वैद्यैरापादितानि सम्पादितानि सर्वाणि समग्राणि भेषजान्यौषधिद्रव्याणि यस्मिन्तत्, वितीर्णानि दत्तानि रक्षाविधये नवजातबालरक्षार्थं मण्डलानि यन्त्रविशेषाण्यक्षता अभिमन्त्रित मन्त्राक्षताश्च यस्मिन्तत्, प्रसवस्य जननकर्मण उचिते सुखप्रसवकारिणि समुचिते विधावनुष्ठाने विशारदाभिस्तत्कार्यकुशलाभि गोत्रवधूभि कुलाङ्गनाभिर्निरन्तरं सततमञ्चित पूजित सुतिकागृहमरिष्ट 'अरिष्ट सूतिकागृहम्' इत्यमर । समुल्ल-

सद्भिः प्रकटीभूतै सहस्रशोऽसख्यै शकुनै शुभचिन्हैर्नृपतेर्नृपस्याऽऽहवमल्लदेवस्य महोत्सव हर्षातिरेक महोत्सेक वा 'उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सव' इत्यमर । समर्पयन्ती जनयन्ती सती विवेश प्रविष्टा ।

### भाषा

इसके बाद प्रधान ज्योतिषी द्वारा बताए हुए शुभ दिन, वैद्यो द्वारा स्थापित समग्र आवश्यक औषधियो से युक्त, रक्षा के लिये फेंकी हुई मन्त्राक्षतो तथा लिखे हुए मण्डलो या यन्त्रो से शोभित, चतुर कुलाङ्गनाओ द्वारा सुखप्रसव के योग्य विधि विधान पूर्वक पूजित, प्रसूति घर मे, होने वाले हजारो शुभ शकुनो से राजा को परम आनन्द देती हुई, सुन्दर भौओ वाली रानी ने प्रवेश किया ।

**अथ कलापकेन पुत्रोत्पत्ति वर्णयति कविः—**

**ततः प्रदीपेष्वपि तत्र विस्फुरत्प्रभाधरेष्वर्तिवशाज्जपत्स्विव ।**
**विलासहंसीमपि बालकान्वितां परिच्छदे प्रष्टुमुपायमुत्सुके ॥८२॥**

### अन्वयः

ततः तत्र विस्फुरत्प्रभाधरेषु प्रदीपेषु अपि अर्तिवशात् जपत्सु इव परिच्छदे बालकान्वितां विलासहंसीम् अपि उपायं प्रष्टुं समुत्सुके सति (नृपतेर्नन्दनोऽजायतेति पञ्चाशीतिश्लोकेन सम्बन्धः ।)

### व्याख्या

तत सूतिकागृहप्रवेशानन्तर तत्र सूतिकागृहे धरन्तीति धरा विस्फुरन्त्या देदीप्यमानाया प्रभाया कान्तेर्धरास्तेषु देदीप्यमानकान्तिधरेषु प्रदीपेषु गृहदीपेष्वप्यर्तिवशात् पीडाकारणात् जपत्स्विव नृपकान्ताया प्रसववेदनोन्मूलनाय मन्त्रजप कुर्वत्सु सत्स्विव, जपकर्तृपक्षे विस्फुरन्तीतस्तत प्रसरन्ती प्रभा यस्य स विस्फुरत्प्रभोऽधरो येषा ते तेषु जपत्सु मन्त्रजप कुर्वत्सु, परिच्छदे परिजने दास्यादिके बालकैरन्विता युक्ता नवजातबालयुक्ता विलासहसीमपि क्रीडाहसीमप्युपाय प्रसववेदनानिवारणपूर्वकपुत्रोत्पत्त्युपाय प्रष्टु समुत्सुके समुत्कण्ठिते सति नृपतेर्नन्दनोऽजायतेत्यनेनाऽन्वय । अत्र जपत्स्विवेत्यत्रोत्प्रेक्षालङ्कार । उत्तरार्धेऽतिशयोक्तिश्च ।

**भाषा**

प्रसूति घरमे जाने के बाद वहाँ रानी की प्रसव वेदना को कम करने के ध्येय से मन्त्रजप करने मे ओठ के हिलने से उसकी फैलने वाली कान्ति से युक्त जप करने वालो के ऐसे तेज जलने वाले दीयो के भी मानो जप करते रहने पर, दासियो के, नवजात बच्चे वाली पालतू हंसिनी को भी प्रसव वेदना कम होकर पुत्र उत्पन्न होने का उपाय पूछने के लिए, उत्कण्ठित होने पर (राजा को पुत्र हुआ यह ८५ श्लोक के वाक्य से सम्बद्ध है ।)

**निखातरक्षौषधिगेहदेहली–समीपसज्जीकृतशस्त्रपाणिषु ।**
**इतस्ततस्त्राटनमक्षतोत्करैर्विधाय हुंकारिषु मन्त्रवादिषु ॥८३॥**

**अन्वयः**

निखातरक्षौषधिगेहदेहलीसमीपसज्जीकृतशस्त्रपाणिषु मन्त्रवादिषु अक्षतोत्करैः इतः ततः त्राटनं विधाय हुंकारिषु (सत्सु) (नृपतेर्नन्दनोऽजायतेत्यनेनाऽन्वयः ।)

**व्याख्या**

निखाता गर्तं विधाय तत्र निक्षिप्ता रक्षाया बालरक्षाया औषधयो भेषजानि यस्या सा चासौ गेहदेहली सुतिकागृहावग्रहणी 'गृहावग्रहणी देहली' इत्यमर । तस्यास्समीपे सज्जीकृता स्थापिता शस्त्र पाणौ येषा ते सशस्त्रमनुष्या यैस्तेषु मन्त्रवादिषु मन्त्रपाठकेष्वक्षतोत्करैरभिमन्त्रिताक्षतसमूहैरितस्ततस्त्राटन रक्षाविधिविशेष "मन्त्राक्षतान्परितो विक्षिप्य तान्त्रिकैर्बालरक्षार्थं क्रियमाणोऽनर्थनिवारणविधिविशेषस्त्राटनम्" विधाय सम्पाद्य हुंकारिषु हुँकारशब्द कुर्वत्सु सत्सु । (नृपतेर्नन्दनोऽजायतेति सम्बन्ध )

**भाषा**

गड्ढा खोदकर जहाँ प्रसूतिरक्षा की औषधियाँ गाडी हुई थी ऐसी प्रसूतिघर की देवढी के पास सशस्त्र मनुष्यो को बैठाने वाले मान्त्रिको के इधर उधर मन्त्राक्षतो को फेककर त्राटनविधि करके हुँकार शब्द करते रहने पर (राजा को पुत्र हुआ ।)

**गृहोदरस्थे जरतीपरिग्रहे किमप्युपांशु स्वमतोपदेशिनि ।**
**वितीर्णकर्णासु निवासपञ्जरादनल्पशोकासु शुकाङ्गनास्वपि ॥८४॥**

### अन्वयः

गृहोदरस्थे जरतीपरिग्रहे उपांशु किमपि स्वमतोपदेशिनि (सति) अनल्पशोकासु शुकाङ्गनासु अपि निवासपञ्जरात् वितीर्णकर्णासु सतीषु (नृपतेर्नन्दनोऽजायतेत्यन्वयः) ।

### व्याख्या

गृहोदरस्थे प्रसूतिगृहमध्यस्थे जरतीपरिग्रहे वृद्धनारीसमूहे उपांशु रह शनै-रित्यर्थं । 'विविक्तविजनच्छन्ननि शलाकास्तथा रह । रहश्चोपांशु' इत्यमरः । किमपि प्रच्छन्नमुपायमालम्ब्य स्वमतस्य स्वाभिप्रायस्योपदेशिनि प्राकाश्यमातन्वति सति । अनल्प शोको यासा तासु बहुशोकासु कीराङ्गनास्वपि शुकस्त्रीष्वपि निवासपञ्जरात् स्वनिवासस्थानभूतपिञ्जरादेव न तु बहिर्निर्सृत्य तस्योपाया-भावात् । वितीर्णो दत्त कर्ण श्रवण याभिस्तासु किम्भवतीति सोत्कण्ठजिज्ञा-साया सर्वमाकर्णयन्तीषु सतीषु । (नृपतेर्नन्दनोऽजायतेति सम्बन्ध ।) अत्रा-तिशयोक्त्यलङ्कार ।

### भाषा

प्रसूतिघर मे बुड्ढी स्त्रियो के धीरे धीरे अपने विचार के अनुसार कुछ उपाय बताते रहने पर, अत्यधिक दु खी, पिंजरे मे की सुग्गियो के भी कान देकर सब सुनते रहने पर । (राजा को पुत्र हुआ ।)

**अलभ्यत प्राक्तनचक्रवर्तिना न जन्म यत्राद्भुतधाम्नि केनचित् ।**
**तथाविधं लग्नमवाप्य नन्दनः शिवप्रसादान्नृपतेरजायत ॥८५॥**

### अन्वयः

अद्भुतधाम्नि यत्र प्राक्तनचक्रवर्तिना केनचित् अपि जन्म न अलभ्यत तथाविधं लग्नम् अवाप्य शिवप्रसादात् नृपतेः नन्दनः अजायत ।

### व्याख्या

अद्भुतस्याऽऽश्चर्यस्य धाम स्थान तस्मिन्नाश्चर्यसमुत्पादकवस्तूना यस्मिन् समुद्भवो भवति तादृशे यत्र लग्ने प्राक्तन पूर्वजातश्चासौ चक्रवर्ति सार्वभौमश्च तेन केनचिदपि राज्ञा जन्म जनु 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमर । नाऽलभ्यत न लेभे तथाविध लग्न सुमुहूर्तमवाप्य सप्राप्य शिवप्रसादाच्छङ्करकृपा-कटाक्षान्नृपतेर्नृपमाहवमल्लदेव 'कर्मणि षष्ठी' पुत्र सूनुरजायत समुत्पन्न ।

### भाषा

जैसे अद्भुतगुणयुक्त शुभलग्न मे पूर्ववर्ति किसी भी सार्वभौम राजा ने जन्म नही पाया था ऐसे शुभ लग्न मे भगवान् शकर की कृपा से राजा को पुत्र हुआ ।

**चतुर्भिः पताका-कलापकमित्यर्थः ।**

**सुरप्रसूनान्यपतन्सषटपद-ध्वनीनि दध्वान सुरेन्द्रदुन्दुभिः ।**
**परं प्रसादं ककुभः प्रपेदिरे गुणैः कुमारस्य सहोत्थितैरिव ॥८६॥**

### अन्वयः

सषट्पदध्वनीनि सूरप्रसृनानि अपतन् । सुरेन्द्रदुन्दुभिः दध्वान । कुमारस्य सहोत्थितैः गुणैः ककुभः पर प्रसाद प्रपेदिरे इव ।

### व्याख्या

षट्पदाना भ्रमराणा 'षट्पदभ्रमरालय' इत्यमर । ध्वनिना शब्देन सहितानि सषट्पदध्वनीनि सुरप्रसूनानि देवकुसुमानि 'प्रसून कुसुम सुमम्' इत्यमर । आकाशादपतन् पुष्पवृष्टिबभूवेत्यर्थ । सुरेन्द्रस्य पाकशासनस्य दुन्दुभि दुदुमिति शब्देन भातीति दुन्दुभि भरो 'भेरी स्त्री दुन्दुभि पुमान्' इत्यमर । दध्वान शब्द चकार । कुमारस्य नवजातशिशो सहोत्थितैर्जन्मना साक समुत्पन्नैर्गुणैर्दयादाक्षिण्यादिमहापुरुषगुणै ककुभ दिश 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । प्रसाद प्रसन्नता निर्मलत्व वा प्रपेदिरे इव प्राप्ता इव । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

आकाश से भौरो की गुजार से युक्त नन्दन वन के फूलो की वृष्टि होने लगी । देवो के राजा इन्द्र का नगाडा बजने लगा । कुमार के साथ उत्पन्न उसके उज्वलगुणो से मानो सब दिशाएँ प्रसन्न अर्थात् उज्वल हो गई ।

**नवप्रतापाङ्कुरचक्रकान्तया निरन्तरारात्रिकदीपसम्पदा ।**
**श्रियं जगल्लोचनबालचन्द्रमाः समाजहारोदयसन्ध्ययेव सः ॥८७॥**

### अन्वयः

जगल्लोचनबालचन्द्रमाः सः नवप्रतापाङ्कुरचक्रकान्तया निरन्तरारात्रिकदीपसम्पदा उदयसन्ध्यया इव श्रिय समाजहार ।

### व्याख्या

जगता भुवनाना भुवनगतमनुष्याणा लोचनानि नयनानि तेषा कृते सुखदायकत्वाद्बालचन्द्रमा बालशशी स नवजातशिशुर्नवस्य नूतनस्य प्रतापस्य तेजसोऽङ्कुराणा किरणाना चक्र वर्तुलाकार मण्डल तद्वत्कान्तया रमणीयया निरन्तरमविच्छिन्न पङ्क्त्याकारमाऽऽरात्रिक बालस्य पुरस्तात् प्रज्वलित दीप भ्रामण तस्य दीपसम्पदा दीपसम्पत्त्या, उदयसन्ध्ययेव साय सन्ध्ययेव श्रिय शोभा समाजहार स्वीचकार । अर्थात् द्वितीयाचन्द्र सन्ध्याकाले लोकैरारार्तिक्येन पूज्यते तद्वदय बाल आरार्तिक्येन शोभितोऽभूदिति भाव । अत्रोपमारूपकयो सकर ।

### भाषा

जगत् भर के मनुष्यो की आँखो को आनन्द देने वाला बालचन्द्र स्वरूप वह बालक, नूतन तेज की किरणो के चक्र के समान रमणीय सतत आरती के दीपक की ज्योति से साय काल की बालचन्द्र की शोभा को उत्पन्न कर रहा था । प्राय सभी लोग दूज के चाद की साय काल मे आरती कर पूजा करते है । वैसे ही यह भी आरती से शोभित हुआ ।

**आसन्नरत्नगृहभित्तिषु निर्मलासु लोकोत्तरेण वपुषा प्रतिबिम्बितेन।**
**सेवां स्मरिष्यति कृतज्ञतयेव दिग्भिरङ्के गृहीत इव राजसुतो रराज ।।८८।।**

### अन्वयः

राजसुतः निर्मलासु आसन्नरत्नगृहभित्तिषु प्रतिबिम्बितेन लोकोत्तरेण वपुषा (अयं) कृतज्ञतया सेवा स्मरिष्यति (इति) दिग्भिः अङ्के गृहीतः इव रराज ।

### व्याख्या

राज्ञ सुतो राजपुत्रो निर्मलासु निर्मलकान्तिष्वाऽऽसन्ना समीपस्थाश्च रत्नगृहभित्तयो रत्नखचितगेहकुड्यानि तासु प्रतिबिम्बितेन प्रतिच्छाया गतेन लोकोत्तरेणाऽलौकिकेन वपुषा शरीरेण 'गात्र वपु सहनन शरीर वर्ष्म विग्रह' इत्यमर । हेतुनाऽय कुमार कृतज्ञतया कृतमुपकृत जानाति स्मरतीति कृतज्ञस्तस्य भाव कृतज्ञता तया सेवामस्मत्कृता सेवा स्मरिष्यतीति दिग्भि काष्ठाभिरङ्के उत्सङ्गे गृहीत इव धारित इव रराज शशुभे । अत्रोत्प्रेक्षालङ्कार । वसन्ततिलकाच्छन्द । उक्ता वसन्ततिलका तभजाजगौग ।"

### भाषा

राजकुमार के अलौकिक शरीर की परछाही, पास की रत्नो से जडी घर की साफ दीवारो पर पडने के कारण, मानो दिशाओ से वह राजपुत्र, यह समझ कर कि यह बडा होने पर कृतज्ञता से हमारी सेवाओ को स्मरण करेगा, गोदो मे लिया हुआ शोभित होता था ।

**अकथयदवनीन्दोर्नन्दनोत्पत्तिवार्ता**
**प्रथमममरवृन्दानन्दिनान्दीनिनादः ।**
**तदनु तदनुरूपोत्साहतः सुन्दरीणां**
**त्वरितगमनलीलागद्गदो वाग्विलासः ॥८९॥**

### अन्वयः

**अमरवृन्दानन्दिनान्दीनिनादः प्रथमम् अवनीन्दोः नन्दनोत्पत्तिवार्ताम् अकथयत् । तदनु तदनुरूपोत्साहतः सुन्दरीणा त्वरितगमनलीलागद्गदः वाग्विलासः (अकथयत्) ।**

### व्याख्या

**अमरवृन्दाना देवसमूहानामानन्दी सुखप्रदो नान्दीनिनादो मङ्गलध्वनि प्रथम पूर्वमवनीन्दोराहवमल्लदेवनृप (कर्मणि षष्ठी) नन्दनस्य पुत्रस्योत्पत्तेर्जन्मनो वार्ता वृत्तान्त 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्त' इत्यमर । अकथयदसूचयत् । तदनु तत्पश्चात् तस्य पुत्रजन्मनोऽनुरूपो योग्यो य उत्साहो हर्षातिरेकस्तस्मात् 'पञ्चम्यास्तसिल्' । सुन्दरीणामन्त पुरललनाना त्वरित शीघ्रञ्च तद् गमन तस्य लीलया विलासेन गद्गदोऽविस्पष्ट कम्पमानश्च वाग्विलास कलकलशब्द. पुत्रोत्पत्तिवृत्तान्त राज्ञेऽकथयत् न्यवेदयत् । अत्राऽक्रमातिशयोक्त्यलङ्कार । मालिनीच्छन्द. । "जनमयययुतेय मालिनी भोगिलोकै" ।**

### भाषा

देवताओ की आनन्द देने वाली मङ्गलध्वनि के होरे ने राजा को पहिले पहिले पुत्र उत्पन्न होने की सूचना दी । इसके बाद पुत्रोत्पत्ति के अनुरूप हर्ष से अन्त पुर की ललनाओ के शीघ्रता से इधर उधर चलते २ गद्गद होकर बोले हुए कलकल शब्दो ने राजा को पुत्रोत्पत्ति से सूचित किया ।

चञ्चच्चारणदीयमानकनकं संनद्धगीतध्वनि
स्फूर्जद्गाथकलुण्ठ्यमानकरटि प्रारब्धनृत्तोत्सवम् ।
पूर्णं मङ्गलतूर्यदुन्दुभिरवैरुत्तालवैतालिक-
श्लाघालङ्घितपूर्वपार्थिवमथ क्ष्माभर्तुरासीद्गृहम् ॥९०॥

अन्वय

अथ क्ष्माभर्तुः गृहं चञ्चच्चारणदीयमानकनकं संनद्धगीतध्वनि स्फूर्जद्गाथकलुण्ठ्यमानकरटि प्रारब्धनृत्तोत्सवं मङ्गलतूर्यदुन्दुभिरवैः पूर्णम् उत्तालवैतालिकश्लाघालङ्घितपूर्वपार्थिवम् आसीत् ।

व्याख्या

अथ पुत्रोत्पत्तिवार्ताप्रसरानन्तर क्ष्माभर्तु पृथ्वीपतेराहवमल्लदेवस्य गृह प्रासादश्चञ्चद्भ्यो हर्षेण चञ्चलचित्तेभ्यश्चारणेभ्य कुशीलवेभ्यो 'चारणास्तु कुशीलवा' इत्यमर । दीयमान वितीर्यमाण कनक सुवर्णं यस्मिन्तत्, सनद्धो जायमानो गीताना स्त्रीकर्तृकगायनाना 'सोहर इति लोके प्रसिद्धम्' ध्वनि शब्दो यत्र तत्, स्फूर्जन्तो हर्षेण विलसन्तो गाथका गायकास्तैर्लुण्ठ्यमाना हठाद्गृह्यमाणा करटिनो हस्तिनो यत्र तत्, प्रारब्ध समारब्धो नृत्तोत्सवो नृत्यसमारम्भो यत्र तत्, मङ्गल मङ्गलरूपस्तूर्यदुन्दुभिरवो वाद्यविशेषशब्दस्तै पूर्णं परिपूर्णम्, उत्ताला अत्युच्चैः शब्दायमाना वैतालिका स्तुतिपाठकास्तै श्लाघया प्रशसया लङ्घिता अतिक्रान्ता अधरीकृता इत्यर्थ । पूर्वपार्थिवा पूर्ववर्तिनृपा यस्मिन्तदाऽऽसीत् । तादृश गृहमासीदिति भाव । शार्दूलविक्रीडितच्छन्द । सूर्याश्वैर्मसजस्तता सगुरव शार्दूलविक्रीडितम् ।

भाषा

पुत्र होने की खबर फैलने के बाद राजा के महल मे अत्यन्त प्रसन्न नटो को इनाम मे सोना दिया जाने लगा, सोहर का गान प्रारम्भ हो गया, हर्ष से मस्त गवैये हाथियो को जबर्दस्ती इनाम मे लेने लगे, नाच आरम्भ हो गया, मङ्गलमय तुरही और दुन्दुभी का नाद छा गया और बडे ऊँचे शब्दो मे स्तुति-पाठक लोग पूर्ववर्ती राजाओ से तुलना करते हुवे, इस राजा का वर्णन अधिक बढाकर करने लगे ।

अथ समुचिते कर्मण्यास्थापरेण पुरोधसा
कथितमवनीनाथः सर्वं विधाय विधानवित् ।
प्रति मुहुरसौ सूनुस्पर्शान्महोत्सवमन्वभू-
दिह हि गृहिणां गार्हस्थ्यस्य प्रधानमिदं फलम् ॥९१॥

**अन्वयः**

अथ विधानवित् असौ अवनीनाथः समुचिते कर्मणि आस्थापरेण पुरोधसा कथित सर्व विधाय प्रति सूनुस्पर्शात् मुहुः महोत्सवम् अन्वभूत् । हि इह गृहिणा गार्हस्थस्य इदं प्रधानं फलम् ।

**व्याख्या**

अथ पुत्रजन्मानन्तर विधान शास्त्रविधि वेत्ति जानातीति विधानविच्छास्त्र-विधिज्ञोऽसौ प्रसिद्धोऽवनीनाथ पृथिवीपति समुचिते पुत्रजन्मसमयोचिते कर्मणि धार्मिककृत्ये आस्था दृढभक्ति पर प्रधान यस्य स तेन धार्मिककार्येषु दृढभक्ति-परायणेन पुरोधसा पुरोहितेन 'पुरोधास्तु पुरोहित' इत्यमर । कथित सूचित सर्व समग्र धर्मकृत्य जातकर्मादिक विधाय सम्पाद्य प्रतिसूनुस्पर्शात् प्रत्येक पुत्र-स्पर्शावसरान्मुहु पुन पुन 'मुहु पुन पुन शश्वदभीक्ष्णम्' इत्यमर । महोत्सव महदानन्दमन्वभूदनुभवविषयमकुर्वत । हि यस्मात्कारणादिहाऽस्मिन् ससारे गृहिणा गृहस्थाश्रमवासिना जनाना गार्हस्थस्य गृहस्थधर्मस्येद पुत्रमुखदर्शन-रूपमेव प्रधानं मुख्य फलम् । अत्राऽर्थान्तरन्यासालङ्कार । हरिणीच्छन्द । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।"

**भाषा**

पुत्र जन्म होने के अनन्तर शास्त्रीय विधियो को जाननेवाले उस राजा ने श्रद्धालु कुलपुरोहित द्वारा कथित पुत्र जन्म के लिये उचित सब जातकर्म आदि धर्म कृत्यो को विधिवत् कर पुत्रदेह के प्रत्येक स्पर्श के अवसर से बार २ परम आनन्द का अनुभव किया । क्योकि इस ससार मे गृहस्थाश्रम मे रहने वालो के लिये गार्हस्थ धर्म का पुत्र प्राप्ति ही मुख्य फल है ।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेव-चरिते महाकाव्ये द्वितीय सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाज-बुधोत्तमात्समुदितः श्रीविश्वनाथः सुधीः ।**
**चक्रे रामकुबेरपण्डितवरात्संप्राप्तसाहाय्यक—**
**टीकायुग्ममिदं रमाकरुणया सर्गे द्वितीये शुभे ॥**

ॐ शान्ति शान्ति शान्ति ।

॥ श्री ॥

## महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

---

## तृतीयः सर्गः

**अथ नवजातराजकुमारं वर्णयति कविः—**

**स विक्रमेणाद्भुततेजसा च चेष्टाविशेषानुमितेन बालः ।**
**श्रीविक्रमादित्य इति क्षितीन्दोरवाप विख्यातगुणः समाख्याम् ॥१॥**

### अन्वयः

स विख्यातगुणः बालः चेष्टाविशेषानुमितेन विक्रमेण अद्भुततेजसा च क्षितीन्दोः श्रीविक्रमादित्यः इति समाख्याम् अवाप ।

### व्याख्या

स प्रसिद्धो विख्यातगुण प्रसिद्धगुणो बालो बालकश्चेष्टाविशेषेणाऽऽकारेङ्गितादिव्यवहारेणाऽनुमितो विज्ञातस्तेन विक्रमेण शौर्येणाऽद्भुततेजसाऽऽश्चर्यचुम्बि प्रतापेन च क्षिते पृथिव्या इन्दुश्चन्द्र (प्रजाल्हादकत्वात्) तस्मादाहवमल्लदेवनृपात् श्रीविक्रमादित्य इति विक्रमेण पराक्रमेण तेजसा चाऽऽदित्यस्वरूप इति समामन्वर्थमाख्या नाम 'आख्याव्हे अभिधानञ्च नामधेयञ्च नाम च' इत्यमर । अवाप प्राप ।

### भाषा

प्रसिद्ध गुणो से युक्त उस बालक ने अपने विशेष लक्षणो से अनुमित आश्चर्य कारक तेज तथा भावि विक्रम का परिचय देकर पृथ्वी के चन्द्र स्वरूप राजा आहवमल्लदेव से विक्रम मे और तेज मे सूर्य की समानता का सूचक श्री विक्रमादित्य यह अन्वर्थक नाम पाया ।

देवस्य चालूक्यविभूषणस्य भार्या यशोरञ्जितदिङ्मुखेन ।
तेनावदातद्युतिना रराज साम्राज्यलक्ष्मीरिव विक्रमेण ॥२॥

**अन्वयः**

चालुक्यविभूषणस्य देवस्य भार्या यशोरञ्जितदिङ्मुखेन अवदातद्युतिना तेन साम्राज्यलक्ष्मीः विक्रमेण इव रराज ।

**व्याख्या**

चालुक्यस्य चालुक्यवशस्य विभूषणमलङ्कारस्पस्तस्य देवस्य राज्ञ आहवमल्लदेवस्य भार्या जाया 'भार्या जायाऽथ पु भूम्नि दारा स्यात्तु कुटुम्बिनी' इत्यमर । यशसा कीर्त्या रञ्जितानि प्रसादितानि दिशामाशाना मुखान्यग्रभागा येन स तेनाऽवदाता सिता द्युतिः कान्तिर्यस्य तेन धवलकान्तिना 'अवदात सितो गौरो वलक्षो धवलोऽर्जुन '। इत्यमर । तेन राजकुमारेण विक्रमेण साम्राज्यस्य सार्वभौमत्वस्य लक्ष्मी श्रीर्विक्रमेण शौर्येणेव रराज शोभिताऽभूत् । अत्रोपमालङ्कार ।

**भाषा**

जिस प्रकार साम्राज्य की लक्ष्मी (विक्रम) पराक्रम से शोभित होती है उसी प्रकार चालुक्यवश के भूषण राजा आहवमल्लदेव की रानी सब दिशाओ के अग्र भागो को अपने यश से उज्वल करने वाले गौर वर्ण अपने पुत्र विक्रम से शोभित हुई ।

**अथ बाललीलां वर्णयति कविः—**

आलम्ब्य हारं करपल्लवेन पयोधरं पातुमसौ प्रवृत्तः ।
भोगेष्वबाह्या गुणिनो ममेति स्वभावमात्मीयमिवाभ्यधत्त ॥३॥

**अन्वयः**

असौ हारं करपल्लवेन आलम्ब्य पयोधर पातुं प्रवृत्तः ( सन् ) मम भोगेषु गुणिनः अबाह्याः इति आत्मीय स्वभावम् अभ्यधत्त इव ।

**व्याख्या**

असौ बालो स्वमातुर्हार मुक्ताहार करपल्लवेन हस्तपल्लवेनाऽऽलम्ब्य विधृत्य पयोधर स्तन पातु स्तनगतदुग्धपान कर्तुं प्रवृत्तो लग्नस्सन् मम भोगेषु भोग्य-

वस्तुषु गुणिनो गुणवन्त पुरुषा हारादय श्लिष्टगुणपदार्थसूत्रसग्रथिता अतस्तेऽपि गुणिनोऽबाह्या अन्तरङ्गा मया सह गुणवन्तोऽपि भोग्यवस्तुषु सुखमनुभवन्त्वित्यात्मीयं स्वभाव स्वकीया प्रकृतिमभ्यधत्तेव कथितवानिव । नाऽह स्वोपभोग्यवस्तुषु गुणिनो विहायोपभोगे प्रवृत्तो भविष्यामीति सूचयन्निव गुणिन मुक्ताहार करेण धृत्वा स्तनपानरूपोपभोगे प्रवृत्त इति भाव । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

यह बालक अपनी माता के मोती के हार को अर्थात् गुणी को अपने कोमल-पत्ते के ऐसे सुकुमार हाथ से पकड कर स्तनपान करता हुआ मानो अपने स्वभाव को प्रकट करता था कि उसके उपभोगो मे गुणीलोग कभी भी छूट नही सकते अर्थात् वह गुणियो को अपने उपभोगो मे सदैव साथ रक्खेगा । (गुण शब्द का अर्थ डोरा होने से डोरे मे परोया मोती का हार भी गुणी कहा जा सकता है ।)

**मातृस्तनोत्सङ्ग-विलासहार-प्रभा प्रविश्येव विनिःसरन्ती ।**
**तस्यानिमित्तस्मितचन्द्रिकाभू-न्नरेन्द्रनेत्रोत्सववैजयन्ती ॥४॥**

### अन्वयः

तस्य मातृस्तनोत्सङ्गविलासहारप्रभा प्रविश्य विनिःसरन्ती इव अनिमित्तस्मितचन्द्रिका नरेन्द्रनेत्रोत्सववैजयन्ती अभूत् ।

### व्याख्या

तस्य बालकस्य मातु स्तनौ कुचौ मातृस्तनौ तयोरुत्सङ्गे मध्ये विलासहारो विलासार्थं धृतो मुक्ताहारस्तस्य प्रभा कान्तिर्बाल प्रविश्याऽभ्यन्तर गत्वा पुन विनिस्सरन्तीव बहिरागतेव नास्ति निमित्त कारण यस्मिस्तत् स्मितमीषद्धास एव चन्द्रिका ज्योत्स्ना 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमर । चन्द्रप्रकाश इत्यर्थ । नरेन्द्रस्य राज्ञो नेत्रोत्सवस्य नयनानन्दस्य 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी' इत्यमर । वैजयन्ती विज्ञापयित्री पताका तत्स्वरूपाऽभूत् । श्वेतवर्णा मुक्ताहारकान्तिरेव बाल प्रविश्य बालकस्याऽकारणेषद्धासरूपचन्द्रिकारूपेण बहिरागता नृपस्य नयनानन्दकरी बभूवेत्यर्थ । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

उस बालक की माता के कुचो के मध्य मे विलसित मोती के हार की सफेद

कान्ति, मानो उस बालक के भीतर प्रविष्ट होकर उसके स्वाभाविक मुसकान रूप सफेद चन्द्रिका के रूप मे फिर बाहर निकलती हुई राजा के नेत्रो के आनन्दोत्सव को सूचित करने वाली पताका थी। अर्थात् राजा को बालक के अकारण स्वाभाविक स्मित से अत्यन्त हर्ष होता था।

**मुष्टिप्रविष्टारुणरत्नदीप-प्रभालता तस्य समुल्लसन्ती।**
**विपक्षकण्ठक्षतजानुलिप्ता कृपाणलेखा सहजेव रेजे ॥५॥**

### अन्वयः

तस्य मुष्टिप्रविष्टारुणरत्नदीपप्रभालता समुल्लसन्ती सती विपक्षकण्ठ-क्षतजानुलिप्ता सहजा कृपाणलेखा इव रेजे।

### व्याख्या

तस्य बालकस्य मुष्ट्यो प्रविष्टा प्राप्ता याऽरुणा रक्तवर्णा रत्नदीपाना प्रभारूपिणी लता कान्तिवल्ली सा समुल्लसन्ती सुशोभिता सती विपक्षाणा शत्रूणा कण्ठास्तेषा क्षतज रुधिर तेनाऽनुलिप्ताऽनुरञ्जिता सहजा सहैवोत्पन्ना स्वाभाविकी जन्मसिद्धा कृपाणलेखेव खड्गलेखेव रेजे समलङ्कृताऽऽसीत। बालकमुष्टि-प्रविष्टरत्नदीपरक्तवर्णकान्ति शत्रुकण्ठरुधिरानुलिप्तसहजकृपाणलेखेव शुशुभ इति भाव।

### भाषा

उस बालक की मुट्ठी मे प्रवृष्ट रत्नदीप की लाल रग की कान्ति, शत्रुओ के कटे हुए गलो के खून से सनी, जन्म सिद्ध, साथ ही मे उत्पन्न तलवार की धार के ऐसी शोभित होती थी।

**त्यक्त्वोपविष्टान्यदसौ कुमारः समुत्थितानां सविधे जगाम।**
**आगामि तेनाधिकमुन्नतात्मा नीचेषु वैमुख्यमिवाचचक्षे ॥६॥**

### अन्वयः

यत् असौ उन्नतात्मा कुमारः उपविष्टान् त्यक्त्वा समुत्थिताना सविधे जगाम तेन नीचेषु आगामि अधिक वैमुख्यम् आचचक्षे इव।

### व्याख्या

यद्यस्मात्कारणादसौ स उन्नतोऽभ्युदयोन्मुख आत्मा यस्य स कुमारो राजपुत्र उपविष्टान् भूमावासीनान् पुरुषान् त्यक्त्वा विहाय तदुत्सङ्ग परित्यज्येत्यर्थं । समुत्थितानामूर्ध्वस्थाना पुरुषाणा सविधे तदङ्केषु जगाम स्वेच्छया गतवान् तेन कारणेन नीचेषु नीचजनेष्वागामि भविष्यदधिकमनल्प वैमुख्य विरुद्धदिशि गत मुख यस्य स तस्य भावो वैमुख्य नीचप्रतिकूलत्वरुचिमाचचक्ष इव जगादेवाऽसूचयदि-वेत्यर्थ । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

चूँकि यह उन्नत आत्मा वाला बालक बैठे हुए मनुष्यो की गोदो को छोड कर खडे भये हुए मनुष्यो की गोदो मे जाता था इससे मानो उसने प्रकट कर दिया कि वह भविष्य मे नीचे या नीच मनुष्यो से अधिक विमुख रहेगा ।

**धात्रेयिकाया स्मितपूर्वकं य-ददत्त हुङ्कारमसौ कुमारः ।**
**अपूरयत्तेन नृपस्य कर्णौ पेयूषगण्डूषपरम्पराभिः ॥७॥**

### अन्वय.

यत् असौ कुमारः धात्रेयिकायाः स्मितपूर्वक हुङ्कारम् अदत्त तेन पेयूष-गण्डूषपरम्पराभिः नृपस्य कर्णौ अपूरयत् ।

### व्याख्या

यद्यस्मात्कारणादसौ पूर्वोक्त कुमारो राजपुत्रो धात्रेयिकाया उपमातु स्मितपूर्वक सस्मित हुङ्कारशब्द बालस्वाभाविकशब्दमदत्त दत्तवान् तेन कारणेन पेयूषस्याऽमृतस्य गण्डूष मुखपूर्ति 'गण्डूषो मुखपूर्तौ स्याद्गजहस्ताङगु-लावपि । प्रसृत्या प्रमितेऽपिस्यात्' इति हैम । तेषा परम्पराभि सन्ततप्रयो-गैर्नृपस्य राज्ञ कर्णौ श्रोत्रेऽपूरयत् सपूरितवान् । उपमात्रे हुङ्कारदानरूपबाल-लीलया राजाऽऽनन्दपरिपूर्णमानसो बभूवेति भाव । स्वभावोक्तिरलङ्कार. ।

### भाषा

यह बालक अपनी दाई के पुचकारने पर मुस्कुराते हुए हुँकारी भरता था इससे वह राजा के दोनो कानो को अमृत के गण्डूष की परम्परा से भर देता था । अर्थात् उन हुकारियो को सुन कर राजा को परम आनन्द होता था ।

यदुत्थितः सोऽङ्गुलिसंग्रहेण यत्किञ्चिदव्यक्तमवोचतापि ।
अभीक्ष्णमक्ष्णोः श्रवसोश्च तेन क्षमापतेः संवननं बभूव ॥८॥

**अन्वयः**

यत् सः अङ्गुलिसंग्रहेण उत्थितः अपि यत् किञ्चित् अव्यक्तम् अवोचत तेन क्षमापतेः अक्ष्णोः श्रवसोः च अभीक्ष्णं संवननं बभूव ।

**व्याख्या**

यद्यस्मात्कारणात् स बालकोऽन्येषां जनानामङ्गुलिसंग्रहेणाऽङ्गुलिं धृत्वोत्थितः समुत्थानं कृतवान् 'अङ्गुल्यः करशाखास्स्युः' इत्यमरः। अपि चाऽन्यच्च यत्किञ्चिदव्यक्तमस्पष्टमवोचत संजगाद तेन कारणेन क्षमायाः पतिः स्वामी तस्याऽवनिभर्तुः 'क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु।' 'धवः प्रियः पतिर्भर्ता' इत्यमरः। अक्ष्णोर्नयनयोः 'लोचनं नयनं नेत्र मीक्षणं चक्षुरक्षिणी' इत्यमरः। श्रवसोश्च कर्णयोश्च 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्ममरः। अभीक्ष्णं पुनः पुनः 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। संवननं वशीकरणं 'वशक्रिया संवननं' इत्यमरः। अभूत् बभूव। तस्य बालस्योऽङ्गुलिं संगृह्योत्थानं दृष्ट्वा यत्किञ्चिदस्पष्टं संभाषणञ्च श्रुत्वा राजा वशीकरण-मन्त्राभिभूत इव जातः। सर्वं कार्यजातं त्यक्त्वा तदवलोकनश्रवणयोर्मग्न इति भावः।

**भाषा**

चूँकि यह बालक दूसरों की अंगुली पकड़ कर उठने लगा और साफ़ २ समझ में न आने वाले शब्दों को बोलने लगा इससे राजा की आँखों व कानों का बार २ वशीकरण होता था। अर्थात् राजा सब कामों को छोड़ इस बालक की लीला देखने में ही परम मुदित होता था।

क्रमेण सम्पादितचूलकर्मा चालुक्यभूपालधुरन्धरस्य ।
विनोदलीलाकुसुमोच्चयानां स नन्दनो नन्दनतामवाप ॥९॥

**अन्वयः**

क्रमेण सम्पादितचूलकर्मा सः नन्दनः चालुक्यभूपालधुरन्धरस्य विनोदलीलाकुसुमोच्चयानां नन्दनताम् अवाप ।

### व्याख्या

क्रमेण जातकर्मादिसस्कारानन्तरं सम्पादित निष्पादित चूलकर्म चूडाकर्म-सस्कारो यस्य स सम्पादितचूलकर्मा स नन्दयतीति नन्दन सर्वजनानन्ददाता पुत्रश्चालुक्यवशीया ये भूपाला नरेश्वरास्तेषा धुरन्धरस्याऽग्रगण्यस्याऽऽहवमल्ल-देवस्य विनोदलीला मनस आनन्दविहारलीला एव कुसुमानि पुष्पाणि 'स्त्रिय' सुमनस पुष्प प्रसून कुसुम सुमम्' इत्यमर । तेषामुच्चयास्समूहा 'समुदाय-स्समुदय समवायश्चयो गण' इत्यमर । तेषा नन्दनतामिन्द्रस्य नन्दनवनना-मककाननस्वरूपतामवाप प्राप्तवान् । यथा नन्दनवने पुष्पोच्चयानामियत्ता नास्ति तथैवाऽस्य राज्ञो मनसि विनोदलीलानामत्याधिक्य बभूवेति भाव. । पुत्रे नन्दनवनत्वारोपे विनोदलीलासु कुसुमत्वारोपस्य कारणत्वात्परम्परित रूपकम् । 'नियतारोपणोपाय स्यादारोप परस्य य । तत्परम्परित श्लिष्टे वाचके भेदभाजि वा ॥'

### भाषा

धीरे २ जातकर्मादि सस्कारो के अनन्तर चौलकर्म सस्कार होने के बाद वह राजपुत्र, चालुक्य वशीय राजाओ मे श्रेष्ठ आहवमल्लदेव राजा के मानसिक आनन्द विहार लीला रूपी पुष्पसचयो का इन्द्र का नन्दनवन ही हो गया । अर्थात् जिस प्रकार नन्दन वन मे अगणित पुष्प समुदाय होते है वैसे इस राजा के मन मे इस बालक को देख कर अपरिमित आनन्द विहार लीलाओ का प्रादुर्भाव हुआ ।

**उत्सङ्गमारुह्य नरेश्वरस्य स पांसुलीलापरिधूसराङ्गः ।**
**निजाङ्गतः संगलितैः परागैश्चक्रे मनःकार्मणचूर्णयोगम् ॥१०॥**

### अन्वयः

पासुलीलापरिधूसराङ्गः सः नरेश्वरस्य उत्सङ्गम् आरुह्य निजाङ्गतः सगलितैः परागैः मनःकार्मणचूर्णयोग चक्रे ।

### व्याख्या

पासुषु धूलिषु "रेणुर्द्वयो स्त्रिया धूलि पासुर्ना न द्वयो रज" इत्यमर । लीला क्रीडा तया परिधूसराणीषत्पाण्डून्यङ्गानि यस्य स 'हरिण पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसर' इत्यमर । धूलिक्रीडनेन धूलिधूसरिताङ्ग स बालकः

नराणामीश्वरस्तस्य मानवेश्वरस्य राज्ञ उत्सङ्गमङ्कमारुह्य स्थित्वा निजाङ्गत स्वीयावयवेभ्य सगलितैरध पतितै परागैर्धूलिभिर्जनेश्वरस्य मनसो हृदयस्य कार्मण मूलौषधिद्वारा वशक्रिया 'मूलकर्म तु कार्मणम्' इत्यमर । तत्कृते यच्चूर्णमोषधिचूर्णं तस्य योग योजना चक्रे विहितवान् । कुमाराङ्गगलित-धूलिभिर्नृपस्य प्रेमपूरित हृदय वशीकृतमिव सजातमिति भाव । अत्र निदर्शनालङ्कार ।

### भाषा

मिट्टी मे खेलने से धूल से भरे शरीर वाला अतएव कुछ सफेद वर्ण का दिखलाई पडने वाला वह बालक, राजा की गोद मे बैठ कर अपने शरीर से झडी हुई धूलि से मानो राजा के मन को वशीकरण करने का औषधिचूर्ण प्रयोग करता था ।

**राज्ञां प्रणामाञ्जलिसम्पुटेषु किमप्यवज्ञामुकुलीकृताक्षः ।**
**तस्यैकहस्ताम्बुरुहप्रणामे कृतार्थमात्मानममंस्त देवः ॥११॥**

### अन्वयः

राज्ञां प्रणामाञ्जलिसम्पुटेषु किमपि अवज्ञामुकुलीकृताक्षः देवः तस्य एकहस्ताम्बुरुहप्रणामे आत्मान कृतार्थम् अमंस्त ।

### व्याख्या

राज्ञा सामन्तभूपाना प्रणामार्थं विहितमञ्जलिसम्पुट तेषु सत्सु, द्वाभ्या युताभ्या कराभ्या सर्वै राजभिर्नमस्कारे कृते सतीति भाव । किमप्यनिर्वचनीय-प्रकारेण हेलयेत्यर्थं । अवज्ञयोपेक्षया 'रीढावमाननावज्ञावहेलनमसूक्षणम्' इत्यमर । मुकुलीकृते 'अमुकुलो मुकल कृत इति मुकुलीकृत ' 'अभूततद्भावेच्चिव । कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमर । ईषत्सङकुचितेऽक्षिणी यस्य स देवो राजाऽऽहवमल्लदेवस्तस्य बालकस्यैकहस्ताम्बुरुहमेककरकमल समुत्थाप्य कृत प्रणामस्तस्मिन् सति आत्मान स्व कृतार्थं कृतकृत्य सफलजन्मवन्तमित्यर्थ । अमस्त मेने । नृपैर्बद्धाञ्जलिभि प्रणामे कृतेऽप्यवहेलनयाऽऽहवमल्लदेवस्य दृष्टिस्तेषामुपरि सङकुचितैवाऽऽसीत् । परञ्च बालकृतैकहस्तप्रणामे तु स प्रसन्नतया कृतकृत्यो बभूव ।

**भाषा**

अन्य सामन्त राजाओ से दोनो हाथ जोडकर प्रणाम किये जाने पर भी अवहेलना से अपनी आँखो को कुछ सकुचित बना लेने वाला राजा आहवमल्लदेव, उस बालक के एकही हाथ से प्रणाम किए जाने पर अपने को कृतकृत्य समझता था।

**प्रतिक्षणं कुन्तलपार्थिवस्य वितन्वतस्तन्मुखचुम्बनानि ।**
**तदीयदन्तच्छदजन्मनेव रागेण चेतः परिपूर्णमासीत् ॥१२॥**

**अन्वय:**

प्रतिक्षणं तन्मुखचुम्बनानि वितन्वतः कुन्तलपार्थिवस्य चेतः तदीयदन्तच्छदजन्मना रागेण इव परिपूर्णम् आसीत् ।

**व्याख्या**

प्रतिक्षण निरन्तर तस्य बालस्य मुखस्याऽऽननस्य चुम्बनानि वितन्वतो विदधत कुन्तलस्य कुन्तलदेशस्य पार्थिवो राजा तस्य चेतो मानस दन्ताश्छाद्यन्ते तिरोधीयन्तेऽनेनेति दन्तच्छदोऽधर 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमर । तस्माज्जन्म यस्य स तेन बालाधरस्थितेन रागेणेवाऽऽरुणवर्णेनेव मानसपक्षे प्रेम्णा परिपूर्णं पूरित बभूव ।

**भाषा**

क्षण क्षण मे उस बालक के मुख को चूमने मे प्रवृत्त उस कुन्तलदेश के राजा का हृदय मानो उस बालक के अधरोष्ठ से उत्पन्न होने वाले राग (लालिमा) से लाल हो गया था या राग (प्रेम) से भर गया था ।

**मुखेन्दुसञ्चारकृताभिलाष-कुरङ्गभीत्यर्थमिवार्पितेन ।**
**कण्ठावसक्तेन स राजसूनुरराजत व्याघ्रनखाङ्कुरेण ॥१३॥**

**अन्वयः**

सः राजसूनुः मुखेन्दुसञ्चारकृताभिलाषकुरङ्गभीत्यर्थम् इव अर्पितेन कण्ठावसक्तेन व्याघ्रनखाङ्कुरेण अराजत ।

### व्याख्या

स राजपुत्रो मुखेन्दावाननचन्द्रे सचाराय गमनाय कृतोऽभिलाषो येन स कुरङ्गो लाच्छनमृगस्तस्य भीत्यर्थं भयोत्पादनायेवार्ऽपितेन धारितेन कण्ठावसक्तेन कण्ठ-लग्नेन व्याघ्रनख एवाङ्कुर स्तेनाऽराजत शुशुभे । बालमुखेन्दौ लाच्छनमृगस्य गमनवारणाय व्याघ्रनखा कण्ठे समारोपिता । व्याघ्रनखेन तत्र व्याघ्रसत्ता-मनुमाय मृगस्तत्र न गच्छति । अतएव बालस्य मुखचन्द्रो निष्कलङ्क इति भाव । बालकस्याऽरिष्ट निवारणार्थं तस्य गले व्याघ्रनखार्पण भारते प्रसिद्धम् । फलोत्प्रेक्षाऽलङ्कार । तेन मुखस्य निष्कलङ्कचन्द्ररूपत्व ध्वन्यते ।

### भाषा

वह राज पुत्र, मुखरूपी चन्द्र मे आने की अभिलाषा रखने वाले लाच्छन मृग को डराने के लिए मानो गले मे पहिने हुए व्याघ्रनखाकुर से शोभित हो रहा था अर्थात् व्यघ्र के भय से मृग वहाँ नही जा सकता अत एव उसका मुख रूपी चन्द्र निष्कलङ्क था। (लडको के गले मे व्याघ्रनख पहनाने की प्रथा भारत मे चिरकाल से चली आई है। )

**क्रीडन्समुत्सारितवारनारी—मञ्जीरनादागतराजहंसः ।**
**एकः क्षितेः पालयिता भविष्यन् स राजहंसासहनत्वमूचे ॥१४॥**

### अन्वयः

क्रीडन्समुत्सारितवारनारीमञ्जीरनादागतराजहंसः सः एकः क्षितेः भवि-ष्यन् पालयिता राजहंसासहनत्वम् ऊचे।

### व्याख्या

क्रीडन् बालोचितक्रीडाविलास कुर्वन् समुत्सारिता निवारिता वारनारीणा वाराङ्गनाना 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमर । मञ्जीरनादेन नूपुरशब्देनाऽऽगता राजहसा मरालश्रेष्ठा 'राजहसास्तु ते चञ्चुचरणैर्लोहितैः सिता' इत्यमर । येन स एवम्भूत स बालक एक एवैकाक्येव क्षिते सम्पूर्ण-पृथिव्या भविष्यन् भावी पालयिता रक्षिता राजहसाना श्रेष्ठनृपाणामसहनत्व तेषा महत्त्वसहनाक्षमत्वमूचे निवेदितवान् । श्लिष्टोत्प्रेक्षालङ्कार ।



### भाषा

खेलते हुए, वेश्याओ के पैंजेब के शब्दो को सुनकर आए हुए राजहस पक्षियो को भगा देने वाले उस बालक ने, सम्पूर्ण पृथ्वी का एक छत्र राजा हो कर भविष्य मे अन्य श्रेष्ठ राजहसो अर्थात् राजाओ के महत्व की असहनशीलता का परिचय दिया ।

**स पीडयन्नायसपञ्जरस्थान् क्रीडापरः केसरिणां किशोरान् ।**
**समाददे भाविरिपुद्विपेन्द्र-युद्धोपयोगीव तदीयशौर्यम् ॥१५॥**

### अन्वयः

क्रीडापरः सः आयसपञ्जरस्थान् केसरिणा किशोरान् पीडयन् भाविरिपुद्विपेन्द्रयुद्धोपयोगि तदीयशौर्यं समाददे इव ।

### व्याख्या

क्रीडापरो बालक्रीडासक्त स आयसपञ्जरस्थान् लौहर्निमितपिञ्जरस्थितान् लोहोऽस्त्री शस्त्रक तीक्ष्ण पिण्ड कालायसायसी' इत्यमर । केसरिणा सिहाना किशोरान् शिशून् पीडयन् बाधमानो भाविषु भविष्यत्सु रिपव एव द्विपेन्द्रास्तेषा शत्रुगजेन्द्राणा युद्धेषु जन्येषु 'युद्धमायोजन जन्य प्रधन प्रविदारणम्' इत्यमर । उपयोगि कार्यसाधक विजयकारीतिभाव । तदीय सिहशिशुसम्बन्धिशौर्यं पराक्रम समाददे इव गृहीतवानिव । सिहोऽनायासेन स्वशौर्येण गज हन्ति तदीयशौर्येणाऽयमपि भविष्यत् काले रिपुगजेन्द्र हनिष्यतीति भाव । रूपकसहकृतोत्प्रेक्षालङ्कार ।

### भाषा

खेलकूद मे लगे हुए उस बालक ने लोहे के पिजरे मे के शेर के बच्चो को तग कर भावी शत्रुरूपी गजेन्द्रो के युद्धो मे उपयोगी उनके शौर्य को मानो ले लिया । सिह ही का शौर्य गजेन्द्रो के मारने मे समर्थ होता है । इसलिये इसने शत्रुरूपी गजेन्द्रो को मारने के लिये मानो इनसे शौर्य छीन लिया ।

**प्राप्तोदयः पादनखैश्चकासे स बालचन्द्रः परिवर्द्धमानः ।**
**अभ्यर्थमानः सहखेलनाय बालैरपत्यैरिव शीतरश्मेः ॥१६॥**

### अन्वयः

प्राप्तोदयः परिवर्द्धमानः बालचन्द्रः सः पादनखैः शीतरश्मेः बालैः अपत्यैः सहखेलनाय अभ्यर्थमानः इव चकासे ।

### व्याख्या

प्राप्त उदय उत्पत्तिरौन्नत्य वा येन स परिवर्द्धमानो वृद्धि प्राप्नुवन् बालश्चन्द्र इवेति बालचन्द्र कुमारो नवीनचन्द्रो वा स पादनखैरर्द्धचन्द्राकारै श्वेतैश्च प्रतिबिम्बितचन्द्रैर्वा शीतो रश्मि किरणो यस्य स 'किरणोऽस्रमयूखांशु गभस्ति-घृणिरश्मय' इत्यमर । शीतरश्मिस्तस्य शीतरश्मेश्चन्द्रस्य बालैर्बालरूपैरपत्यै पुत्रै सहखेलनाय सहक्रीडनायाऽभ्यर्थ्यमान प्रार्थ्यमान इव चकासे विदिद्युते। पादनखानामुपरि चन्द्रशिशुत्वोत्प्रेक्षा । राजकुमारस्य बालचन्द्रेण सहाभेदाद्रूप-कालङ्कार । अथ बालचन्द्र शीतरश्मेर्बालै क्रीडार्थं प्रार्थित इवाऽभूत् इति बालस्वभावोक्तिर्व्यञ्ज्यते ।

### भाषा

उदित भया हुआ और वढता हुआ, बालचन्द्र के समान वह कुमार, पाव के नखो के स्वच्छ तथा अर्धचन्द्राकार होने से या पाव के स्वच्छ नखो मे प्रतिबिम्बित चन्द्र होने से मानो चन्द्रमा के छोटे २ बच्चो से साथ खेलने के लिये पाव पडकर प्रार्थना किये गये के ऐसा शोभित हो रहा था । अर्थात् पाव के नखो के मिष से चन्द्र के बालक पाव पडकर उसके साथ खेलने की प्रार्थना करते थे ।

**परां प्रतिष्ठां लिपिषु क्रमेण जगाम सर्वासु नरेन्द्रसूनुः ।**
**पुण्यात्मनामत्र तथाविधानां निमित्तमात्रं गुरवो भवन्ति ॥१७॥**

### अन्वयः

नरेन्द्रसूनुः क्रमेण सर्वासु लिपिषु परा प्रतिष्ठा जगाम । अत्र तथा-विधाना पुण्यात्मना गुरवो निमित्तमात्र भवन्ति ।

### व्याख्या

नरेन्द्रस्य मनुष्येन्द्रस्य सूनु पुत्र क्रमेण शनै शनै सर्वास्वखिलासु लिपि-ष्वक्षरविन्यासेषु 'लिपिरक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इत्यमर । परामु-त्कृष्टा प्रतिष्ठा काष्ठामुत्कर्षमित्यर्थं 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः ।

जगाम प्राप। अत्र ससारे तथाविधाना नृपकुमारसदृशानामलौकिकाना पुण्यात्मना सुकृतिना गुरव उपदेशका निमित्तमात्र कारणमात्र भवन्ति। पुण्यैरेव सर्वा विद्या अनायासेन ते प्राप्नुवन्ति गुरवस्तु निमित्तमात्र भवन्तीति भाव । अर्थान्तरन्यासोऽलङ्कार ।

### भाषा

वह राजपुत्र धीरे २ समग्र वर्णमालाओ को अच्छी तरह से जान गया । इस ससार मे ऐसे पुण्यात्माओ के शिक्षकगण केवल निमित्त के लिये ही होते है ।

**अभ्यासहेतोः क्षिपतः पृषत्कान् नरेन्द्रसूनोः सकलासु दिक्षु ।**
**प्रहारभीतेव परिभ्रमन्ती पार्थस्य कीर्तिर्विरलीबभूव ॥१८॥**

### अन्वयः

अभ्यासहेतोः सकलासु दिक्षु पृषत्कान् क्षिपतः नरेन्द्रसूनोः प्रहारभीता इव परिभ्रमन्ती पार्थस्य कीर्तिः विरलीबभूव ।

### व्याख्या

अभ्यासहेतोर्बाणादिविक्षेपणाभ्यासदाढर्चाय सकलासु समग्रासु दिक्षु काष्ठासु 'दिशस्तु ककुभ काष्ठा आशाश्चहरितश्च ता' इत्यमर । चतुर्दिक्ष्वित्यर्थ । पृषत्कान् बाणान् 'पृषत्कबाणविशिखा अजिह्मगखगाशुगा' इत्यमर । क्षिपतोः मुञ्चतो नरेद्रसूनो राजपुत्रस्य प्रहारात्प्रहरणाद्भीतेव भययुक्तेव परिभ्रमन्ती-तस्ततश्चलन्ती पार्थस्याऽर्जुनस्य कीर्तिर्बाणसन्धानयशो विरलीबभूव निबिडेतरा बभूव न्यूनीबभूवेत्यर्थ । राजकुमारस्याऽभ्याससमय एव बाणसन्धानकौशलमर्जुनादप्यधिकमासीदिति भाव ।

### भाषा

अभ्यास करने के लिये सब दिशाओ मे बाणो को चलाने वाले उस राजपुत्र के बाणो के प्रहार के भय से मानो डरी हुई, चारो ओर भागने वाली (अर्जुन के पक्ष मे) चारो ओर फैली हुई अर्जुन की बाण चलाने की कीर्ति सकुचित हो गई । अर्थात् अभ्यास काल मे ही वह राजपुत्र बाण चलाने की कला मे अर्जुन से भी कुशल था ।

**लावण्यलुब्धाभिरलब्धमेव भूपालकन्यामधुपाङ्गनाभिः ।**
**कवित्ववक्तृत्वफला चुचुम्ब सरस्वती तस्य मुखारविन्दम् ॥१९॥**

**अन्वयः**

कवित्ववक्तृत्वफला सरस्वती लावण्यलुब्धाभिः भूपालकन्यामधुपाङ्ग-नाभिः अलब्धम् एव तस्य मुखारविन्द चुचुम्ब ।

**व्याख्या**

कवित्व काव्यकर्तृत्व वक्तृत्व वाग्मिता च फल यस्या सा सरस्वती वाग्देवता, यस्यास्समवधाने सति कवित्व वक्तृत्वञ्चाऽनायासेनैव प्रतिफलतीति भाव । लावण्ये कुमारस्य सौन्दर्ये लुब्धाभिस्तद्रसाकाङ्क्षिणीभिर्भूपालाना राज्ञा कन्या राजकुमार्य एव मधुपाना भ्रमराणामङ्गना स्त्रियस्ताभिरलब्धमप्राप्त तस्य कुमारस्य मुखमेवाऽरविन्द कमल 'वा पुसि पद्म नलिनमरविन्द महोत्पलम्' इत्यमर । चुचुम्ब तस्य मुखे निवास चकारेत्यर्थ । सरस्वती कुमारवृत्तान्ते नायकव्यवहारसमारोपात्समासोक्तिरलङ्कार । भूपालकन्यासु भ्रमराङ्गनात्वा-भेदारोपान्मुखे चाऽरविन्दत्वाभेदारोपाद्रूपकालङ्कार । तेन चाऽस्य विलक्षण कवित्व वाग्मित्वञ्च व्यज्यते ।

**भाषा**

उस राजकुमार के सौन्दर्य पर मोहित राजकन्या रूपी भ्रमराङ्गनाओ से अप्राप्य उसके मुख कमल को कवित्व तथा वक्तृत्व शक्ति देनेवाली सरस्वती ने चूमलिया । अर्थात् सरस्वती ने उसके मुख मे वास कर लिया । अतएव वह कुमार बाल्यकाल मे ही कविता बनाने मे और युक्तिपूर्ण बाते करने मे अत्यन्त निपुण हो गया ।

**तं बालचन्द्रं परिपूर्यमाण-मालोक्य लावण्यकलाकलापैः ।**
**कुमुद्वतीनामिव कामिनीनां निशासु निद्रा विमुखीबभूव ॥२०॥**

**अन्वयः**

निशासु लावण्यकलाकलापैः परिपूर्यमाणं तं बालचन्द्रम् आलोक्य कुमुद्वतीनाम् इव कामिनीना निद्रा विमुखीबभूव ।

### व्याख्या

निशासु रात्रिषु लावण्यस्य सौन्दर्यस्य कलास्तासा कलापा समूहास्तै. परिपूर्यमाण त बाल कुमार चन्द्र इव शशीव नूतनचन्द्रो वा त समालोक्य दृष्ट्वा कुमुद्वतीनामिव कुमुदिनीनामिव कामिनीनामङ्गनाना निद्रा विमुखीबभूवाऽपससार गतेत्यर्थ । यथा निशासु नवीनचन्द्र विलोक्य कुमुदिनी विकसिता भवति स्वकुड्मलत्वरूपनिद्रा जहाति तथैव कामिन्योऽपि तमद्भुतसौन्दर्ययुक्त कुमार निरीक्ष्य कामज्वरपीडिता सत्यो रात्रौ निद्रा न लब्धवत्य इति भाव । अत्र कुमुद्वती कामिन्योर्द्वयोरेकक्रियान्वयात्तुल्ययोगितालङ्कार ।

### भाषा

रात्रियो मे जिस प्रकार कलासमूहो से क्रमश परिपूर्ण होने वाले नूतन चन्द्रमा को देखकर कुमुदिनी विकसित हो जाती है और उसकी कलीस्वरूपी निद्रा हट जाती है उसी प्रकार सौन्दर्य से परिपूर्ण होने वाले उस कुमार को देखकर सुन्दरियाँ काम ज्वर से पीडित हो जाती है अतएव रात्रियो मे उनकी निद्रा दूर हो जाती है ।

**धैर्येण तस्मिन्नवधीर्य याति स्मरोत्सुकानां नगराङ्गनानाम् ।**
**आबद्धमुग्धभ्रुकुटिच्छटानां पेतुः सकोपं नयनोत्पलानि ॥२१॥**

### अन्वयः

धैर्येण अवधीर्य याति तस्मिन् स्मरोत्सुकानाम् आबद्धमुग्धभ्रुकुटीच्छटाना नगराङ्गनाना नयनोत्पलानि सकोपं पेतुः ।

### व्याख्या

धैर्येण धीरतया स्वस्वाभाविकगुणेन गाम्भीर्येणाऽवधीर्य कामिनीस्तिरकृत्य याति गच्छति तस्मिन् कुमारे स्मरेण कामवेगेनोत्सुकानामुद्वेल्लितमानसानामाबद्धाः सङ्कुचिता अत एव मुग्धा सुन्दर्यो या भ्रुकुटयस्तासा चछटा शोभा यासा तासां नगराङ्गणाना नागरिकसुन्दरीणा नयनान्येव नेत्राण्येवोत्पलानि इन्दीवराणि तानि सकोप कोपेन सहित यथा स्यात्तथाऽनादर दृष्ट्वा समुद्भूतेन क्रोधेन पेतु न्यपतन् । कामवेगेनोत्सुकानामङ्गनाना धीरतयाऽवधीरणात्तस्मिन् ता कुपिता. सजाता इति भाव ।

### भाषा

स्वाभाविक धीरता से सुन्दरियो के आकर्षण मे न पड कर उनकी अवहेलना करने वाले उस राजपुत्र पर, कामवेग से चलायमान मन वाली सङ्कुचित अतएव सुन्दर भौवो की शोभा से युक्त नागरिक सुन्दरियो के नेत्र कमल, क्रोध से पडते थे। अर्थात् अपनी अवहेलना देखकर नागरिक सुन्दरियाँ भौवे चढाकर क्रोध से उसे देखती थी।

**लावण्यलक्ष्मीकुलधाम्नि तत्र विवर्द्धमाने शनकैः कुमारे।**
**कासामजायन्त न कामिनीनां निद्रादरिद्राणि विलोचनानि[१] ॥२२॥**

### अन्वयः

तत्र लावण्यलक्ष्मीकुलधाम्नि कुमारे शनकैः विवर्द्धमाने सति कासा कामिनीना विलोचनानि निद्रादरिद्राणि न अजायन्त।

### व्याख्या

तत्र कल्याणपुरे लावण्यस्य सौन्दर्यस्य या लक्ष्मी श्रीस्तस्या कुलधाम कुलगृह तस्मिन् 'धाम तेजो गृहे मणौ' इत्यमर। सौन्दर्यश्रीकुलगृहे तस्मिन् कुमारे राजपुत्रे शनकै शनै शनैर्विवर्द्धमाने सति वर्द्धिते सति कासा कामिनीना-मङ्गनाना विलोचनानि नयनानि निद्रादरिद्राणि निद्रारहितानि नाऽजायन्त न जातानि अपितु सर्वा कामिन्यो रात्रौ तस्य स्मरणान्निद्रा न लेभिरे। तस्याद्भुत-सौन्दर्यश्रियमवलोक्य सर्वा अपि कामिन्य कामपरवशा सत्यो रात्रौ निद्रा न लेभिर इति भाव।

### भाषा

सौन्दर्य की शोभा के कुलगृह स्वरूप उस राजपुत्र के धीरे २ बडे होने पर उस कल्याण पुर मे कौन ऐसी युवतियाँ थी जिन्हे निद्रा का दारिद्रय न हुआ। अर्थात् अलौकिक सौन्दर्य से सुशोभित उस राजपुत्र को देख कर सब युवतियाँ काम पीडित हो निद्रा से वञ्चित हो गई।

---

[१] अयमेव भाव प्रकारान्तरेणाऽस्य सर्गस्य विशतितमे श्लोके प्रदर्शित।

**तेजस्विनामुन्नतिमुन्नतात्मा सेहे न बालोऽपि नरेन्द्रसूनुः ।**
**देवोऽपि भास्वाञ्छरणेच्छयेव समाश्रितो विष्णुपदं रराज[१] ॥२३॥**

### अन्वयः

उन्नतात्मा बालः अपि नरेन्द्रसूनुः तेजस्विनाम् उन्नतिं न सेहे । भास्वान् देवः अपि शरणेच्छया इव विष्णुपदं समाश्रितः रराज ।

### व्याख्या

उन्नत उन्नतिप्रवण आत्मा यस्य स बालोऽपि स्वल्पवयस्कोऽपि नरेन्द्रसूनू राजपुत्रस्तेजस्विना तेजसा जाज्वल्यमानानामुन्नतिमभ्युदय न सेहे न सोढु शशाक । यतो भास्वान् सूर्यो देवोऽपि विबुधोऽपि 'अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा' इत्यमर । शरणेच्छयेव स्वरक्षा याचमान इव विष्णुपद विष्णोर्भगवतः पद चरण विष्णुपदमाकाश वा 'वियद्विष्णुपद वा तु पुस्याकाशविहायसी' इत्यमर । समाश्रित प्राप्तो रराज शुशुभे । तस्य बाल्यकालादेव तेजस्युन्न-त्यसहनस्वभावात्सूर्यो देवोऽपि भीत्या विष्णुपदङ्गत इव शुशुभ इति भाव । अत्र हेतूत्प्रेक्षा ।

### भाषा

उन्नतात्मा वह राजपुत्र, बालक होते हुए भी, तेजस्वियो के अभ्युदय को नही सहन कर सकता था । इसीलिये मानो, सूर्य, देव होते हुए भी, इससे अपनी रक्षा करने के लिये भगवान् विष्णु की शरण मे गया या आकाश मे शोभित हुआ ।

**उच्चैः स्थितं तस्य किरीटरत्नं तेजोधनानामुपरि स्थितस्य ।**
**क्षमामिव प्रार्थयितुं लुलोठ संक्रान्तिभङ्ग्या मणिपादपीठे ॥२४॥**

### अन्वयः

तेजोधनानाम् उपरिस्थितस्य तस्य उच्चैः स्थितं किरीटरत्नं मणिपादपीठे संक्रान्तिभङ्ग्या क्षमां प्रार्थयितुम् इव लुलोठ ।

---

[१] किमपेक्ष्य फल पयोधरान् ध्वनत प्रार्थयते मृगाधिप ।
प्रकृति खलु सा महीयस सहते नान्यसमुन्नति यया ॥ इत्युक्ते ।
भारवि (किरातार्जुनीये २ सर्गे २१ श्लोक )

### व्याख्या

तेज एव दीप्तिरेव धन येषा ते तेजोधनास्तेषा तेजस्विनामुपरि सर्वोत्कर्षेण स्थितस्य विद्यमानस्य तस्य राजसुनोरुच्चै शिरसि स्थित विराजमान किरीट-रत्न मुकुटरत्न मणिभी रत्नादिभिर्निर्मिते पादपीठे पादाधारपीठे सक्रान्तिभङ्गचा प्रतिबिम्बव्याजेन क्षमा प्रार्थयितुमिव याचितुमिव लुलोठ पपात । अत्रोत्प्रेक्षा-लङ्कार. ।

### भाषा

सब तेजस्वियो मे श्रेष्ठ इस राजपुत्र के, मस्तक पर का मुकुटमणि, रत्न जडित पाव रखने की चौकी पर पडी अपनी परछाही के मिष से (उस तेजस्वी के भी ऊपर बैठने के अपराध से) मानो क्षमा याचना करने के लिये उसके पैरो पडता था ।

**अत्रान्तरेऽभूज्जयसिंहनामा पुत्रस्तृतीयोऽपि नराधिपस्य ।**
**स्वप्नेऽपि संवादयशोदरिद्रश्चन्द्रार्द्धचूडस्य न हि प्रसादः ॥२५॥**

### अन्वयः

अत्र अन्तरे नराधिपस्य जयसिंहनामा तृतीयः अपि पुत्रः अभूत् । हि चन्द्रार्द्धचूडस्य प्रसादः स्वप्ने अपि संवादयशोदरिद्रः न (भवति) ।

### व्याख्या

अत्रान्तरेऽस्मिन्नवकाशे 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्य-मर । नराधिपस्याऽऽहवमल्लदेवराजस्य जयसिंहनामा जयसिंहनामकस्तृती-योऽपि पुत्र सूनुरभूदजायत । हि यस्मात्कारणात् चन्द्रार्द्धश्चूडाया शिरसि यस्य तस्य शिवस्य प्रसादोऽनुग्रह स्वप्नेऽपि कथमपीतिभाव । सवादस्य स्वानुकूल-फलदानरूपस्य वचनस्य यद्यशस्तेन दरिद्रो रहितो न, नभवतीत्यर्थ । शिवप्रसादप्राप्तिप्रयोजकवचनस्य सदैव सत्यत्वमिति कुतस्तद्वचनस्य मिथ्या-भाव प्रसङ्ग इति भाव । अत्र पूर्वार्द्धोक्तस्य द्वितीयार्द्धोक्तेनाऽर्थेन समर्थना-दर्थान्तरन्यासालङ्कार । "सामान्य वा विशेषेण विशेषस्तेन वा यदि । कार्यञ्च कारणेनेद कार्येण च समर्थ्यते । साधर्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा तत ।" इति लक्षणात् ।

**भाषा**

इसी बीच मे आहवमल्लदेव राजा को जयसिह नामक तृतीय पुत्र भी हुआ। क्योकि भगवान् शङ्कर की कृपा, स्वप्न मे भी, वचनानुकूल फलप्रदान के यश से वञ्चित नही हो सकती।

**सर्वासु विद्यासु किमप्यकुण्ठ-मुत्कण्ठमानं समरोत्सवेभ्यः।**
**श्रीविक्रमादित्यमथावलोक्य स चिन्तयामास नृपः कदाचित् ॥२६॥**

**अन्वयः**

अथ कदाचित् सः नृपः श्रीविक्रमादित्यं सर्वासु विद्यासु अकुण्ठं समरोत्सवेभ्यः किमपि उत्कण्ठमानम् अवलोक्य चिन्तयामास।

**व्याख्या**

अथाऽनन्तर कदाचित् कस्मिश्चित्समये स प्रसिद्धो नृपो भूपतिराहवमल्लदेवः श्रीविक्रमादित्य तन्नामक स्वसुत सर्वासु सकलासु विद्यासु शस्त्रशास्त्रविद्यास्वकुण्ठ-ममन्द निपुणमित्यर्थ 'कुण्ठो मन्द क्रियासु य' इत्यमर। समरोत्सवेभ्यो युद्धकार्येभ्य किमपि अनिर्वचनीयतयोत्कण्ठमान समुत्सुकमवलोक्य दृष्ट्वा चिन्तया-मास विचारयामास।

**भाषा**

कुछ काल के अनन्तर, समग्र शस्त्र और शास्त्र विद्याओ मे निपुण अपने मध्यम पुत्र श्री विक्रमादित्य को सग्राम महोत्सवो के लिए विशेष लालायित देखकर राजा आहवमल्लदेव सोचने लगे।

**अलङ्करोत्यद्भुतसाहसाङ्कः सिंहासनं चेदयमेकवीरः।**
**एतस्य सिंहीमिव राजलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् ॥२७॥**

**अन्वयः**

अयम् अद्भुतसाहसाङ्कः एकवीरः सिहासनम् अलङ्करोति चेत् (तर्हि) एतस्य अङ्कस्थितां सिहीम् इव राजलक्ष्मीम् अभियोक्तुं कः क्षमते।

### व्याख्या

अयमद्भुतमाश्चर्यावलम्बि साहस विक्रमोऽङ्क चिह्न यस्य स 'कलङ्काङ्कौ लाञ्च्छनञ्च चिह्न लक्ष्म च लक्षणम्' इत्यमर । एकवीरोऽद्वितीयशूरो विक्रमाङ्कदेव सिहासन राज्यसिहासनमलङ्करोति विभूषयति चेद्यदि तर्हि एतस्य राजकुमारस्याऽङ्कस्थितामुत्सङ्गे स्थिता विराजमाना सिहीमिव मृगेन्द्राङ्गना-मिवाऽपरिभवनीयामत एवाऽजेया राजलक्ष्मी नृपश्रियमभियोक्तुमाक्रमितु हठाद् गृहीतुमित्यर्थ । क को वा क्षमते प्रभवति न कोपीत्यर्थ ।

### भाषा

यदि अद्भुतसाहस के लक्षणो से युक्त यह अद्वितीय वीर विक्रमाङ्कदेव राजसिहासन (राजगद्दी) को सुशोभित करेगा तो इसकी गोद मे रहने वाली सिहिनी के समान राजलक्ष्मी को कौन छेड सकेगा। अर्थात् सिहिनी के समान प्रबल इसकी राजलक्ष्मी से कौन छेड छाड करेगा अर्थात् उसको छीनने का प्रयत्न करेगा।

**करोमि तावद्युवराजमेन-मत्यक्तसाम्राज्यभरस्तनूजम् ।**
**तटद्वयी संश्रयणाद्दधातु धुनीव साधारणतां नृपश्रीः ॥२८॥**

### अन्वयः

अत्यक्तसाम्राज्यभर (अह) एनं तनूजं तावत् युवराजं करोमि। नृपश्रीः धुनी इव तटद्वयीसंश्रयणात् साधारणता दधातु।

### व्याख्या

न त्यक्त परित्यक्त साम्राज्यस्य सम्पूर्णराज्यस्य भरो भारो येन स एवम्भूतोऽहमेन विक्रमाङ्कदेवनामक तनूज, तन्वा शरीरात् जायत इति तनूजस्त तनूज पुत्र तावत् युवराज करोमि राज्यकार्यभारग्रहणे नियुक्त विदधामि। नृपश्री राजलक्ष्मी धुनीव नदीव 'अथ नदी सरित् । तरगिणी शैवलिनी तटिनी ह्रादिनी धुनी' इत्यमर तटयोर्द्वयी तटद्वयी तस्या सश्रयणादाश्रयणात् साधारण-तामुभयावलम्बित्वात् सामान्यस्वरूप दधातु । विक्षोभ न गच्छत्विति भाव ।

### भाषा

मै अपने साम्राज्य का भार न छोडते हुए इस विक्रमाङ्कदेव को सम्प्रति युवराज पद पर नियुक्त कर देता हूँ। ऐसा कर देने से दोनो तटो के आश्रय

से स्वाभाविक रूप से बहने वाली नदी के समान हम दोनो के आश्रय मे रहने वाली राजलक्ष्मी समान रूप से चलती रहेगी ।

**एवं विनिश्चित्य कृतप्रयत्न-मूचे कदाचित्पितरं प्रणम्य ।**
**सरस्वतीनूपुरसिञ्जितानां सहोदरेण ध्वनिना कुमारः ॥२६॥**

### अन्वयः

कुमारः कदाचित् एवं विनिश्चित्य कृतप्रयत्न पितर प्रणम्य सरस्वतीनूपुरसिञ्जिताना सहोदरेण ध्वनिना ऊचे ।

### व्याख्या

कुमारो विक्रमाङ्कदेव कदाचित् कस्मिश्चित्काले एव पूर्वोक्तप्रकारेण विनिश्चित्य निश्चय विधाय कृत समारब्ध प्रयत्न उद्योगो येन त पितर जनकमाहवमल्लदेव प्रणम्य नमस्कृत्य सरस्वत्या वाग्देव्या नूपुराणा मञ्जीराणा 'पादागुद तुलाकोटि मजीरो नूपुरोऽस्त्रियाम्' इत्यमर । सिञ्जिताना स्वनाना सहोदरेण सदृशेन मधुरेणेत्यर्थ ध्वनिना शब्देन वचसा वा ऊचे जगाद । सुमधुर-कर्णप्रियशब्देन स्वपितर जगादेति भाव ।

### भाषा

किसी समय राज कुमार ने, पूर्वोक्त निश्चय कर तदनुरूप कार्य करने मे प्रवृत्त अपने पिता आहवमल्लदेव को, सरस्वती के पैजेब की ध्वनि के सदृश सुमधुर और कर्णप्रिय शब्दो मे कहा ।

**आज्ञा शिरश्चुम्बति पार्थिवानां त्यागोपभोगेषु वशे स्थिता श्रीः ।**
**तव प्रसादात्सुलभं समस्त-मास्तामयं मे युवराजभावः ॥३०॥**

### अन्वयः

आज्ञा पार्थिवाना शिरः चुम्बति, श्रीः त्यागोपभोगेषु वशे स्थिता, तव प्रसादात् समस्त सुलभम् । मे युवराजभावः आस्ताम् ।

### व्याख्या

आज्ञा मदीयादेश पार्थिवाना राज्ञा शिर शीर्ष चुम्बति समाक्रामति । सर्वे राजानो ममाऽऽज्ञापालन कुर्वन्तीति भाव । श्रीर्धनादिसमृद्धिस्त्यागेषु दानेषू-

पभोगेषु सम्भोगेषु वशे स्थिता ममाऽऽधीना दानसम्भोगादिषु नास्ति मे द्रव्याभाव इत्यर्थ । तव प्रसादादनुग्रहात्समस्त समग्र वस्तुजात सुलभ सुखेन लभ्य, मे मम युवराजभावो यौवराज्ये नियोजनमास्ता विरमतु ।

### भाषा

मेरी आज्ञा का सब राजा लोग पालन करते है । दान और उपभोग के लिये मुझे द्रव्य की कमी नही है । आप के अनुग्रह से मुझे सब सुलभ है । मुझे युवराज बनाने का विचार स्थगित किया जाय ।

**जगाद देवोऽथ मदीप्सितस्य किं वत्स धत्से प्रतिकूलभावम् ।**
**ननु त्वदुत्पत्तिपरिश्रमे मे स चन्द्रचूडाभरणः प्रमाणम् ॥२१॥**

### अन्वयः

अथ देवः जगाद । वत्स मदीप्सितस्य प्रतिकूलभावं कि धत्से । ननु मे त्वदुत्पत्तिपरिश्रमे सः चन्द्रचूडाभरणः प्रमाणम् ।

### व्याख्या

अथ स्वपुत्रवचनश्रवणानन्तर देवो राजा जगाद कथयामास । हेवत्स ! हे पुत्र ! ममेप्सितमभीष्ट मदीप्सित तस्य मदभीष्टस्य मनोरथस्य प्रतिकूलभाव प्रातिकूल्य विरोधमित्यर्थ । कि किमर्थ धत्से करोषि । नन निश्चयेन मे मम तवोत्पत्तिर्जन्म त्वदुत्पत्तिस्तत्र परिश्रमस्तपस्यादिकरण तस्मिन् स चन्द्र श्चूडाया शिरस आभरण भूषण यस्य स शिव प्रमाण साक्षी । स शिव एव जानाति तव जन्महेतो यादृश कठिनतपश्चरण मयाऽनुष्ठितमतो मम मनोरथस्य विरोध विहाय तत्साधयेति भाव ।

### भाषा

पुत्र की ऐसी उक्ति को सुनने के अनन्तर राजा ने कहा । बेटा ! मेरे अभीप्सित कार्य का क्यो विरोध करते हो । तुम्हारा जन्म होने के लिये मुझे तपश्चरणादि अनुष्ठान मे कैसा परिश्रम करना पडा है यह चन्द्रशेखर शकर ही जानते है । इसलिये मेरी इच्छा का विरोध न करो ।

**धत्से जगद्रक्षणयामिकत्वं न चेत्त्वमङ्गीकृतयौवराज्यः ।**
**मौर्वीरवापूरितदिङ्मुखस्य क्रान्तिः कथं शाम्यतु मद्भुजस्य ॥२२॥**

**अन्वयः**

त्वम् अङ्गीकृतयौवराज्यः (सन्) जगद्रक्षणयामिकत्वं न धत्से चेत् मौर्वीरवापूरितदिङ्मुखस्य मद्भुजस्य क्लान्तिः कथं शाम्यतु ।

**व्याख्या**

त्वमङ्गीकृत परिगृहीत यौवराज्य युवराजकर्म येन स एवम्भूतस्सन् जगतो भुवनस्य 'विष्टप भुवन जगत्' इत्यमर । रक्षण पालन तस्य यामिकत्व प्रहरित्व न धत्से न वहसि चेत् मौर्व्या ज्याया रवेण नादेनाऽऽपूरितानि दिशा मुखानि येन स तस्य मद्भुजस्य मम बाहो 'भुज बाहु प्रवेष्टो दो' इत्यमर । क्लान्ति परिश्रान्ति कथ केन प्रकारेण शाम्यतु शान्तिमेतु । मदुपार्जितस्य रक्षणे यदि त्व दीक्षितो न भविष्यसि तर्हि मत्कठोरपरिश्रमस्य साफल्य कुत इति भाव ।

**भाषा**

अगर तुम युवराज पद को स्वीकार कर जगत् की रक्षा के लिये पहरेदारी नही करोगे तो प्रत्यञ्चा के शब्दो से सब दिशाओ को भर देने वाली अर्थात् गुजाने वाली मेरी इस भुजा की थकावट कैसे दूर होगी। अर्थात् मेरी जीती हुई पृथ्वी के यदि तुम पहरे दार न बनोगे तो मेरा इस समस्त पृथ्वी को जीत कर अपने अधीन करने का कठोर परिश्रम कैसे सफल होगा ।

**आकर्ण्य कर्णाटपतेः सखेद-मित्थं वचः प्रत्यवदत्कुमारः ।**
**सरस्वतीलोलदुकूलकान्तां प्रकाशयन्दन्तमयूखलेखाम् ॥३३॥**

**अन्वयः**

कुमारः कर्णाटपतेः इत्थ सखेदं वचः आकर्ण्य सरस्वतीलोलदुकूलकान्ता दन्तमयूखलेखां प्रकाशयन् प्रत्यवदत् ।

**व्याख्या**

कुमारो राजकुमार कर्णाटपतेर्दक्षिण-भारतस्थितकर्णाटकदेशाधिपतेराहवमल्लदेवस्येत्थमेवभ्भूत खेदेन दु खेन सहित युक्त खेदप्रकाशक वचो वाणीमाकर्ण्य निशम्य सरस्वत्या वागधिष्ठातृदेव्या लोल चञ्चल यद्दुकूल वस्त्र तद्वत् कान्ता शुभ्रत्वेन रमणीया दन्ताना रदाना मयूखा किरणा. तेषा लेखा पक्ति 'वीथ्यालिरावलि पक्ति. श्रेणी लेखास्तु राजय, इत्यमर । ता प्रकाशयन् प्रकटयन् प्रत्यवदत् प्रत्युत्तर ददौ । अत्रोपमालङ्कार ।

### भाषा

दक्षिण भारत स्थित कर्णाटक देश के राजा आहवमल्लदेव की अर्थात् अपने पिता की ऐसी दुःखभरी वाणी को सुनकर सरस्वती के चञ्चल सफेद वस्त्र के समान शुभ्र दातो के किरणो की पंक्ति को प्रकट करते हुए, राजकुमार ने प्रत्युत्तर दिया।

**वाचालतैषा पुरतः कवीनां कान्त्या मदोऽयं सविधे सुधांशोः।**
**त्वत्संनिधौ पाटवनाटनं यत् तथापि भक्त्या किमपि ब्रवीमि ॥३४॥**

### अन्वयः

यत् त्वत्संनिधौ पाटवनाटनम् एषा कवीनां पुरतः वाचालता, अयं सुधांशोः सविधे कान्त्याः मदः तथापि भक्त्या किमपि ब्रवीमि।

### व्याख्या

यत् यद्यपि त्वत्तव सनिधौ समीपे पाटवस्य चातुर्यस्य नाटन प्रकाशनमेषा कवीना वर्णनाचातुरीसम्पन्नाना पण्डिताना पुरतोऽग्रे वाचालता मुखरताभिव्यक्तिरेव न तु किञ्चिदुचित वचनमिति। (अथ च) अय (इदमित्युचितम्) सुधाशो सकलकान्तिनिधानस्येन्दोस्सविधे सनिकटे कान्त्या शोभाया 'शोभा कान्तिर्द्युतिच्छवि' इत्यमर। मद स्वाभिमानप्रकाशनमेव। यथा चन्द्रसमीपे कान्तिमदप्रकाशन कविसमीपे वचोभिनाटन च व्यर्थं तथैव तव समीपे मदीयोक्तिरिति भाव। तथाप्येव सत्यपि निष्प्रयोजनकत्वेऽपि त्वयि भक्त्या, पूज्येष्वनुरागो भक्तिस्तया किमपि किंचिद्वचो ब्रवीमि वच्मि। निदर्शनाऽलङ्कार।

### भाषा

यद्यपि आप के समक्ष मेरा चातुर्य प्रकाशन करना विद्वानो के सन्मुख मुखरता अर्थात् बकवाद करना है और कान्ति निधान चन्द्रमा के सन्मुख कान्ति की शेखी बघारना है। तो भी आप मे जो मेरी भक्ति है अर्थात् पूज्यत्व बुद्धि है उससे कुछ कहता हूँ।

**विचारचातुर्यमपाकरोति तातस्य भूयान्मयि पक्षपातः।**
**ज्येष्ठे तनूजे सति सोमदेवे न यौवराज्येऽस्ति ममाधिकारः ॥३५॥**

**अन्वयः**

तातस्य मयि भूयान् पक्षपातः (तातस्य) विचारचातुर्यम् अपाकरोति। (तातस्य) ज्येष्ठे तनूजे सोमदेवे सति मम यौवराज्ये अधिकारः न अस्ति।

**व्याख्या**

तातस्य पितुर्मयि भूयानधिक पक्षपात स्नेहान्मदीयपक्षग्रहण तातस्य विचारस्य विवेकस्य चातुर्यं नैपुण्यमपाकरोति दूरीकरोति। अस्मिन्विषये भवदुक्तौ विवेकपुरस्सरविचारप्रावीण्य न दृश्यत इत्यर्थ। यतस्तातस्य ज्येष्ठे पुत्रे सोमदेवे तन्नामके सति विद्यमाने सति धर्मशास्त्रमर्यादया मम तस्मात् कनीयसो यौवराज्ये युवराजपदेऽधिकारो योग्यत्वमौचित्यञ्च नाऽस्ति न विद्यते।

**भाषा**

आप का मेरे प्रति अधिक पक्षपात, आप की विवेकयुक्त विचार की पटुता को दूर कर रहा है। आप के ज्येष्ठ पुत्र सोमदेव के रहते हुए मेरा युवराज पद पाने का कोई अधिकार नही है।

**चालुक्यवंशोऽपि यदि प्रयाति पात्रत्वमाचारविपर्ययस्य।**
**अहो महद्वैशसमाः किमन्य-दनङ्कुशोऽभूत्कलिकुञ्जरोऽयम् ॥३६॥**

**अन्वयः**

यदि चालुक्यवशः अपि आचारविपर्ययस्य पात्रत्वं प्रयाति ( तर्हि ) आः किम् अन्यत्, अहो महत् वैशसम्, अय कलिकुञ्जरः अनङ्कुशः अभूत्।

**व्याख्या**

यदि चालुक्यस्य वश कुलमप्याऽऽचारो धर्मानुकलमर्यादा तस्य विपर्ययो वैपरीत्य तस्य पात्रत्व भाजनत्व प्रयाति गच्छति तर्हि आ! इति खेदे। किमदन्यद्वस्तु। अहो! इत्याश्चर्ये। महद्वैशस स्यात् महदनर्थप्रयोजक स्यात्। "वैशस हिसा"। अतोऽय कलिकुञ्जर कलिरूपहस्त्यनङ्कुशो निरङ्कुशो निष्प्रतिबन्धक इत्यर्थ। अभूज्जात। मर्यादा त्यागे चालुक्यवश कलिकाल-पराभूत इत्यपवाद स्यादिति भाव।

**भाषा**

यदि चालुक्यवश भी अनाचार का स्थान बन गया तो बडे आश्चर्य और

दु ख से कहना पडता है कि इतना बडा अनर्थ और क्या हो सकता है। यह कलि रूपी हाथी निरङकुश हो गया। अर्थात् अब कलि के प्रचार मे कोई रोक टोक न रह गई।

**लक्ष्म्याः करं ग्राहयितुं तदादौ तातस्य योग्यः स्वयमग्रजो मे।**
**कार्यं विपर्यासमलीमसेन न मे नृपश्रीपरिरम्भणेन ॥३७॥**

**अन्वयः**

तत् आदौ मे अग्रजः तातस्य लक्ष्म्याः करं ग्राहयितुं स्वयं योग्यः। विपर्यासमलीमसेन नृपश्रीपरिरम्भणेन मे न कार्यम्।

**व्याख्या**

तत्तस्मात्कारणात् धर्मानुकूलमर्यादानुरोधात् मे ममाऽग्रजो ज्येष्ठभ्राता तातस्य पितुस्तव लक्ष्म्या श्रिय कर हस्त ग्राहयितु तातरूपप्रयोजककर्तृक-ज्येष्ठभ्रातृप्रयोज्यकर्तृकलक्ष्मीसम्बन्धिकरग्रहण सम्पादयितु स्वयमात्मना योग्य-स्समर्थ। विपर्यासेन प्रातिकूल्येन वैपरीत्येन वा 'स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये' इत्यमर। मलीमसेन कलङ्कितेन 'मलीमस तु मलिन कच्चर मलदूषितम्' इत्यमर। नृपश्रियो राजलक्ष्म्या परिरम्भणेन समालिङ्गनेन ग्रहणेनेत्यर्थ। मे मम न कार्यं न किंचित्प्रयोजनम।

**भाषा**

इसलिये पहिले मेरे ज्येष्ठ भ्राता स्वय आप के राजश्री का हाथ पकडवाने के योग्य है। क्रमराहित्य के या प्रतिकूलता के कलङ्क से कलङ्कित राजलक्ष्मी को स्वीकार करने से मुझे कोई प्रयोजन नही है।

**ज्येष्ठं परिम्लानमुखं विधाय भवामि लक्ष्मीप्रणयोन्मुखश्चेत्।**
**किमन्यदन्यायपरायणेन मयैव गोत्रे लिखितः कलङ्कः ॥३८॥**

**अन्वयः**

ज्येष्ठं परिम्लानमुखं विधाय (अहम्) लक्ष्मीप्रणयोन्मुखः भवामि चेत् (तर्हि) अन्यायपरायणेन मया एव गोत्रे कलङ्कः लिखितः, किम् अन्यत्।

### व्याख्या

ज्येष्ठ भ्रातर सोमदेव परिम्लान क्रमप्राप्तराज्यलक्ष्मीपरिग्रहाप्राप्त्या मलिन मुख वदन यस्य त विधाय कृत्वाऽह लक्ष्म्या प्रणय स्नेहस्तस्मिन्नुन्मुख प्रवण परायणो वा भवामि चेत् तर्हि अन्यायेऽन्याययुक्तकार्ये परायणो लग्नस्तेन मया विक्रमाङ्कदेवेनैव गोत्रे विशुद्धचालुक्यवशे कलङ्क कालुष्य लिखित सम्पादित । किमन्यदन्यायकार्यम् ? अन्यस्याऽन्यायकार्यस्याऽन्वेषणप्रयासो व्यर्थ एवेति भाव ।

### भाषा

यदि मै अपने बडे भाई सोमदेव को क्रमप्राप्त राज्यलक्ष्मी के न प्राप्त होने से उदास बनाकर स्वय लक्ष्मी के प्रेम मे तत्पर हो जाऊँ, तो अन्याय युक्त कार्य करने मे तत्पर, मैंने ही इस शुद्ध चालुक्य वश मे कलङ्क लगाया। और क्या अन्याय का कार्य हो सकता है ?

**तातश्चिरं राज्यमलङ्करोतु ज्येष्ठो ममारोहतु यौवराज्यम् ।**
**सलीलमाक्रान्तदिगन्तरोऽहं द्वयोः पदातिव्रतमुद्वहामि ॥३६॥**

### अन्वयः

तातः चिरं राज्यम् अलङ्करोतु, मम ज्येष्ठः यौवराज्यम् आरोहतु, अह सलीलम् आक्रान्तदिगन्तरः सन् द्वयोः पदातिव्रतम् उद्वहामि ।

### व्याख्या

तात पिता चिर चिराय 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इत्यमर । राज्यमलङ्करोतु विभूषयतु । मम ज्येष्ठो ज्येष्ठभ्राता सोमदेवो यौवराज्य युवराजपदमारोहतु अधितिष्ठतु । अह लीलया सहित सलील सहेल यथास्यात्तथाऽऽक्रान्तानि समधिष्ठिनानि दिगन्तराणि येन स आक्रान्तदिगन्तरस्सन् द्वयोस्तातस्य भ्रातुश्च पदाते पत्ते 'पदातिपत्तिपदगपादातिक पदाजय' इत्यमर । व्रत नियममुद्वहामि धारयामि । अह तव ज्येष्ठभ्रातुश्च पादातिको भूत्वोभयो सेवा करिष्यामीति भाव ।

### भाषा

आप चिरकाल तक राज्य को शोभित करते रहे । बडे भाई युवराज पद पर आरूढ हो । मै, बात की बात मे समग्र दिशाओ मे आक्रमण करता हुआ, आप दोनो का प्यादा बनकर रहूँगा ।

**रामस्य पित्रा भरतोऽभिषिक्तः क्रमं समुल्लङ्घ्य यदात्मराज्ये ।**
**तेनोत्थिता स्त्रीजित इत्यकीर्ति-रद्यापि तस्यास्ति दिगन्तरेषु ॥४०॥**

**अन्वयः**

यत् रामस्य पित्रा आत्मराज्ये क्रम समुल्लङ्घ्य भरतः अभिषिक्तः तेन उत्थिता स्त्रीजितः इति तस्य अकीर्तिः अद्य अपि दिगन्तरेषु अस्ति ।

**व्याख्या**

यत् रामस्य पित्रा दशरथेनाऽऽत्मन स्वस्य राज्ये क्रम नियमोचितपरिपाटी-क्रम समुल्लङ्घ्याऽतिक्रम्य भरत स्वकनीयान्पुत्रोऽभिषिक्तोऽभिषेकतिलकाञ्चितः कृतस्तेनाऽनचितकार्येणोत्थिता समुत्पन्ना स्त्रिया भार्यया जितो वशीकृत इति तस्याऽकीर्तिरपयशोऽद्याप्यद्यावधि दिगन्तरेषु सर्वदिक्ष्वस्ति विद्यते ।

**भाषा**

चूँकि रामजी के पिता दशरथ राजा ने कुलपरम्परागत क्रम का उल्लघन कर बडे भाई के रहते हुए छोटे भाई, भरत का राज्याभिषेक किया, इस अनु-चित कार्य से उत्पन्न, स्त्री का वशीभूत, ऐसी उसकी अपकीर्ति अभी भी सब दिशाओ मे अर्थात् सर्वत्र फैली हुई है ।

**तदेष विश्राम्यतु कुन्तलेन्द्र यशोविरोधी मयि पक्षपातः ।**
**न किं समालोचयति क्षितीन्दु-रायासशून्यं मम राज्यसौख्यम् ॥४१॥**

**अन्वय**

हे कुन्तलेन्द्र । तत् एषः मयि यशोविरोधी पक्षपातः विश्राम्यतु । क्षितीन्दु मम आयासशून्य राज्यसौख्यं कि न समालोचयति ।

**व्याख्या**

हे कुन्तलेन्द्र ! कुन्तलदेशाधिप ! तत्तस्मात्कारणादेष मयि मत्सम्बन्धे यशस कीर्तेर्विरोधी प्रतिबन्धको दुष्कीर्तिजनक पक्षपातो विश्राम्यतु विश्रान्तिमेतु, न जायतामित्यर्थ । क्षितीन्दु पृथिवीन्दुर्भवान् ममाऽऽयासेन परिश्रमेण शून्य रहितमनायासप्राप्तमित्यर्थ । राज्यसौख्य कि न समालोचयति, कथ न पश्यति । अह त्वनायासेनैव राज्यसौख्यमनुभवामीति भवान् जानात्येवेत्यर्थ. ।

**भाषा**

इसलिए, हे कुन्तलदेशाधिपति ! मेरे प्रति जो आपका अपकीर्तिजनक पक्षपात है उसे छोड दीजिये। क्या राजा साहेब (आप) नही देखते है कि मैं अनायास ही सब राज्य का सौख्य पा रहा हूँ।

**पुत्राद्वचः श्रोत्रपवित्रमेवं श्रुत्वा चमत्कारमगान्नरेन्द्रः।**
**इयं हि लक्ष्मीर्धुरि पांसुलानां केषां न चेतः कलुषीकरोति ॥४२॥**

**अन्वयः**

नरेन्द्रः पुत्रात् एवं श्रोत्रपवित्रं वचः श्रुत्वा चमत्कारम् अगात्। हि पांसुलाना धुरि (स्थिता) इयं लक्ष्मीः केषां चेतः न कलुषीकरोति।

**व्याख्या**

नरेन्द्रो राजाऽऽहवमल्लदेव पुत्रात्सूनोर्विक्रमाङ्कदेवादेवमेवम्भूत श्रोत्रपवित्रं कर्णपूत कर्णसुखदायकमित्यर्थ। वचो वाणी श्रुत्वा निशम्य चमत्कारमाश्चर्य-मगात्प्राप्त आश्चर्यचकितो बभूवेत्यर्थ। हि यस्मात्कारणात् पासुलाना स्वैरि-णीना धुरि अग्रभागे स्थितेय लक्ष्मी श्री सम्पत्तिरित्यर्थ। केषा पुरुषाणा चेतो मन 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर। न कलुषी-करोति न मलिनीकरोति। अपि तु लक्ष्मी सर्वानेव सन्मार्गाच्च्यावयतीति भाव।

**भाषा**

इस प्रकार पुत्र की कर्ण को पवित्र करने वाली अर्थात् कान को अच्छी लगने वाली वाणी को सुनकर राजा को आश्चर्य हुआ। क्यो कि स्वेच्छा-चारिणियो मे अग्रणी लक्ष्मी किनके चित्तो को मलिन नही करदेती। अर्थात् लक्ष्मी की प्राप्ति मे सभी मनुष्यो का मन कलुषित हो जाता है।

**सस्नेहमङ्के विनिवेश्य चैन-मुवाच रोमाञ्चतरङ्गिताङ्गः।**
**क्षिपन्निवात्युज्ज्वलदन्तकान्त्या प्रसादमुक्तावलिमस्य कण्ठे ॥४३॥**

**अन्वयः**

रोमाञ्चतरङ्गिताङ्गः एनम् अङ्के सस्नेहं विनिवेश्य अस्य कण्ठे अत्युज्ज्व-लदन्तकान्त्या प्रसादमुक्तावलि क्षिपन् इव च उवाच।

### व्याख्या

रोमाञ्चेन रोमहर्षणेन तरङ्गितानि युक्तान्यङ्गानि यस्य स राजाऽऽहवमल्लदेव एन विक्रमाङ्कदेवमङ्क उत्सङ्गे सस्नेह प्रेमोल्लासपूर्वक यथास्यात्तथा विनिवेश्य सस्थाप्याऽस्य पुत्रस्य कण्ठे गलभागेऽत्युज्वलाऽतिविशदा दन्ताना 'रदना दन्ता रदा' इत्यमर । कान्ति प्रभा तया धवलदन्तकान्तिछद्मना प्रसादरूपा या मुक्ताना मौक्तिकानामावलिर्माला ता क्षिपन्निव च निदधदिव चोवाच जगाद ।

### भाषा

सर्व अङ्गो मे रोमाञ्च से युक्त उस राजा आहवमल्ल देव ने अपने पुत्र विक्रमाङ्क देव को प्रेम पूर्वक अपनी गोद मे बैठाकर और उसके गले मे अपनी श्वेत दन्तकान्ति के मिष से मानो प्रेम से सर्मपित मोतियो की माला को पहनाते हुए, कहा ।

**भाग्यैः प्रभूतैर्भगवानसौ मे सत्यं भवानीदयितः प्रसन्नः ।**
**चालुक्यगोत्रस्य विभूषणं यत् पुत्रं प्रसादीकृतवान्भवन्तम् ॥४४॥**

### अन्वयः

असौ भगवान् भवानीदयितः मे प्रभूतैः भाग्यैः सत्यं प्रसन्नः । यत् चालुक्यगोत्रस्य विभूषणं भवन्तं पुत्रं प्रसादीकृतवान् ।

### व्याख्या

असौ भग विद्यते यस्मिन् स भगवान् 'भग श्री काममाहात्म्यवीर्ययत्नार्क-कीर्तिषु' इत्यमर । 'भग श्री योनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यै-श्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ' । इति मेदिनी । भवान्या पार्वत्या दयितो वल्लभ 'अभीष्टेऽभीप्सित हृद्य दयित वल्लभ प्रियम्' इत्यमर । शिवो मे प्रभूतैर्बहुलैर्भाग्यैर्भागधेयै 'दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधि' इत्यमरः। सत्य ध्रुव प्रसन्न प्रीत । यद्यस्मात्कारणात् चालुक्यगोत्रस्य चालुक्यवशस्य विभूषणमलङ्कारभूत भवन्त त्वा पुत्र पुत्रत्वेन प्रसादीकृतवान् दत्तवान् । त्वत्सदृश चालुक्यवशालङ्कारभूत पुत्र प्रसादीकृत्य तेन शिवेन महाननुग्रह प्रदर्शित इति भाव । 'भवानीदयित' इति चिन्त्यम् ।

**भाषा**

पार्वती के पति भगवान् शकर मेरे बडे भाग्य से, सचमुच प्रसन्न हुए है। जिस कारण से उन्होने चालुक्य वश के भूषण स्वरूप तुम्हारे ऐसे पुत्र को देने की कृपा की है।

**एतानि निर्यान्ति वचांसि वक्त्रात् कस्यापरस्य श्रवणामृतानि।**
**मधूनि लेह्यानि सुरद्विरेफै—र्न पारिजातादपरः प्रसूते ॥४५॥**

**अन्वयः**

एतानि श्रवणामृतानि वचासि अपरस्य कस्य वक्त्रात् निर्यान्ति। सुरद्विरेफैः लेह्यानि मधूनि पारिजातात् अपरः न प्रसूते।

**व्याख्या**

एतानीमानि श्रवणयो कर्णयोरमृतान्यमृततुल्यानि कर्णामृतानि वचासि वचनानि 'व्याहार उक्तिर्लपित भाषित वचन वच' इत्यमर। त्वदपरस्य कस्य पुरुषस्य वक्त्रान्मुखान्निर्यान्ति निर्गच्छन्ति। न कस्यापि त्वदपरस्य मुखादिति भाव। सुराणा देवाना द्विरेफैर्भ्रमरै सुरलोकस्थैर्द्विरेफैरित्यर्थ। लेह्यान्यास्वादनीयानि मधूनि पुष्परसान् 'मधु मद्ये पुष्परसे क्षौद्रे' इत्यमर। पारिजाताद्देववृक्षादपरो वृक्षो न प्रसूते न जनयति। दृष्टान्तालङ्कार।

**भाषा**

कान को अमृत के समान सुख देने वाले ये वचन अन्य किसके मुख से निकल सकते है। पारिजात वृक्ष के अतिरिक्त अन्य किसी वृक्ष मे, स्वर्गलोग के भ्रमरो के आस्वाद लेने योग्य पुष्परस, नही उत्पन्न होता है।

**यस्याः कृते भूमिभृतां कुमाराः केषां न पात्रं नयविप्लवानाम्।**
**उन्मत्तमातङ्गसहस्रगुर्वी सा राज्यलक्ष्मीस्तृणवल्लघुस्ते ॥४६॥**

**अन्वयः**

यस्याः कृते भूमिभृता कुमाराः केषा नयविप्लवाना पात्रं न, सा उन्मत्तमातङ्गसहस्रगुर्वी राज्यलक्ष्मीः ते तृणवत् लघुः।

### व्याख्या

यस्या राजलक्ष्म्या कृते भूमि बिभ्रति पालयन्तीति भूमिभृतस्तेषा पृथिवी-पालाना कुमारा पुत्रा राजकुमारा इत्यर्थ । केषा नयस्य नीतेर्विप्लवा विपर्या-सास्तेषा नयविप्लवानामनीतीना पात्र भाजन न, न जाता । सा उन्मत्ता मदान्धा ये मातङ्गा गजा 'गजेऽपि नागमातङ्गौ' इत्यमर । तेषा सहस्र तद्वद्गुर्वी भारवती स्पृहणीया च राज्यलक्ष्मीस्ते त्वदर्थ तृणवल्लघुरल्पीयसी तुच्छा च । अन्येराजकुमारा राज्यलक्ष्मी सर्वतोऽधिका मन्यमानास्तदर्थमनीति-माचरन्ति परन्तु त्वत्कृते सा तुच्छेति भाव ।

### भाषा

जिस राज्यलक्ष्मी के लिये अन्य राजाओ के पुत्र गण क्या २ अनीति नही कर डालते वह सहस्रो मदोन्मत्त हाथियो से भी भारी तथा बहुमूल्य राज्यलक्ष्मी तुम्हारे लिये तृण के समान हलकी है अर्थात् तुच्छ है ।

**लङ्कासमीपाम्बुधिनिर्गतेयं रक्तासवैस्तृप्यति राक्षसीव ।**
**लक्ष्मीरसौ त्वद्भुजदण्डबद्धा पात्रं भवित्री विनयव्रतस्य ॥४७॥**

### अन्वयः

इयं लङ्कासमीपाम्बुधिनिर्गता लक्ष्मीः राक्षसी इव रक्तासवैः तृप्यति । असौ त्वद्भुजदण्डबद्धा सती विनयव्रतस्य पात्रं भवित्री ।

### व्याख्या

इय पूर्ववर्णिता लङ्काया रावणनगर्या समीपे योऽम्बुधिस्समुद्रस्तस्मान्निर्गता जाता लक्ष्मी श्री राक्षसीव रक्तानि रुधिराण्येवाऽसवा मद्यानि तैस्तृप्यति तृप्तिमाप्नोति । यथा लङ्काया जाता काचिद्राक्षसी रुधिरपानेनैव तप्यति तथैव लङ्कानिकटस्थसमुद्रजा लक्ष्मीरपि रुधिरप्रवाहेण तृप्यतीति भाव । असौ लक्ष्मीस्त्वद्भुजावेव दण्डौ तयोर्बद्धा त्वद्भुजयोर्दण्डेन शासनेन वा बद्धा सती विनयव्रतस्य विनम्रताशिक्षाया. पात्रमास्पद भवित्री भविष्यति । लोके दण्डेनैव दुर्विनीताना शासन भवति । दुर्विनीता विनीताश्च सपाद्यन्ते, क्रूरत्वञ्च विहन्यते, सुस्वभावश्च सस्थाप्यते इति भाव ।

**भाषा**

लङ्का के पास के समुद्र मे से उत्पन्न यह लक्ष्मी, राक्षसी के समान रक्त रूपी सुरा से तृप्त होती है। परन्तु यह तुम्हारे भुजदण्ड से बँध जाने पर विनम्र हो जाएगी। अर्थात् लङ्का मे उत्पन्न राक्षसी जिस प्रकार रक्त पान कर तृप्त होती है वैसे ही यह लका के समीपवर्ती समुद्र से उत्पन्न होने वाली लक्ष्मी रक्त प्रवाह से तृप्त होती है। यह लक्ष्मी तुम्हारे भुजाओ के दण्ड से दण्डित होकर या तुम्हारी भुजा के आश्रय मे आने पर भविष्य में नम्र हो जाएगी।

**जानामि मार्गं भवतोपदिष्टं ममापि चालुक्यकुले प्रसूतिः।**
**किन्त्वत्र लक्ष्मीर्गुणबन्धहीने निसर्गलोला कथमेति दार्ढ्यम् ॥४८॥**

**अन्वयः**

भवता उपदिष्टं मार्गं जानामि। (यतः)मम अपि चालुक्यकुले प्रसूतिः। किन्तु गुणबन्धहीने अत्र निसर्गलोला लक्ष्मीः कथ दार्ढ्यम् एति।

**व्याख्या**

भवतोपदिष्ट कथित मार्गं नयवर्त्म जानामि वेद्मि। यतो ममाऽपि चालुक्यवशे नीतिमार्गावलम्बिनि चालुक्यनृपाणा कुले प्रसूतिरुत्पत्ति। अहमपि त्वत्सदृशो नीतिमार्गकुशले चालुक्यवशे जात इति त्वदुक्त सर्वं नयवर्त्म जानामीतिभाव। किन्तु परन्तु गुणाना शौर्यादीना पक्षे रज्जूना बन्ध सघ पक्षे ग्रन्थिस्तेन हीने रहितेऽत्र अस्मिन् ज्येष्ठे पुत्रे सोमदेवे निसर्गात्स्वभावादेव लोला चञ्चलाऽस्थिरा लक्ष्मी राज्यश्री कथ केन प्रकारेण दार्ढ्यं दृढता स्थिरतामित्यर्थ। एति प्राप्नोति समुपयास्यतीति भाव। दृढबन्धनेन बद्ध एव पदार्थो निश्चलो भवतीति नियम।

**भाषा**

तुमने जो नीतिमार्ग दिखाया है उसे मै भी जानता हूँ। क्यो कि मेरा भी जन्म नीति कुशल चालुक्य राजाओ के वश मे ही हुआ है। परन्तु शौर्यादिगुणो के सघ से रहित अथवा बधन योग्य ग्रथियुक्त रस्सी से रहित मेरे ज्येष्ठपुत्र सोमदेव के युवराज पद पर बैठने पर यह स्वभावत चञ्चला राज्यलक्ष्मी इससे

कैसे दृढता पूर्वक बाधी जा सकती है अर्थात् बिना बँधे कैसे अपनी चञ्चलता छोड कर साथ रह सकती है ।

**किञ्चिन्न मे दूषणमस्ति पृच्छ दैवज्ञचक्रं यदि कौतुकं ते ।**
**एतस्य साम्राज्यममन्यमानाः पापग्रहा एव गृहीतपापाः ॥४९॥**

**अन्वयः**

मे न किञ्चित् दूषणम् अस्ति । यदिते कौतुकं (तर्हि) दैवज्ञचक्रं पृच्छ । पापग्रहाः एव गृहीतपापाः (सन्तः) एतस्य साम्राज्यम् अमन्यमानाः (सन्ति) ।

**व्याख्या**

मे ममाऽत्र न किञ्चिद्दूषण न कोऽपि दोषोऽस्ति । नाऽहं सोमदेवस्य यौवराज्यदानप्रतिबन्धक इति भाव । यदि ते तव कौतुक कुतूहलम 'कौतूहल कौतुकञ्च कुतुकञ्च कुतूहलम्' इत्यमर । ज्ञातु महती समुत्कण्ठा भवेदित्यर्थ । तर्हि दैव जानन्तीति दैवज्ञा ज्योतिषिका 'सावत्सरो ज्योतिषिको दैवज्ञगणकावपि' इत्यमर । तेषा चक्र समूह पृच्छ । पापग्रहा क्रूरग्रहा अनिष्टग्रहा इत्यर्थ । गृहीतानि पापानि दुष्कृतजन्यादृष्टानि यैस्ते गृहीतपापा सन्त एतस्य सोमदेवस्य साम्राज्य सम्राट्पदेऽधिरोहममन्यमाना सन्ति न स्वीकुर्वन्ति न समर्थयन्तीति भाव ।

**भाषा**

सोमदेव को युवराज न बनाने मे मेरा कोई दोष नही है । यदि तुमको यह जानने की उत्कट इच्छा हो तो ज्योतिषियो से पूछो । (तब तुमको विदित होगा कि) सोमदेव के पापग्रह अनिष्ट कारक होकर इसका साम्राज्य होने मे प्रतिबन्धक है ।

**साम्राज्यलक्ष्मीदयितं जगाद त्वामेव देवोऽपि मृगाङ्कमौलिः ।**
**लोकस्तुतां मे बहुपुत्रतां तु पुत्रद्वयेन व्यतनोत्परेण ॥५०॥**

**अन्वयः**

मृगाङ्कमौलिः देवः अपि त्वाम् एव साम्राज्यलक्ष्मीदयितं जगाद । लोकस्तुता मे बहुपुत्रता तु परेण पुत्रद्वयेन व्यतनोत् ।

### व्याख्या

मृगाङ्कश्चन्द्र 'अब्जो जैवातृक सोमो ग्लौर्मृगाङ्क कलानिधि' इत्यमर । मौलौ मस्तके यस्य स मृगाङ्कमौलिश्चन्द्रमौलिर्देव शिवोऽपि त्वामेव भवन्तमेव साम्राज्यलक्ष्म्या साम्राज्यश्रियो दयित वल्लभ 'दयित वल्लभ प्रियम्' इत्यमर । जगादोवाच कथितवानित्यर्थ । लोकैर्जनैं स्तुता प्रशसिता जनप्रसिद्धामित्यर्थ । मे मम बहुपुत्रतामनेकतनयत्व तु परेण त्वदतिरिक्तेन पुत्रद्वयेन व्यतनोत् कृतवान् ।

### भाषा

भगवान् शङ्कर ने भी तुम्ही को साम्राज्यलक्ष्मी का प्रिय बताया था । ससार मे प्रशसित अनेक पुत्रवत्ता को शकर ने मुझे अन्य दो पुत्रो को देकर पूर्ण कर दिया ।

**तन्मे प्रमाणीकुरु वत्स वाक्यं चालुक्यलक्ष्मीश्चिरमुन्नतास्तु ।**
**निर्मत्सराः क्षोणिभृतः स्तुवन्तु ममाकलङ्कं गुणपक्षपातम् ॥५१॥**

### अन्वयः

हे वत्स ! तत् मे वाक्यं प्रमाणीकुरु । चालुक्यलक्ष्मीः चिरम् उन्नता अस्तु । निर्मत्सराः क्षोणिभृतः मम अकलङ्कं गुणपक्षपात स्तुवन्तु ।

### व्याख्या

हे वत्स पुत्र तत्तस्मात्कारणान्मे मम वाक्य वचन प्रमाणीकुरु स्वीकुरुष्व, यौवराज्य गृहाणेत्यर्थ । चालुक्यवशस्य लक्ष्मी राज्यश्रीश्चिर चिरकाल-मुन्नता वृद्धिमभ्युपेताऽस्तु । मत्सरेणाऽन्यशुभद्वेषेण परसम्पत्त्यसहनेनेत्यर्थ । 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमर । रहिता हीना क्षोणिभृतो राजानो ममाऽकलङ्क दोषरहित गुणेषु शौर्यादिषु पक्षपात गुणैकरागमित्यर्थ । स्तुवन्तु प्रशसन्तु ।

### भाषा

हे पुत्र ! इसलिये मेरी बात को मानो अर्थात् युवराज पद को ग्रहण करो (जिससे) चालुक्यवश की राज्यलक्ष्मी चिरकाल तक उन्नत हो। मात्सर्यहीन अन्य राजा लोग मेरे अनिन्दनीय, गुणो के पक्षपात की प्रशसा करे।

**श्रुत्वेति वाक्यं पितुरादरेण जगाद भूयो विहसन्कुमारः ।**
**मद्भाग्यदोषेण दुराग्रहोऽयं तातस्य मत्कीर्तिकलङ्कहेतुः ॥५२॥**

**अन्वयः**

कुमारः पितुः इति वाक्यम् आदरेण श्रुत्वा विहसन् (सन) भूयः जगाद । अयं तातस्य दुराग्रहः मद्भाग्यदोषेण मत्कीर्तिकलङ्कहेतुः (अस्ति)

**व्याख्या**

कुमारो राजकुमारो विक्रमाङ्कदेव पितुर्जनकस्याऽऽहवमल्लदेवस्येतीत्थ वाक्य वचनमादरेण समादरेण श्रुत्वा निशम्य विहसन् हास्य कुर्वन्सन् भूय पुनरपि जगादोक्तवान् । अय पूर्वोक्त तातस्य जनकस्य भवतो दुराग्रहो दुरभिनिवेशो मह्य राज्यलक्ष्मीसमर्पणरूपाभिनिवेशो मम भाग्यस्य दिष्टस्य 'दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधि' इत्यमर । दोषेण विपर्यासेन मम कीर्तेर्यशस कलङ्कस्य मलिनीकरणस्य हेतु कारणमस्ति । सत्यपि ज्येष्ठे भ्रातरि मम दुर्भाग्यजनितेन भवतो दुराग्रहेण मे यौवराज्यग्रहण मत्कीर्तिमलिनीकरणकारणमेव भविष्यतीति भाव ।

**भाषा**

राजा की उपर्युक्त बातो को आदर पूर्वक सुनकर राजकुमार विक्रमाङ्कदेव ने हँसते हुए फिर से कहा कि यह पिता जी का दुराग्रह, मेरे दुर्भाग्य से, मेरी कीर्ति मे कलङ्क लगने का कारण है ।

**यदि ग्रहास्तस्य न राज्यदूताः कारुण्यशून्यः शशिशेखरो वा ।**
**तैरेव तातो भविता कृतार्थ-स्तद्वार्यतां कीर्तिविपर्ययो मे ॥५३॥**

**अन्वयः**

यदि तस्य ग्रहाः राज्यदूताः न, वा शशिशेखरः कारुण्यशून्यः (तथापि) तैः एव तातः कृतार्थः भविता । तत् मे कीर्तिविपर्ययः वार्यताम् ।

**व्याख्या**

यदि तस्य सोमदेवस्य ग्रहा जन्माङ्गस्थितग्रहा 'ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैहिकेयोपरागयो' इति विश्व । राज्यस्य

साम्राज्यस्य दूता सदेशहरा 'स्यात्सदेशहरो दूतो दूत्य तद्भावकर्मणि' इत्यमर । न, न सन्ति । तद्राज्यसूचका न सन्तीति भाव । अथवा शशिशेखरश्चन्द्र-मौलि शिव कारूण्येन दयया शून्यो रहित । यदि शिव स्वदयया तस्मै राज्यसुखभोग न ददाति चेदिति भाव । तथापि तैरेव ग्रहै राज्यसुखभोगास-सूचकै रेव तात पिता भवान् कृतार्थ कृतकार्यस्सफलमनोरथ इत्यर्थ । भविता भविष्यति । तत्तस्मात्कारणान्मे मम कीर्तिविपर्ययो दुर्यशो वार्यतामपयशो न विधातव्यमित्यर्थ ।

### भाषा

यद्यपि सोमदेव के ग्रह उसके राज्योपभोग सूचक नही है या यो कहे कि भगवान् शकर की उसपर दया नही है । तो भी उन्ही ग्रहो से आप की मनोरथ सिद्धि होगी । इसलिये मेरे अपयश को न होने दीजिये ।

**अशक्तिरस्यास्ति न दिग्जयेषु यस्यानुजोऽहं शिरसा धृताज्ञः ।**
**स्थानस्थ एवाद्भुतकार्यकारी बिभर्तु रक्षामणिना समत्वम् ॥५४॥**

### अन्वयः

यस्य शिरसा धृताज्ञः अहम् अनुजः अस्य दिग्जयेषु अशक्तिः न अस्ति । स्थानस्थः एव अद्भुतकर्मकारी (सन्) रक्षामणिना समत्वं बिभर्तु ।

### व्याख्या

यस्य सोमदेवस्य शिरसा नतमस्तकेन धृता सश्रिता आज्ञाऽऽदेशो येन सोऽह-मनुज कनीयान्भ्राताऽस्मि । अस्य मम भ्रातुस्सोमदेवस्य दिशा जयो विजय-स्तेषु दिग्विजयकर्मण्यशक्तिरसामर्थ्यं नाऽस्ति न सभवति । स स्थाने तिष्ठतीति स्थानस्थ स्वस्थाने स्थित एवाऽद्भुतान्याश्चर्यकराणि कर्माणि करोतीत्यद्भुत-कर्मकारी सर्वसाधारणजनासाध्याश्चर्यजनककृत्यससाधकस्सन् रक्षामणिना सर्व-रक्षणक्षमरूपाचिन्त्यप्रभावशालिना मणिना सह समत्व सादृश्य बिभर्त्वेतु । यथा रक्षामणि स्वस्थानस्थितस्सन् यस्य शरीरे तिष्ठति तस्य सर्वतो भावेन रक्षण करोति तथैव मे भ्राता स्वस्थानस्थित सन्मत्साहाय्येनाऽद्भुतकर्मकारी भूत्वा सकलजनसरक्षको भवत्विति भाव ।

भाषा

आज्ञा का शिरसा पालन करने वाला जिसका मै छोटा भाई हूँ उसके दिग्विजय मे असामर्थ्य सम्भावित नही हो सकता है। वह अपने स्थान पर ही रहकर आश्चर्यजनक काम करता हुआ रक्षामणि की समानता को प्राप्त हो। अर्थात् रक्षामणि जहाँ बधा रहता है वही रहकर सम्पूर्ण विघ्नो को अपने प्रभाव से दूरकर सब प्रकार का आश्चर्यजनक काम कर मनुष्य की रक्षा करता है वैसे ही सोमदेव अपने स्थान पर ही रहकर मेरी सहायता से आश्चर्य-जनक कार्य करने के यश का भागी होकर प्रजा की रक्षा करे।

**इत्यादिभिश्चित्रतरैर्वचोभिः कृत्वा पितुः कौतुकमुत्सवञ्च।**
**अकारयज्ज्येष्ठमुदारशीलः स यौवराज्यप्रतिपत्तिपात्रम् ।।५५।।**

अन्वयः

**उदारशीलः सः इत्यादिभिः चित्रतरैः वचोभिः पितुः कौतुकम् उत्सवं च कृत्वा ज्येष्ठ यौवराज्यप्रतिपत्तिपात्रम् अकारयत्।**

व्याख्या

**उदारमसकुचित शील स्वभावो यस्य स उदारशील उदारस्वभाव स राजपुत्रो विक्रमाङ्कदेव इत्यादिभिरेवम्भूतैश्चित्रतरैर्विचित्रैर्वचोभिर्वाक्यै पितुराह-वमल्लदेवस्य कौतुक कौतूहलमुत्सवमानन्दावसरञ्च 'उत्सेकामर्षयोरिच्छाप्रसरे मह उत्सव' इत्यमर। कृत्वा जनयित्वा ज्येष्ठ ज्येष्ठभ्रातर सोमदेव यौव-राज्यस्य युवराजपदस्य प्रतिपत्ति स्वीकृतिस्तस्य पात्र स्थानमकारयत् कारित-वान्। स्ववच प्रसरैर्ज्येष्ठभ्रातुर्यौवराज्यपदप्रदानस्वीकृति लब्धवानिति भाव।**

भाषा

उदार स्वभाव वाले उस राजपुत्र विक्रमाङ्कदेव ने ऐसी २ अनेक आश्चर्य-जनक बाते कहकर अपने पिता आहवमल्लदेव राजा के कुतूहल और आनन्द के अवसर को उत्पन्न कर, अपने बडे भाई सोमदेव को युवराज पद पर नियत करने की स्वीकृति कराली।

**स्वयं समाधास्यति चन्द्रमौलि-रम्लानकीर्तेरभिवाञ्छितं मे।**
**कार्यं विचार्येति सुतोपदिष्टं स सर्वमुर्वीपतिरन्वतिष्ठत् ।।५६।।**

**अन्वयः**

चन्द्रमौलिः स्वयम् अम्लानकीर्तेः मे अभिवाञ्छितं समाधास्यति इति विचार्य सः उर्वीपतिः सुतोपदिष्टं सर्वं कार्यम् अन्वतिष्ठत् ।

**व्याख्या**

चन्द्रमौलि शशिशेखर शिवस्स्वयमेवाऽम्लाना निष्कलङ्का कीर्तिर्यशो यस्य तस्य मे ममाऽभिवाञ्छितमीप्सित समाधास्यति पूरयिष्यतीतीत्थ विचार्य निश्चित्य स प्रसिद्ध उर्व्या वसुधराया 'सर्वसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमर । पति स्वमी राजाऽऽहवमल्लदेव सुतेन पुत्रेणोपदिष्ट समन्वित सर्व पूर्ण कार्य यौवराज्यप्रदानकार्यमन्वतिष्ठच्चकार ।

**भाषा**

चन्द्रशेखर भगवान् शकर, स्वय ही, निष्कलङ्क कीर्तिवाले मेरी अभिष्ट सिद्धि करेगे, ऐसा विचार करके उस राजा आहवमल्लदेव ने पुत्र द्वारा कथित, यौवराज्य प्रदान रूप कार्य को पूर्णता से सम्पन्न किया ।

**ज्येष्ठे कृतेऽपि प्रतिपत्तिपात्रे तमेव लक्ष्मीरनुमन्यते स्म ।**
**पूरेण निम्ने निहिताऽपि सिन्धु-रपेक्षते सागरमार्गमेव ॥५७॥**

**अन्वयः**

ज्येष्ठे प्रतिपत्तिपात्रे कृते अपि लक्ष्मीः तम् एव अनुमन्यते स्म । पूरेण निम्ने निहिता अपि सिन्धुः सागरमार्गम् एव अपेक्षते ।

**व्याख्या**

ज्येष्ठे ज्येष्ठभ्रातरि सोमदेवे प्रतिपत्तिपात्रे यौवराज्यदानपात्रे कृतेऽपि सम्पादितेऽपि लक्ष्मी राज्यश्रीस्तमेव विक्रमाङ्कदेवमेवाऽनुमन्यते स्म तस्मिन्नेव सन्मान प्रणयिताञ्च प्रदर्शयति स्मेति भाव । पूरेण जलप्रवाहेण निम्ने नीचस्थाने गर्ते वा निहिता प्रस्थापिताऽपि सिन्धुर्नदी सागरस्य समुद्रस्य मार्गमेव पन्थानमेवाऽपेक्षते प्रतीक्षते । दृष्टान्तालङ्कार ।

**भाषा**

बडे भाई सोमदेव को युवराज पद पर आरूढकर देने पर भी राज्य श्री विक्रमाङ्कदेव के ही अनुकूल थी । जल प्रवाह के कारण नीचे स्थान पर भी

बहने वाली नदी, समुद्र मे जा मिलने की ही अपेक्षा रखती है। अर्थात् सिफारिश से गुणहीन सोमदेव के युवराज पद पर स्थित होने पर भी राज्य-श्री विक्रमाङ्कदेव को ही अपनाती थी क्योकि जल प्रवाह से नीच स्थान मे बहने वाली नदी समुद्र मे ही मिलने की अपेक्षा रखती है।

**देवोपदेशाद्गुणदर्शनाच्च स एव चित्ते नृपतेरुवास।**
**यथा स्तुतं रत्नपरीक्षकेण दृष्टप्रभावं च महार्हरत्नम् ॥५८॥**

**अन्वयः**

**सः एव देवोपदेशात् गुणदर्शनात् च नृपतेः चित्ते उवास। यथा रत्नपरीक्षकेण स्तुतं दृष्टप्रभावं च महार्हरत्नम्।**

**व्याख्या**

**स एव विक्रमाङ्कदेव एव देवोपदेशादाऽऽकाशवाण्या श्रवणात् गुणदर्शनाद्वि-क्रमाङ्कदेवे शौर्यादिगुणानामनुभवाच्च नृपते राज्ञश्चित्ते मनसि 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर। उवास स्थितिं चकार। यथा रत्न-परीक्षकेण वैकटिकेन स्तुत प्रशसित दृष्टोऽनुभूत प्रभाव सामर्थ्यं यस्य तत् दृष्टप्रभावमनुभूतसामर्थ्यञ्च महार्हरत्न महर्घं रत्नम्। वैकटिकेन प्रशसित-मनुभूतसामर्थ्य च बहुमूल्य रत्न राज्ञो हृदये वक्ष स्थले धार्यते तथैवाऽऽकाशवाण्या, प्रशसितोऽनुभूतगुणश्च विक्रमाङ्कदेवो राज्ञो हृदये स्थित इति भाव।**

**भाषा**

जौहरी द्वारा प्रशसित और अनुभूत सामर्थ्य वाले बहुमूल्य रत्न के समान आकाशवाणी द्वारा प्रशसित और अनुभव मे आये हुए उसके गुणो से विक्रमाङ्क देव ने राजा आहवमल्ल के हृदय मे स्थान प्राप्त कर लिया। अर्थात् जिस प्रकार जौहरी द्वारा प्रशसित और अनुभव मे आए हुए उसके सामर्थ्य से बहुमूल्य रत्न को राजा हृदय पर धारण कर लेता है वैसे ही आकाशवाणी से प्रशसित और अनुभव मे आए हुए उसके गुणो से विक्रमाङ्क देव ने राजा के हृदय मे स्थान प्राप्त कर लिया।

**स यौवराज्यश्रियमाश्रितस्य ज्येष्ठस्य राज्ये च पितुः स्थितस्य।**
**कार्यं द्वयोरप्यखिलं बभार भूशेषयोर्भारमिवादिकूर्मः ॥५९॥**

**अन्वयः**

सः यौवराज्यश्रियम् आश्रितस्य ज्येष्ठस्य, राज्ये स्थितस्य पितुः च द्वयोः अपि अखिलं कार्यम्, आदिकूर्मः भूशेषयोः भारम् इव बभार।

**व्याख्या**

स विक्रमाङ्कदेवो यौवराज्यश्रिय यौवराज्यलक्ष्मीमाश्रितस्य समास्थितस्य ज्येष्ठस्य ज्येष्ठभ्रातु सोमदेवस्य, राज्ये राज्यसिंहासने स्थितस्य वर्तमानस्य पितुस्तातस्य च द्वयोरुभयोरप्यखिल समस्त 'विश्वमशेष कृत्स्न समस्तनिखिलाखिलानि नि शेषम्' इत्यमर । कार्यं युवराजप्रयक्त राजप्रयुक्तञ्च कार्यमित्यर्थ । आदिकूर्मो विष्णो प्रथमावताररूप कच्छपो भू पृथ्वी शेषो नागराजोऽनन्तस्तयोर्भारमिव बभार धारयामास। यथाऽऽदिकच्छपो भुवस्तद्धारकस्य नागराजस्याऽपि भार दधाति तथैव विक्रमाङ्कदेव स्वज्येष्ठभ्रातुस्स्वपितुश्च कार्यभारमवहदिति भाव ।

**भाषा**

भगवान् विष्णु का आदि अवतार कच्छप जैसे पृथ्वी और पृथ्वी का भार उठाने वाले शेषराज दोनो का बोझ उठाये रहता है उसी प्रकार विक्रमाङ्कदेव ने युवराज पद पर स्थित अपने बडे भाई तथा राजगद्दी पर विराजित अपने पिता इन दोनो का सम्पूर्ण कार्य भार अपने ऊपर ले लिया।

**आज्ञापयामास च वन्दिताज्ञं तमेव सर्वत्र रणोत्सवेषु।**
**पपौ च भूपस्तदुपार्जितानि यशोवतंसानि जयामृतानि ॥६०॥**

**अन्वयः**

सः भूपः वन्दिताज्ञं तम् एव सर्वत्र रणोत्सवेषु आज्ञापयामास, तदुपार्जितानि यशोवतंसानि जयामृतानि च पपौ।

**व्याख्या**

स भूपो राजाऽऽहवमल्लदेवो वन्दिता सम्मानिताऽऽज्ञा येन त सम्मानिताज्ञ त विक्रमाङ्कदेवमेव सर्वत्र रणोत्सवेषु युद्धोत्सवेषु गमनार्थमाज्ञापयामास नियोजितवान्। तेन विक्रमाङ्कदेवेनोपार्जितानि समानीतानि यश कीर्तिरेवाऽवतसो भूषण येषा तानि। एतेन यशस पुष्पसाम्य गम्यते। जया विजया एवाऽ-

मृतानि पीयूषाणि तानि च पपौ पिबति स्म । युद्धे सर्वत्र विजयप्राप्त्या तदीयकीर्ति निशम्य परमतृप्तोऽभूदिति भाव । अत्र जयस्य अमृतत्वेन रूपक शब्दोपात्त, यशसि च पुष्पारोपोऽर्थलभ्य इति एकदेशविवर्ति-रूपकमलङ्कार ।

### भाषा

राजा आहवमल्लदेव सर्वत्र सग्रामोत्सवो मे आज्ञाकारी विक्रमाङ्कदेव को ही जाने की आज्ञा देता था और उसके द्वारा उपार्जित यश से सुशोभित विजयरूपी अमृतो का पान किया करता था ।

**तत्कुम्भिकुम्भस्थलचीनपिष्ट-विपाटलो वारिनिधिर्बभासे ।**
**आपूरितश्चोलबलक्षयोत्थ-रक्तापगानामिव मण्डलेन ॥६१॥**

### अन्वयः

तत्कुम्भिकुम्भस्थलचीनपिष्टविपाटलः वारिनिधिः चोलबलक्षयोत्थरक्तापगाना मण्डलेन आपूरितः इव बभासे ।

### व्याख्या

तस्य विक्रमाङ्कदेवस्य कुम्भिनो दन्तिनस्तेषा कुम्भस्थलानि गण्डस्थलानि तेषु यच्चीनपिष्ट चीनदेशभव चूर्णं सिन्दूर तेन विपाटलो रक्तवर्णो वारिनिधिर्जलनिधिस्समुद्रश्चोलाना चोलनृपाणा बल सैन्य 'वरूथिनी बल सैन्य चक्र चानीकमस्त्रियाम्' इत्यमर । तेषा क्षयेण नाशेनोत्था जाता रक्तस्य रुधिरस्याऽऽपगा नद्य "अपा समूहो आप तेन गच्छतीत्यापगा'। समूहे अण्" । तासा मण्डलेन समूहेनाऽऽपूरितस्सवलित इव बभासे द्युतिं सप्राप। लोके सिन्दूरेण गजगण्डस्थलानि शोभार्थ लिप्यन्ते। उत्प्रेक्षालङ्कार ।

### भाषा

विक्रमाङ्कदेव के हाथियो के गण्डस्थलो पर लगाये हुए सिन्दूर से सिन्दुरिया रग का समुद्र मानो चोलदेशीय राजाओ की सेना के काटे जाने से उत्पन्न खून की नदियो के समूह से भरा भासित होता था ।

**चालुक्यरामे हरिवाहिनीभिः सहागते तत्र तटीं पयोधिः ।**
**प्रादुर्भवन्मौक्तिकशुक्तिभङ्ग्या भयेन दन्तानिव निश्चकर्ष ॥६२॥**

### अन्वयः

चालुक्यरामे तत्र हरिवाहिनीभिः सह तटीम् आगते (सति) पयोधिः प्रादुर्भवन्मौक्तिकशुक्तिभङ्गया भयेन दन्तान् निश्चकर्ष इव ।

### व्याख्या

चालुक्यस्य चालुक्यवंशस्य रामे रामसदृशपराक्रमशालिनि तत्र कुमारे विक्रमाङ्कदेवे हरीणामश्वाना रामपक्षे कपीना 'यमानिलेन्द्रचन्द्रार्कविष्णुसिहा-शुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमर । वाहिन्य सेनास्ताभि सह तटी समुद्रवेलामागते प्राप्ते सति पयोधि समुद्र प्रादुर्भवन्ति समुद्भवन्ति मौक्तिकानि मुक्ता यासु ताश्शुक्तयो मुक्तास्फोटा 'मुक्तास्फोट स्त्रिया शुक्ति' इत्यमर । तासा भङ्गचा व्याजेन भयेन भीत्या दन्तान् रदान् 'रदना दशना दन्ता रदा' इत्यमर । निश्चकर्षेव निष्कृष्टवानिव । भयभीता दन्तान् प्रदर्श्य क्षमायाचन कुर्वन्ति तथैव शुक्तिव्याजेन दन्तान् प्रदर्श्य भयभीत-स्समुद्र क्षमायाचनमकरोदिति भाव । सापन्हवोत्प्रेक्षाऽलङ्कार ।

### भाषा

चालुक्यवशीय राम स्वरूप उस कुमार विक्रमाङ्कदेव के, घोडे की पलटन के साथ, राम के पक्ष मे—बन्दरो की सेना के साथ, समुद्र के किनारे आने पर मोतियो को उत्पन्न करने वाली ( तट पर पडी हुई ) सीपो के मिष से मानो समुद्र ने भय से दात चियार दिये ।

**तस्मिन्प्रविष्टे मलयाद्रिकुञ्जं तद्वाहिनीकुञ्जरकर्णतालैः ।**
**वियोगिनीनामुपतापनाय चैत्रं विना चन्दनवायुरासीत् ॥६३॥**

### अन्वयः

तस्मिन् मलयाद्रिकुञ्जं प्रविष्टे सति तद्वाहिनीकुञ्जरकर्णतालैः वियोगि-नीनाम् उपतापनाय चैत्रं विना चन्दनवायुः आसीत् ।

### व्याख्या

तस्मिन् विक्रमाङ्कदेवे मलयस्य तन्नामकस्याद्रे पर्वतस्य मलयाचलस्य कुञ्जं निकुञ्ज प्रविष्टे सति तस्य वाहिन्या सेनाया ये कुञ्जरा गजास्तेषा कर्णरूप-तालैस्तालवृन्तैर्वियोगिनीना विरहिणीनामुपतापनाय पीडनाय चैत्र मधुमास

'स्याञ्चैत्रे चैत्रिको मधु' इत्यमर । विना विनैव चन्दनस्य चन्दनवृक्षस्य वायुः पवनश्चन्दनवायुर्दक्षिणानिल इत्यर्थ । आसीत् प्रादुर्बभूव । तद्वाहिन्यामसख्याता गजा आसन्निति भाव । अत्र चैत्र विना चन्दनवायुप्रवृत्तेर्विभावनालङ्कार. । "विभावना विना हेतु कार्योत्पत्तिर्यदुच्यते ।"

### भाषा

विक्रमाङ्कदेव के मलयाचल के कुञ्ज मे प्रविष्ट होने पर उसकी सेना के हाथियो के कानरूपी ताड के पखो से, चैत का महीना न होने पर भी, विरहिणियो को सन्तप्त करने वाला, चन्दन की सुगन्ध से युक्त दक्षिणानिल बहने लगा ।

**अदर्शयत्कामपि राजहंस-लीलामसौ कुन्तलराजसूनुः ।**
**निस्त्रिंशधाराजलसङ्गतं यद् द्विषां यशः क्षीरमिवाचकर्ष ॥६४॥**

### अन्वयः

असौ कुन्तललराजसूनुः काम् अपि राजहसलीलाम् अदर्शयत् । यत् निस्त्रिशधाराजलसङ्गतं द्विषा यशः क्षीरम् इव आचकर्ष ।

### व्याख्या

असौ कुन्तलराजस्य कुन्तलदेशाधिपस्य सूनु पुत्रो विक्रमाङ्कदेवो कामपि विचित्रा राजहसस्य राजश्रेष्ठस्य हसपक्षिणो वा लीला क्रीडाविलासमदर्शयत् प्रकटयाम्बभूव । 'राजहसास्तु ते चञ्चुचरणैर्लोहितैस्सिता' इत्यमर यद्यस्मात्कारणात् निर्गतास्त्रिशद्भ्योऽङ्गुलिभ्य इति निस्त्रिश खङ्ग 'तूण्या खङ्गे तु निस्त्रिश चन्द्रहासासिरिष्टय' इत्यमर । तस्य धाराजलेन तीक्ष्णाग्रभागजलेन सङ्गत मिश्रित द्विषा शत्रूणा 'द्विड्विपक्षा हितामित्रदस्युशात्रवशत्रव' इत्यमर । यश कीर्ति क्षीरमिव दुग्धमिवाऽऽचकर्ष पृथक् कृतवान् । हसो मिश्रितनीरक्षीरयो क्षीर पिबति नीर त्यजतीति प्रसिद्धि । कुन्तलराजपुत्रोऽपि स्वखङ्गधाराजलमिश्रितशत्रुयशसो यश पृथक्त्वेन स्वीचकारेति भाव । श्लेषानुप्राणितातिशयोक्तिर्निदर्शना वाऽलङ्कार. ।

### भाषा

उस कुन्तलदेश के राजपुत्र ने श्रेष्ठराजा की या राजहस पक्षी की एक विलक्षण लीला दिखाई । जिस प्रकार राजहस पानी और दूध मिला देने पर पानी से

दूध को अलग कर पी जाते है उसी प्रकार इस राजहस ने खड्ग की धार के पानी से मिले हुए शत्रुओ के यश को दूध के समान अलग कर अपनी ओर खीच लिया अर्थात् स्वीकार कर लिया ।

**तस्मिन् समाकर्षति चापदण्डं वीरप्रकाण्डे विजयोद्यमेषु ।**
**मुखान्यभूवन् द्रविडाङ्गनाना-मुष्णोष्णनिःश्वासविधूसराणि ॥६५॥**

**अन्वयः**

वीरप्रकाण्डे तस्मिन् विजयोद्यमेषु चापदण्ड समाकर्षति (सति) द्रविडाङ्गनानां मुखानि उष्णोष्णनिःश्वासविधूसराणि अभूवन् ।

**व्याख्या**

प्रशस्तो वीरो वीरप्रकाण्डस्तस्मिन् 'मतल्लिकामर्चचिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमर । तस्मिन्विक्रमाङ्कदेवे विजयोद्यमेषु विजययात्रासु चापदण्ड धनुर्दण्ड समाकर्षति सति द्रविडदेशीयाङ्गनाना चोलदेशीयनारीणां चोलीनामित्यर्थ । मुखानि वदनान्युष्णादप्युष्ण इत्युष्णोष्णो नि श्वास शोकजनितोच्छ्वासस्तेन विधूसराणीषत्पाण्डूनि कान्तिरहितानीत्यर्थ । 'ईषत्पाण्डुस्तु धूसर' इत्यमर । अभूवन् जातानि । अत्र चापदण्डाकर्षणमात्रेण मुखाना विधूसरत्वोक्त्याऽतिशयोक्तिरलङ्कार ।

**भाषा**

युद्ध यात्राओ मे वीरो मे श्रेष्ठ उस विक्रमाङ्कदेव के धनुष तानने पर चोल देश की नारियो के मुख, गरम २ उच्छ्वास लेने से कुछ सफेद पड जाते थे अर्थात् कान्ति हीन हो जाते थे ।

**तस्मिन्विरुद्धे गिरिनिर्झराम्बु श्रमातिरेकात्पशुवन्निपीय ।**
**मातेति चोलः क्षितिमादिभर्ता कृत्वा स्तनास्वादमिवोत्ससर्ज ॥६६॥**

**अन्वय.**

तस्मिन् विरुद्धे (सति) आदिभर्ता चोलः श्रमातिरेकात् गिरिनिर्झराम्बु स्तनास्वादम् इव पशुवत् निपीय क्षिति माता इति कृत्वा उत्ससर्ज ।

### व्याख्या

तस्मिन्विक्रमाङ्कदेवे विरुद्धे विपक्षता गते सत्याऽऽक्रान्तवति सतीत्यर्थः। आदौ पूर्वं भर्ता पतिश्चोलश्चोलदेशीयनृप श्रमस्य परिश्रमस्याऽतिरेकादाधिक्यात् गिरीणा शैलाना 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया' इत्यमर। निर्झराः स्रोतासि तेषामम्बु जल स्तनयो कुचयोरास्वाद दुग्धमिव पशुवत् पात्राभावान्मुखेनैव पशुवन्निपीय पीत्वा क्षितिं चोलदेशभूमि माता जननीति कृत्वेति हेतोरुत्ससर्ज त्यक्तवान्। पूर्वमय चोलभूमेर्भर्ता। विक्रमाङ्कदेवेनाऽऽक्रान्ते चोलदेशे युद्धजनितपरिश्रमस्य पश्चात्पलायनजनितपरिश्रमस्य चाऽधिक्यात् पात्राभावात् स्तनपानमिव गिरिनिर्झराम्बुन पशुवन्मुखेनैव पानात् सा चोलभूमि सम्प्रति जननीव जातेति हेतोस्तस्या उपभोगो भर्तृत्वेन निषिद्ध इति धिया ता मुमोचेत्यर्थ। चोलभूमि त्यक्त्वाऽन्यत्र पलायित इति भाव। अत्रोत्प्रेक्षालङ्कार, परमर्थौचित्य चिन्त्यमेव।

### भाषा

उस विक्रमाङ्कदेव के चोलदेश पर आक्रमण करने पर, चोलभूमि का पहिले जो पति था अर्थात् राजा था, वह चोलराज युद्ध के और भागने के अधिक परिश्रम से बहुत प्यासा होकर, पहाडियो के झरनो का जल, गिलास न होने से चोल भूमि के स्तनपान के समान पशुओ के ऐसे मुख से पीकर, चोल भूमि को स्तनपान कराने वाली जननी है ऐसा समझ कर और उसका अब उपभोग करना ठीक नही ऐसा सोचकर, मानो उसे त्याग कर चला गया। अर्थात् विक्रमाङ्कदेव के आक्रमण करने पर वह चोल भूमि छोड कर भाग गया।

**स मालवेन्दुं शरणं प्रविष्ट-मकण्टके स्थापयति स्म राज्ये।**
**कन्याप्रदानच्छलतः क्षितीशाः सर्वस्वदानं बहवोऽस्य चक्रुः॥६७॥**

### अन्वयः

सः शरणं प्रविष्टं मालवेन्दुम् अकण्टके राज्ये स्थापयति स्म। बहवः क्षितीशाः कन्याप्रदानच्छलतः अस्य सर्वस्वदानं चक्रुः।

### व्याख्या

स विक्रमाङ्कदेव शरण रक्षायाचनाय प्रविष्ट समागत मालवेन्दु मालवदेशराजानमकण्टके प्रतिबन्धशून्ये बाधारहिते इत्यर्थ। राज्ये स्थापयति स्म

प्रतिष्ठापयति स्म । बहवो बहुसख्यका क्षितीशा राजान कन्याया स्वदुहितुः प्रदान पाणिग्रहणरूपेण समर्पण तस्य च्छलेन व्याजेनाऽस्याऽस्मै राजकुमाराय सर्वस्वस्य सर्वधनराज्यादे प्रदान चक्रु सर्वस्व धनराज्यादिक यावद्वस्तु ददु । "अस्य सर्वस्वदान चक्रु" इत्यत्र "अस्ये"ति षष्ठीप्रयोगश्चिन्त्य ।

### भाषा

विक्रमाङ्कदेव ने शरण मे आए हुए मालवा के राजा को निष्कण्टक राज्य पर पुन बैठा दिया । बहुत से अन्य राजाओ ने अपनी कन्याओ का उसके साथ विवाह कर देने के मिष से अपना सर्वस्व उसको समर्पण कर दिया ।

**त्रिलोकवीरः कियतो विजिग्ये न दुर्दमानां प्रतिपार्थिवानाम् ।**
**दोर्विक्रमेणाद्भुतसाहसेन महाहवानाहवमल्लसूनुः ॥६८॥**

### अन्वयः

त्रिलोकवीरः आहवमल्लसूनुः अद्भुतसाहसेन दोर्विक्रमेण दुर्दमाना प्रतिपार्थिवाना कियतः महाहवान् न विजिग्ये ।

### व्याख्या

त्रिलोके भुवनत्रये वीर एकशूर आहवमल्लस्य सूनु पुत्रो विक्रमाङ्कदेवोऽद्भुत चित्र साहस दमो यस्य स 'साहस तु दमो दण्ड.' इत्यमर । तेन दोष्णोर्भुजयोर्विक्रम पराक्रमस्तेन दु खेन दमयितु दान्तु दण्डयितु शक्या दुर्दमास्तेषा दुर्दमाना दुर्जेयाना प्रतिपार्थिवाना विपक्षिनृपाणा शत्रूणामित्यर्थ । कियतः कतिसख्याकान् महाहवान् महासमरान्न विजिग्ये न जयति स्म । बहुसख्यानि महायुद्धानि जयति स्मेति भाव । अत्रार्थापत्त्यलङ्कार ।

### भाषा

तीनो लोको मे अपनी वीरता का सानी न रखने वाले आहवमल्ल राजा के पुत्र विक्रमाङ्क देव ने, विचित्र दमनशक्ति से युक्त अपनी भुजाओ के पराक्रम से अनेक दुर्दान्त विपक्षी राजाओ के अर्थात् शत्रुओ के कितने महायुद्धो को नही जीता । अर्थात् अनेक महायुद्धो को जीता ।

**उत्कन्धरानेव रणाङ्गणेषु यस्यातितुङ्गस्य हठात्प्रहर्तुः ।**
**न नम्रभावादपरो नृपाणा-मासीत्कृपाणप्रतिषेधमार्गः ॥६९॥**

### अन्वयः

अतितुङ्गस्य रणाङ्गणेषु उत्कन्धरान् एव हठात् प्रहर्तुः यस्य कृपाण-प्रतिषेधमार्गः नृपाणा नम्रभावात् अपरः न आसीत् ।

### व्याख्या

अतितुङ्गस्याऽत्युच्चस्य 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुगे' इत्यमर । रणाङ्गणेषु समरभूमिषूद्गतोन्नता कन्धरा ग्रीवा येषा तानेव ऊर्ध्वस्थितग्रीवानुद्धतानेवेत्यर्थ । नृपान् हठात्प्रसभ प्रहर्तुर्नाशयितुर्यस्य राजकुमारस्य कृपाणस्य खड्गस्य प्रहारस्येत्यर्थ । प्रतिषेधो निषेधस्तस्य मार्ग पन्था कृपाणप्रहारजनितस्वनाशाद्रक्षणोपाय इत्यर्थ । नृपाणा विपक्षाणा राज्ञा नम्रभावाद्विनयेन पराजयस्वीकारादपरोऽन्यो नाऽऽसीत् । ये खलून्नता ग्रीवा कृत्वा तेन सार्द्धमभिमानेन युद्धाय समागतास्तेषामेव नाशो जात । ये खलु नम्रभावादस्य पुरत पराजय स्वीचक्रुस्ते तु सुरक्षिता इति भाव ।

### भाषा

रणभूमि मे अभिमान से ऊँची गर्दन कर युद्ध के लिये आने वालो को ही चुन २ कर मारने वाले उस अत्युन्नत राजपुत्र की तलवार के प्रहार से विपक्षी राजाओ को बचने का उपाय, नम्रता से पराजय स्वीकार कर लेने के अतिरिक्त दूसरा नही था ।

**व्याजावतीर्णेन जनार्दनेन तेनोदरे हाररुचिच्छटाभिः ।**
**नाभीसरोजोद्भववारणाय संचारिता चन्द्रमसः प्रभेव ॥७०॥**

### अन्वयः

व्याजावतीर्णेन जनार्दनेन तेन उदरे हाररुचिच्छटाभिः नाभीसरोजोद्भववारणाय चन्द्रमसः प्रभा संचारिता इव ।

### व्याख्या

व्याजेन छलेन विक्रमाङ्कदेव रूपेणेत्यर्थ । अवतीर्ण पृथ्वीतले समागतस्तेन जनार्दनेन विष्णुना तेन राजकुमारेणोदरे कुक्षौ 'पिचण्डकुक्षी जठरोदर तुन्दम्' इत्यमर. । हारस्य मुक्ताहारस्य रुचीनामुज्ज्वलकान्तीना छटाभिश्शोभाभि नाभ्या विष्णुवत्स्वनाभ्या सरोजस्य कमलस्योद्गम उत्पत्तिस्तस्य वारणाय

दूरीकरणाय चन्द्रमस सुधाशो प्रभा ज्योत्स्ना सचारितेव प्रसारितेव। विष्णु-रूपोऽपि स नाभिकमलोत्पत्तिमुदरस्थ—हारजनितोज्ज्वलकान्तिभिश्चन्द्रमसो ज्योत्स्नेव प्रसार्य निवारितवान्। यत कमलानि न चन्द्रिकाया विलसन्ति प्रादुर्भवन्तीति भाव। अत्र सापन्हवोत्प्रेक्षालङ्कार।

### भाषा

विक्रमाङ्क देव के छद्म से अवतीर्ण विष्णु ने अपनी नाभी मे से कमल की उत्पत्ति को रोकने के लिये, अपने पेट पर के मोती के हार की उज्वल कान्ति से मानो चन्द्रमा की चादनी फैला दी थी। अर्थात् चन्द्रिका मे कमल नष्ट होते है इसलिये मोती के हार की मानो चादनी की ऐसी चमक फैला कर कमल की उत्पत्ति रोक दी।

**न भोजराजः कविरञ्जनाय मुञ्जोऽथवा कुञ्जरदानदक्षः।**
**हस्ताम्बुजे तस्य गुणिप्रियस्य सहर्षमाविष्कृतहेमवर्षे ॥७१॥**

### अन्वयः

गुणिप्रियस्य तस्य सहर्षम् आविष्कृतहेमवर्षे हस्ताम्बुजे (सति) कुञ्जर-दानदक्षः भोजराजः अथवा मुञ्जः कविरञ्जनाय न।

### व्याख्या

गुणिनो गुणवन्त प्रिया यस्य स तस्य गुणिप्रियस्य तस्य राजकुमारस्य विक्रमाङ्कदेवस्य हर्षेण सहित सहर्ष सानन्दमाविष्कृत प्रकटीकृत हेम्न सुवर्णस्य वर्षं वृष्टिर्येन स तस्मिन् हस्त एवाम्बुज कमल तस्मिन् करकमले विराजमाने सति कुञ्जराणा हस्तिना दान प्रदान तस्मिन् दक्ष प्रवीणो भोजराजो धाराधी-शोऽथवा मुञ्जस्तत्पूर्ववर्ती मुञ्जनामनृप कवीना रञ्जन प्रसन्नीकरण तस्मै करिदानद्वाराऽपि कवीना मन प्रसादाय न, न तथा समर्थ इति भाव।

### भाषा

गुणिजनो से प्रेम रखने वाले उस राजकुमार के, प्रसन्नतापूर्वक सुवर्ण की वृष्टि करने वाले कर कमल के रहते हुए अर्थात् अपने हाथ से गुणियो को सहर्ष सुवर्ण दान करते रहने पर, कवियो को हाथियो का प्रदान करने मे प्रवीण राजा भोज या राजा मुञ्ज, कवियो को प्रसन्न करने मे, वैसे समर्थ नही हुए।

**तस्यारिलक्ष्मीपरिरम्भकेलि—समुत्सुकप्राज्यभुजद्वयस्य ।**
**केयूर-रत्नाङ्कुरकण्टकानां तैक्ष्ण्यं कृपाणाहतिभिर्निरस्तम् ॥७२॥**

### अन्वयः

अरिलक्ष्मीपरिरम्भकेलिसमुत्सुकप्राज्यभुजद्वयस्य तस्य केयूररत्नाङ्कुर-कण्टकानां तैक्ष्ण्य कृपाणाहतिभिः निरस्तम् ।

### व्याख्या

अरीणा शत्रूणा लक्ष्मी श्रीस्तस्या परिरम्भ आलिङ्गनमेव केलि क्रीडा तस्या समुत्सुक समुत्कण्ठित प्राज्य विशाल भुजद्वय बाहुयुगल यस्य तस्य राजकुमारस्य केयूरेऽङ्गदे स्थितानि रत्नानि तेषामङ्कुरा अग्रभागा एव कण्ट-कानि तेषा तैक्ष्ण्य तीव्रता कृपाणै शत्रूणा खड्गैराहतय प्रहारास्तैर्निरस्त कृतम् । कृपाणाहतिभि केयूररत्नाङ्कुरकण्टकाना तैक्ष्ण्यनिराकरणादालिङ्गन निष्प्रत्यूहम-भवदिति भाव । एतेन लक्ष्म्यास्तस्य राजकुमारस्य सर्वतोभावेन स्वीकरण ध्वन्यते तेन रसाभासध्वनि ।

### भाषा

शत्रुओ को लक्ष्मी की आलिङ्गनरूपी क्रीडा मे उत्सुक लम्बी २ दो भुजाओ वाले उस राजकुमार के बिजायट मे जडे हुवे रत्नो का अग्रभाग रूपी काटो का तीखापन, शत्रुओ के खड्ग के प्रहारो से नष्ट हो गया था । अतएव आलिङ्गन मे लक्ष्मी को उन कॉटो के गडने की आशका न थी ।

**एकातपत्रोर्जितराज्यलोभा-च्छत्रान्तराणामिव वारणाय ।**
**स भूभृतामुन्नतवंशभाजां दण्डानशेषाञ्छतधा बभंज ॥७३॥**

### अन्वयः

सः एकातपत्रोर्जितराज्यलोभान् छत्रान्तराणां वारणाय इव उन्नतवंश-भाजा भूभृताम् अशेषान् दण्डान् शतधा बभंज ।

### व्याख्या

स राजकुमार एकमेवातपत्र छत्र यस्मिन्तदेकातपत्रमेकच्छत्रमूर्जित समृद्धि-मद्विशाल राज्य तस्य लोभात्तस्य प्रतिष्ठावाञ्छयाऽन्यच्छत्र छत्रान्तर तेषामन्य

नृपच्छत्राणा वारणायेव दूरीकरणायेवाऽन्ये राजानश्छत्रान्न धारयन्त्विति धिये-वेत्यर्थ । उन्नतवशमुच्चकुल तुङ्गवेणु वा भजन्तीत्युन्नतवशभाजस्तेषा भूभृता राज्ञा पर्वताना वाऽशेषान् समग्रान्दण्डान् सैन्यानि वेणुदण्डान् वा शतधा बभज शतखण्डानि चकार। अन्य कोऽपि समुन्नतवशजो राजा सच्छत्रो राज्य मा करोत्विति हेतोस्तेन राज्ञा सैन्य शतधा खण्डितम् । नाशितमितिभाव. । अत्रोत्प्रेक्षालङ्कार श्लेषानुप्राणित ।

### भाषा

विक्रमाङ्कदेव ने निष्कण्टक एक छत्र श्रेष्ठ राज्य के लोभ से अर्थात् एक छत्र श्रेष्ठ राज्य की स्थापना करने के ध्येय से अन्य राजाओ के छत्रो को मिटा देने के लिये, उन्नत बासो से युक्त पर्वतो के समग्र बासो को अथवा उन्नत वश मे होने वाले राजाओ की सेना के, सौ टुकडे कर डाले अर्थात् सेना को नष्ट कर दिया ।

**गायन्ति स्म गृहीतगौडविजयस्तम्बेरमस्याहवे**
**तस्योन्मूलितकामरूपनृपतिप्राज्यप्रतापश्रियः ।**
**भानुस्यन्दन—चक्रघोषमुषितप्रत्यूषनिद्रारसाः**
**पूर्वाद्रेः कटकेषु सिद्धवनिताः प्रालेयशुद्धं यशः ॥७४॥**

### अन्वयः

आहवे गृहीतगौडविजयस्तम्बेरमस्य उन्मूलितकामरूपनृपतिप्राज्यश्रियः तस्य भानुस्यन्दनचक्रघोषमुषितप्रत्यूषनिद्रारसाः सिद्धवनिताः पूर्वाद्रेः कटकेषु प्रालेयशुद्धं यशः गायन्ति स्म ।

### व्याख्या

आहवे सग्रामे 'अभ्यामर्दसमाघातसग्रामाभ्यागमाहव' इत्यमर । गृहीताः स्वायत्तीकृता गौडस्य गौडदेशाधिपस्य विजये जये स्तम्बेरमा हस्तिनो येन तस्योन्मूलिता समूल नाशिता कामरूपदेशस्य आसामेति लोके प्रसिद्धस्य नृपते राज्ञ प्राज्या श्रेष्ठा प्रतापश्री प्रभावलक्ष्मीर्येन तस्य, तस्य विक्रमाङ्कदेवस्य भानो सूर्यस्य स्यन्दनस्य रथस्य चक्राणा घोषेण शब्देन मुषित परित्याजितः प्रत्यूषस्य प्रात. कालस्य निद्रारसो निद्रानन्दो यासा ता सिद्धवनिता गन्धर्वाङ्गनाः

पूर्वाद्रे पूर्वाचलस्य कटकेषु नितम्बेषु 'कटकोऽस्त्री नितम्बोद्रे' इत्यमर'। प्रालेयमिव हिममिव शुद्ध श्वेतवर्ण यश कीर्ति गायन्ति स्म सङ्गीतपुरस्सर स्तुवन्ति स्म।

### भाषा

युद्ध मे गौड या बगाल के राजा को जीत कर उसके हाथियो को छीन लेने वाले, कामरूप या असाम के राजा की समृद्ध प्रतापश्री को समूल नष्ट कर देने वाले उस राजकुमार विक्रमाङ्कदेव की बरफ के समान श्वेत कीर्ति को, सूर्य के रथ के पहिओ की घडघडाहट से प्रात काल की निद्रा के आनन्द से वञ्चित अर्थात् जागपडी हुई सिद्ध नामक देव कन्याएँ, पूर्वाचल के नीचे के भागो मे गाया करती थी।

**आसीत्तस्य समुत्सुकः सुरपतिः संग्रामसंदर्शने**
**सेहे किन्तु न गाढपीडितधनुष्टङ्कारमुच्चैश्रवाः।**
**आरूढः सुरवारणं रणरसक्रुद्धेभगन्ध—ग्रहात्**
**तेनाप्येष पलायनप्रणयिना दूरं समुत्सारितः ॥७५॥**

### अन्वयः

सुरपतिः तस्य सग्रामदर्शने समुत्सुकः आसीत्। किन्तु उच्चैःश्रवाः गाढपीडितधनुष्टङ्कारं न सेहे। (अतः) एषः सुरवारणम् आरूढः। (किन्तु) रणरसक्रुद्धेभगन्धग्रहात् पलायनप्रणयिना तेन अपि एषः दूरं समुत्सारितः।

### व्याख्या

सुराणा देवाना पति स्वामीन्द्रस्तस्य विक्रमाङ्कदेवस्य सग्रामाणा युद्धानां दर्शने कौतुकेन निरीक्षणे समुत्सुक उत्कण्ठित आसीत्। विक्रमाङ्कदेवस्य विचित्र युद्धकला सर्वतो निशम्य तस्य युद्धदर्शने कौतुकयुक्तस्सन् समुत्सुक आसीदिति भाव। किन्तूच्चै श्रवा इन्द्राश्व 'हय उच्चै श्रवा सूतो मातलिर्नन्दन वनम्' इत्यमर। गाढ यथास्यात्तथा पीडित धनु शरासन तस्य टङ्कार शब्द न सेहे न सोढु समर्थ। टङ्कारशब्द श्रुत्वा पलायित इति भाव। अत एष इन्द्र' सुरवारणमैरावतमारूढोधिष्ठित। किन्तु रणरसेन सग्रामरसेन क्रुद्धा' कुपिता इभा गजास्तेषा गन्धस्य ग्रहात् ग्रहणात् पलायने वेगेन दूरापसरणे प्रणयः

प्रीतिर्यस्य तेन पलायनोत्तरलितमनसा तेनैरावतेनाऽप्येष दूर रणभूमितो महदन्तर समुत्सारितोऽपनीत. । विक्रमाङ्कदेवस्य गजा गन्धगजा आसन्निति भाव । यस्य गन्ध समाघ्राय पलायन्तेऽपरे गजा । स सुगन्धगज प्रोक्त इति । अत्राति-शयकोक्तिरलङ्कारस्तेनाऽस्य लोकोत्तर शौर्यं ध्वन्यते ।

### भाषा

इन्द्र को इस विक्रमाङ्क देव का सग्राम देखने की उत्कण्ठा हुई । परन्तु इन्द्र का घोडा उच्चैःश्रवा, इस राजकुमार के कान तक खीच कर चलाये जाने वाले धनुष के टङ्कार को न सहन कर सका । अर्थात् उसके धनुष के टङ्कार से भडक गया । इसलिये इन्द्र ऐरावत नाम के अपने हाथी पर सवार हुआ । परन्तु इस राजकुमार के युद्ध की भावना से क्रोधयुक्त गन्ध गजो की गन्ध से (भयभीत होकर) भाग जाने मे ही प्रेम रखने वाला अर्थात् अपना कल्याण समझने वाला ऐरावत भी इन्द्र को युद्धभूमि से दूर भगा ले गया ।

**काञ्ची पदातिभिरमुष्य विलुण्ठिताभूद्**
**देवालयध्वजपटावलिमात्रशेषा ।**
**लुण्टाकलुप्तनिखिलाम्बरडम्बराणां**
**कौपीनकार्पणपरेव पुराङ्गनानाम् ॥७६॥**

### अन्वयः

अमुष्य पदातिभिः विलुण्ठिता (सती) देवालयध्वजपटावलिमात्रशेषा काञ्ची लुण्टाकलुप्तनिखिलाम्बरडम्बराणा पुराङ्गनाना कौपीनकार्पणपरा इव अभूत् ।

### व्याख्या

अमुष्य विक्रमाङ्कदेवस्य पदातिभि पादचारिसैनिकैर्विलुण्ठिता हठादपहृत-सर्वस्वा सती देवानामालया देवालया देवमन्दिराणि तेषा ध्वजेषु पताकासु संसक्ता या पटावलिस्तन्मात्रमेव पताकांशुकान्येव शेषोऽवशिष्टवस्त्रभागो यस्यां सा काञ्ची तन्नाम्नी चोलराजधानी लुण्टाकैर्हठादपहरणशीलैर्लुप्तान्यपहृतानि निखिलाम्बराणामखिलवस्त्राणा डम्बराण्याटोपा यासा तास्तासा पुराङ्गनाना

काञ्चीनगरस्त्रीणा कौपीनक गुह्याच्छादनवस्त्र तस्याऽर्पणे परा तत्परेवाऽभूत् । सर्वतो भावेन काञ्चीनगरी पदातिभिर्लुण्ठितेति भाव ।

### भाषा

विक्रमाङ्कदेव की पैदल सेना से लूटी जाने पर केवल देव मन्दिरो की पताकाओ मे ही वस्त्रो का अस्तित्व रखने वाली चोलराजा की प्रधान नगरी काञ्ची, लुटेरो द्वारा अपहृत वस्त्र समूह वाली नागरिक स्त्रियो को मानो गुह्याङ्ग ढकने के लिये लगोटी ही देने मे तत्पर थी अर्थात् समर्थ थी । अर्थात् पूरी तरह से काची नगरी को सैनिको ने लूट लिया था ।

**अत्र द्राविडभूमिपालदलनक्रीडारसोड्डामरे**
**कोदण्डध्वनिभिर्विधुन्वति घनध्वानानुकारैर्जगत् ।**
**वैदेहीरमणस्य रावणशिरच्छेदेऽप्यशान्तक्रुधः**
**प्रत्यावृत्तिरकाण्डकम्पतरलैराशङ्कि लङ्काचरैः ॥७७॥**

### अन्वयः

द्राविडभूमिपालदलनक्रीडारसोड्डामरे अत्र घनध्वानानुकारैः कोदण्डध्वनिभिः जगत् विधुन्वति (सति) अकाण्डकम्पतरलैः लङ्काचरैः रावणशिरच्छेदे अपि अशान्तक्रुधः वैदेहीरमणस्य प्रत्यावृत्तिः आशङ्कि ।

### व्याख्या

द्राविडश्चसौ भूमिपालश्च द्राविडभूमिपालश्चोलदेशराजस्तस्य दलनस्य पीडनस्य या क्रीडा लीलास्तस्या रसे उड्डामर अत्युत्सुकस्तस्मिन्नत्राऽस्मिन्विक्रमाङ्कदेवे घनानामेघाना ध्वानो निस्वनस्तदनुकारैस्तत्सदृशै कोदण्डस्य धनुषो ध्वनिभिश्शब्दैर्जगल्लोक विधुन्वति कम्पयति सति अकाण्डेऽसमय एव कम्पो भयेन कम्पन तेन तरलैश्चञ्चलैर्लङ्काचरै राक्षसै रावणस्य लङ्कापते शिरसा छेदे कर्तने कृतेऽप्यशान्ता क्रुध् क्रोधो यस्य तस्य वैदेह्या रमणस्य श्री रामचन्द्रस्य प्रत्यावृत्ति पुनरावर्तन पुनरागमनमित्यर्थ । आशङ्कि वितर्कितम् । कोदण्डप्रयोगेऽय श्री रामचन्द्रवत् कुशल आसीदिति भाव । उत्प्रेक्षालङ्कार ।

### भाषा

चोलदेश के राजा को परास्त करने के क्रीडारस मे समुत्सुक, राज कुमार

विक्रमाङ्कदेव के मेघ की गर्जना के समान धनुष की ध्वनि से समस्त जगत् को कपाते रहने पर असमय मे ही कम्प से चञ्चल अर्थात् बिना कारण भयभीत राक्षसो ने, रावण के शिरो को काट डालने पर भी क्रोध शान्त न होने वाले श्री रामचन्द्र की पुन लौट आने की आशङ्का की। अर्थात् विक्रमाङ्कदेव के जगत् को कपा देने वाले धनुष के टङ्कारो को सुनकर व्यर्थ ही भय से व्याकुल राक्षसो को सन्देह हुआ कि रावण के शिरो को काटने पर भी क्रोध शान्त न होने से कही राम ही तो फिर से नही लौट कर आ रहे है।

इति श्री विक्रमाङ्कदेव चरिते महाकाव्ये त्रिभुवनमल्लदेव विद्यापति काश्मीरकभट्ट श्री बिल्हणविरचिते तृतीय सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाजबुधोत्तमात्समुदितः श्रीविश्वनाथ सुधीः ।**
**चक्रे रामकुवेर-पण्डितवरात्सम्प्राप्तसाहाय्यक-**
**ष्टीकायुग्ममिदं रमाकरुणया सर्गे तृतीये वरे ॥**

ॐ शान्ति शान्ति शान्ति ।



॥ श्री ॥

## महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

### चतुर्थः सर्गः

कार्यतो युवराजत्वे राजसूनुरवस्थितः ।
स दिग्विजयमव्याज-वीरः स्मर इवाकरोत् ॥१॥

**अन्वयः**

कार्यतः युवराजत्वे अवस्थितः अव्याजवीरः सः राजसूनुः स्मरः इव दिग्विजयम् अकरोत् ।

**व्याख्या**

कार्यतस्सम्पूर्णराज्यकार्यकारित्वाद्युवराजत्वे युवराजकार्यसम्पादनेऽवस्थितः प्रतिष्ठितो न तु युवराजपदे समभिषिक्तस्तत्र तु तदग्रजस्सोमदेवो नाम राजपुत्रोऽभिषिक्त आसीत । व्याजेन कपटेन वीरो व्याजवीर स न भवतीत्यव्याजवीरो निष्कपटवीर सत्यशूर इत्यर्थ । स प्रसिद्धो राजसूनुर्नृपपुत्र 'आत्मजस्तनयः सूनुस्सुत पुत्र स्त्रिया त्वमी' इत्यमर । विक्रमाङ्कदेव स्मर इव काम इव 'काम पञ्चशर स्मर' इत्यमर । दिशामाशाना 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । लक्षणया दिक्षु स्थिताना राज्ञामन्यजनानाञ्च विजय जयमकरोत् । पृथ्वीस्थसकलभूपाना पराजय विधाय तान् स्ववशे कृतवानित्यर्थ । राजसूनोस्स्मरेण साधर्म्यावगमादुपमालङ्कार 'साधर्म्यमुपमा भेदे' । सर्गेऽस्मिन्ननुष्टुप् छन्द । 'श्लोके षष्ठ गुरुज्ञेय सर्वत्र लघु पञ्चमम् । द्विचतु पादयोर्ह्रस्व सप्तम दीर्घमन्ययो ॥' इति लक्षणात्

**भाषा**

सम्पूर्ण राज्य कार्य करने के लिये युवराज पद पर अभिषिक्त न होते हुए

भी उस पद पर स्थित, उस सत्य शूर राज पुत्र विक्रमाङ्कदेव ने कामदेव के समान समस्त दिशाओ को अर्थात् समस्त दिशाओ के राजाओ को तथा अन्य लोगो को जीत लिया अर्थात् अपने वश मे कर लिया।

**अभज्यन्त गजैस्तस्य लीलया मलयद्रुमाः।**
**समं केरलकान्तानां चूर्णकुन्तलवल्लिभिः ॥२॥**

**अन्वयः**

तस्य गजैः लीलया मलयद्रुमाः केरलकान्ताना चूर्णकुन्तलवल्लिभिः समम् अभज्यन्त।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य गजैर्हस्तिभिर्लीलया क्रीडया मलयस्य मलयाद्रेर्द्रुमा वृक्षा केरलकान्ताना केरलदेशीयरमणीना चूर्णकुन्तला अलका 'अलकाश्चूर्ण-कुन्तला' इत्यमर। एव वल्लयो लतास्ताभि सम सहाऽभज्यन्त भग्ना भूमौ निपातिता इत्यर्थ। गजसेनया पतीना विनाशे केरलदेशीयनारीणा चूर्णकुन्तला देशाचाररीत्या तासा मुण्डनेन भूमौ पतिता मलयद्रुमाश्च तैर्गजैर्भूमौ पातिता। अत्र सहोक्तिरलङ्कार.। द्रुमाणा पाते वल्लयोऽपि पतन्त्येवेति सूच्यते।

**भाषा**

विक्रमाङ्कदेव के हाथियो ने मलयाचल के चन्दनवृक्षो के साथ ही केरल-देशीय स्त्रियो के केशपाश रूपी लता को भी तोड कर पृथ्वी पर गिरा दिया। अर्थात् गज सेना से उनके पतियो का नाश हो जाने पर देशाचारानुसार उन स्त्रियो के विधवा हो जाने से केश भी मूँड दिये गये थे और वे पृथ्वी पर गिर गये।

**मदस्तम्बेरमैस्तस्य मलये निर्द्रुमीकृते।**
**मन्ये चन्दनवायूनामभूद्दुर्भिक्षमक्षयम् ॥३॥**

**अन्वयः**

तस्य मदस्तम्बेरमैः मलये निर्द्रुमीकृते (सति) चन्दनवायूनाम् अक्षयं दुर्भिक्षम् अभूत् (इति) मन्ये।

### व्याख्या

तस्य विक्रमाङ्कदेवस्य मदो दानमस्त्येषु ते मदा मदयुक्ता 'अर्श आदिभ्योऽजित्यच् प्रत्यय'। स्तम्बेरमा गजा 'इभ स्तबेरम पद्मी' इत्यमर । तैर्मदोन्मत्तगजैर्मलये मलयपर्वते न सन्ति द्रुमा अस्मिन्निति निर्द्रुम न निर्द्रुमोऽनिर्द्रुम, अनिर्द्रुमो निर्द्रुम कृत इति निर्द्रुमीकृतस्तस्मिन् 'अभूततद्भावे सपद्यकर्त्तरि च्विरित्ति च्वि प्रत्यय'। भक्षणाद्भञ्जनाच्च वृक्षरहिते कृते सति चन्दनवायूना चन्दनद्रुमसम्पर्काच्छीतलसुगन्धिपवनाना दक्षिणानिलानामित्यर्थ । अक्षयमविनाशि चिरकालसभवीत्यर्थ । दुर्भिक्षमभावोऽभूदित्यह मन्ये तर्कयामि । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

उसके मदोन्मत्त हाथियो द्वारा मलयाचल का, वृक्षो को तोडने और खाने से, वृक्ष रहित कर दिये जाने पर चिरकाल के लिये शीतल, मन्द, सुगन्ध वायु का (दक्षिणानिल का) अकाल पड गया होगा ऐसा मै समझता हूँ ।

**चन्दनस्यन्दिडिण्डीरच्छलेन मलयाचलः ।**
**पिण्डं श्रीखण्डवृक्षाणां परोक्षाणामिवाकरोत् ॥४॥**

### अन्वयः

मलयाचलः चन्दनस्यन्दिडिण्डीरच्छलेन परोक्षाणा श्रीखण्डवृक्षाणा पिण्डम् इव अकरोत् ।

### व्याख्या

मलयाचलो मलयाद्रिश्चन्दनाच्चन्दनवृक्षात्स्यन्दी प्रच्युतो डिण्डीर फेन 'डिण्डीरोऽब्धिकफ फेन' इत्यमर । तस्य च्छलेन व्याजेन परोक्षाणा भग्नानामत एव परलोकगताना श्रीखण्डवृक्षाणा चन्दनतरूणा पिण्डमिव श्राद्धपिण्डमिवाऽकरोत् कृतवान् । मृतेभ्य. सम्बन्धिभि पिण्डदान क्रियते तथैव मलयाचल. स्वोत्पनाना सम्प्रति नष्टाना चन्दनवृक्षाणा चन्दनस्यन्दिफेनव्याजेन पिण्डदान कृतवानित्यर्थ ।

### भाषा

मलयाचल ने टूटे हुए चन्दन वृक्षो से चूने वाले (सफेद) फेनो के मिष से मानो मरे हुए अर्थात् नष्ट भए हुए चन्दन-वृक्षो का पिण्डदान किया ।

सान्द्रचन्दननिस्यन्दपङ्किलैस्तस्य वारणैः ।
क्षणमौर्वाग्निसन्तापः प्रविश्य शमितोऽम्बुधेः ॥५॥

**अन्वयः**

सान्द्रचन्दननिस्यन्दपङ्किलैः वारणैः प्रविश्य अम्बुधेः औौर्वाग्निसन्तापः क्षणं शमितः ।

**व्याख्या**

सान्द्रो घनीभूतो यश्चन्दनस्य श्रीखण्डवृक्षस्य निस्यन्द प्रस्रुतो द्रवीभूत-पदार्थस्तेन पङ्किलैश्चन्दनवृक्षसघर्षवशादार्द्रशरीरैर्वारणैर्गजै प्रविश्य समुद्रमध्ये जलक्रीडार्थं गत्वाऽम्बुधे समुद्रस्यौर्वोग्निरौर्वाग्निर्वाडवाग्निस्तस्मात्सन्ताप पीडा क्षण क्षणमात्र शमित शान्ति नीत । 'औौर्वस्तु वाडवो वडवानल' इत्यमर । तस्य शीतचन्दनस्यन्दलिप्ताङ्गेषु गजेषु समुद्र प्रविष्टेषु समुद्रस्य वडवानलताप. क्षण शान्ति गत इति भाव । गम्योत्प्रेक्षालङ्कार ।

**भाषा**

(अपने शरीरो को चन्दनवृक्षो से रगडने के कारण) गाढे २ चन्दन के रस से लथपथ उसके हाथियो ने समुद्र मे स्नानादि क्रीडा के लिए प्रवेश कर (चन्दन की ठण्डक से) समुद्र की वडवानल की गर्मी को थोडे देर के लिये शान्त कर दिया ।

औौर्वाग्नितप्तपाथोधौ चन्दनस्यन्दवासिताः ।
शीतोपचारसाम्राज्यं भेजुर्मलयनिम्नगाः ॥६॥

**अन्वयः**

चन्दनस्यन्दवासिताः मलयनिम्नगाः औौर्वाग्नितप्तपाथोधौ शीतोपचार-साम्राज्यं भेजुः ।

**व्याख्या**

चन्दनस्य श्रीखण्डवृक्षस्य स्यन्देन प्रस्रुतजलेन वासिता सुगन्धित्वमापन्ना मलयस्य मलयाद्रेर्निम्नगा नद्य. 'स्रोतस्विनी द्वीपवती स्रवती निम्नगापगा' इत्यमर । औौर्वाग्निना वडवानलेन तप्त उष्णता प्रापित पाथोधिस्समुद्रस्त-

स्मिन् शीतोपचारस्य सन्तापनिवारणपूर्वकशीतानयनस्य साम्राज्य वैशिष्टच भेजु सिषेविरे। समुद्रे चन्दनजलवासिताना नदीना समागमात् समुद्रे शैत्य जात वडवानलसन्तापश्च निवारित इति भाव ।

**भाषा**

बडवानल से तपे समुद्र मे चन्दन के रस से सुवासित, मलयाचल की नदिया शीतोपचार का काम करने लगी।

**सखीव निखिलैस्तस्य सेनासीमन्तिनीजनैः ।**
**प्रीत्या मलयवायूनां जन्मभूमिरदृश्यत ॥७॥**

**अन्वयः**

तस्य निखिलैः सेनासीमन्तिनीजनैः प्रीत्या सखी इव मलयवायूनां जन्मभूमिः अदृश्यत ।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य निखिलैस्समस्तै सेनाया सेनया सह समागता. सीमन्तिन्योऽङ्गनास्तासा जनस्समूहस्तै प्रीत्या प्रेम्णा सखीव प्रेयसीव मलयवायूना दक्षिणानिलाना जम्मभूमिर्मलयपर्वतोऽदृश्यत परिवीक्षिता। सयोगावस्थाया सुखप्रदाना दक्षिणानिलाना जन्मभूमिरङ्गनाभि सखीव प्रीत्या दृष्टेति भाव ।

**भाषा**

उसकी सेना मे की अङ्गनाओ ने दक्षिणानिल की जन्म भूमि मलयाचल को (सयोगावस्था मे दक्षिणानिल के सुखद होने के कारण) सखी के समान प्रेम से देखा।

**मलयेन तदीयस्त्री-सुरभिश्वसितानिलैः ।**
**गुहाश्चन्दनवायूनां बीजार्थमिव पूरिताः ॥८॥**

**अन्वयः**

मलयेन तदीयस्त्रीसुरभिश्वसितानिलैः गुहाः चन्दनवायूना बीजार्थं पूरिताः इव ।

**व्याख्या**

मलयेन मलयाचलेन तस्य विक्रमाङ्कदेवस्येमा इति तदीया स्त्रियो नार्यस्तासां सुरभीणि सुगन्धीनि 'सुरभिर्घ्राणतर्पण । इष्टगन्ध सुगन्धि स्यात्' इत्यमरः । श्वसितान्येवाऽनिलास्तैस्तदीयाङ्गनासुगन्धिश्वसितानिलैर्गुहा दर्यश्चन्दनवायूनां श्रीखण्डानिलाना बीजार्थं बीजसरक्षणाय पूरिता इव परिपूर्णीकृता इव । गजकृतसमस्तचन्दनवृक्षनाशेऽपि आगामिनि समये कान्तासुरभिश्वसितरूपबीजैः प्रभूताश्चन्दनवायवस्समुत्पत्स्यन्तीति धिया मलयेन तासा श्वसितानां गुहासु बीजरूपेण सग्रह कृत इति भाव । श्वसितानिलैर्गुहापरिपूरणे चन्दनवायुरूप-बीजसरक्षणस्य फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा, तया च तदीयाङ्गनाना श्वसिताऽ-निलैस्सह मलयपवनानामुपमा गम्यते ।

**भाषा**

मलयाचल ने, विक्रमाङ्कदेव के हाथियो द्वारा चन्दन वृक्षो का समूल नाश कर दिये जाने पर, चन्दन की सुगन्ध से युक्त वायुओ का बीज बनाए रखने के लिये मानो विक्रमाङ्कदेव की सेना मे की अङ्गनाओ के सुगन्धित सासो को गुफाओ मे भर लिया ।

**गजोन्मूलितनिक्षिप्त-चन्दनद्रुमसम्पदः ।**
**स मूल्यमिव रत्नानि जग्राह महतोऽम्बुधेः ॥६॥**

**अन्वयः**

सः गजोन्मूलितनिक्षिप्तचन्दनद्रुमसम्पदः महतः अम्बुधेः रत्नानि मूल्यम् इव जग्राह ।

**व्याख्या**

स विक्रमाङ्कदेवो गजैर्हस्तिभि पूर्वमुन्मूलिता उत्पाटिता पश्चान्निक्षिप्तास्स-पातिताश्चन्दनद्रुमास्तद्रूपसम्पदो यस्मिन् स नागसमूहोत्पाटितसपातितचन्दनमही-रुहरूपसम्पत्तेर्महतोऽम्बुधेर्महासागरात् महासागरसकाशादित्यर्थ । रत्नानि समुद्रस्थितविविधरत्नसमूहान् मूल्यमिव दत्तचन्दनद्रुमसम्पत्तेर्मूल्यार्थमिव जग्राह गृहीतवान् । परिवृत्तिनामालङ्कार । "परिवृत्तिर्विनिमय समन्यूनाधि-कैर्भवेत्" इति लक्षणात् ।

**भाषा**

अपने हाथियो द्वारा उखाड कर फेके हुए चन्दनवृक्षो की सम्पत्ति से युक्त विशाल समुद्र से मानो उस विक्रमाङ्कदेव ने मूल्य मे रत्नो को ले लिया ।

**शिलाभिः करटिक्षुण्ण-श्रीखण्डस्यन्दपाण्डुभिः ।**
**मलयस्तद्बलक्षोभादस्थिशेष इवाऽभवत् ॥१०॥**

**अन्वयः**

मलयः करटिक्षुण्णश्रीखण्डस्यन्दपाण्डुभिः शिलाभिः तद्बलक्षोभात् अस्थिशेषः इव अभवत् ।

**व्याख्या**

मलयो मलयाचल करटिभिर्गजै क्षुण्णास्सर्मर्दिता श्रीखण्डाश्चन्दनवृक्षास्तेषा स्यन्देन प्रस्नुतद्रव्येण पाण्डुवर्णा शुभ्रवर्णास्ताभि शिलाभिर्हेतुभिस्तस्य बल सैन्य तस्य क्षोभात्सघर्षात्समर्दनादित्यर्थ । अस्थीन्येव शेषा अवशिष्टाशा यस्य स इवाऽभवत् । शिलासु शुभ्रत्वसाम्यादस्थिस्वरूपस्योत्प्रेक्षणादुत्प्रेक्षा ।

**भाषा**

उस राजा के हाथियो से नष्ट किए हुए चन्दन वृक्ष के रस से सफेद भई हुई पत्थर की चट्टानो के मिष से मानो उस राजा की पलटनो से सम्मर्दित होने से मलयाचल की हड्डियाँ अवशिष्ट रह गई हो ऐसा वह दिखाई देता था ।

**अम्भोधिः श्रीभुजङ्गस्य निद्राभङ्गविधायिना ।**
**चमूकलकलेनेव कुपितः क्षोभमाययौ ॥११॥**

**अन्वयः**

अम्भोधिः श्रीभुजङ्गस्य निद्राभङ्गविधायिना चमूकलकलेन कुपितः सन् इव क्षोभम् आययौ ।

**व्याख्या**

अम्भोधिस्समुद्र श्रियो लक्ष्म्या भुजङ्ग पतिर्विष्णुस्तस्य विष्णोर्निद्राया भङ्गस्त विदधातीति तेन निद्राविच्छेदकारिणा चमूकलकलेन सेनासञ्चलनशब्देन कुपित-

स्सन्निव क्रुद्धस्सन्निव क्षोभ व्याकुलत्वमाययौ प्राप्त । समुद्रक्षोभे सेनाकलकल-श्रवणस्य हेतुत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कार ।

**भाषा**

लक्ष्मीपति भगवान् विष्णु की निद्रा का भङ्ग करने वाले सेना के कोलाहल से मानो समुद्र कुपित होकर क्षुब्ध हो उठा ।

**क्षुण्णास्तत्करिभिस्तोय-द्विपाङ्घ्रिनिगडोपमाः ।**
**शयानाः कुण्डलीभूय वार्धितीरे महोरगाः ॥१२॥**

**अन्वयः**

वार्धितीरे तोयद्विपाङ्घ्रिनिगडोपमाः कुण्डलीभूय शयानाः महोरगाः तत्करिभिः क्षुण्णाः ।

**व्याख्या**

वार्धे समुद्रस्य तीरे तटे समुद्रतटे तोयस्य जलस्य द्विपा गजास्तेषामङ्घ्रय पादास्तेषा निगडाना शृङ्खलानामुपमा सादृश्य येषा ते समुद्रगजनिगडोपमा 'अथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यात्' इत्यमर । कुण्डलीभूय मण्डलाकारेण कुण्डलना विधाय शयाना· सुप्ता महोरगा उरसा गच्छन्तीत्युरगा महान्त उरगा महोरगा महासर्पास्तस्य विक्रमाङ्कदेवस्य करिभिर्हस्तिभि क्षुण्णा गजपादैः सम्मर्दिता । समुद्रतटे सर्पाणामाधिक्य स्वाभाविकमेव । अत्रोपमालङ्कार ।

**भाषा**

समुद्र तट पर जलहाथियो के पाव मे बाधने के सिक्कड के सदृश मण्डल-बॉध कर सोए हुए बडे २ साप, उस राजा के हाथियो से कुचल दिये गए ।

**दधिरे तद्गजाः पाद-लग्नपाथोधिमौक्तिकाः ।**
**क्षुण्णनक्षत्रपुञ्जस्य सौन्दर्यं सुरदन्तिनः ॥१३॥**

**अन्वयः**

पादलग्नपाथोधिमौक्तिकाः तद्गजाः क्षुण्णनक्षत्रपुञ्जस्य सुरदन्तिनः सौन्दर्यं दधिरे ।

### व्याख्या

पादेषु पदेषु लग्नानि ससक्तानि पाथोधे समुद्रस्य मौक्तिकानि येषा ते चरणससक्तमुक्ताकलापास्तस्य विक्रमाङ्कदेवस्य गजा हस्तिन क्षुण्ण पादसम्बन्धेन सर्चूणितो नक्षत्रपुञ्जो तारकासमूहो येन तस्य "नक्षत्रमृक्ष भ तारा तारकाप्युडु वा स्त्रियाम्' इत्यमर । सुरदन्तिन ऐरावतस्य सौन्दर्यं शोभा दधिरे सप्राप्ता । निदर्शनालङ्कार ।

### भाषा

उसके हाथी, जिनके पावो मे समुद्र के मोती लग गये थे, नक्षत्र समूहो को कुचलने वाले इन्द्र के ऐरावत हाथी की शोभा प्राप्त कर रहे थे ।

**तस्य वाहनमेकैकं गाहमानममन्यत ।**
**मन्दुरास्मरणायातमुच्चैःश्रवसमम्बुधिः ॥१४॥**

### अन्वयः

अम्बुधिः तस्य गाहमानम् एकैकं वाहनं मन्दुरास्मरणायातम् उच्चैः-श्रवसम् अमन्यत ।

### व्याख्या

अम्बुधि समुद्र तस्य विक्रमाङ्कदेवस्य गाहमान समुद्र प्रविशन्तमेकैकमश्व प्रत्येकं वाजिन मन्दुरा वाजिशाला 'वाजिशाला तु मदुरा' इत्यमर । तस्या. स्मरणेनाऽऽयात मदीया वाजिशाला समुद्रेऽवतिष्ठत इति स्मृत्या समागतमुच्चै-श्रवसमिन्द्राश्वममन्यत मेने । तस्य वाजिनोऽतीव श्रेष्ठा इति भाव । समुद्रा-देवोच्चै श्रवस उत्पत्तिरिति पौराणिकी कथाऽत्र सूचिता ।

### भाषा

समुद्र ने, समुद्र मे स्नान करने वाले उसके हर एक घोडे को, अपनी अश्व-शाला का स्मरण कर आया हुआ उच्चै श्रवा नाम का इन्द्र का घोडा ही समझा । अर्थात् उसका हर एक घोडा उच्चै श्रवा के ऐसा ही था । उच्चै-श्रवा नामक इन्द्र के घोडे की उत्पत्ति समुद्र मे से ही हुई है ।

**तद्दन्तिपदसंघट्ट—त्रुटन्मौक्तिकशुक्तिकः ।**
**चक्रेऽम्बुधिर्भयोद्भ्रान्त—हृदयस्फुटनभ्रमम् ॥१५॥**

**अन्वयः**

तद्दन्तिपदसंघट्टत्रुटन्मौक्तिकशुक्तिकः अम्बुधिः भयोद्भ्रान्तहृदय-स्फुटनभ्रमं चक्रे ।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य दन्तिनो हस्तिन 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप' इत्यमर । तेषा पदाना चरणाना सघट्ट आमर्दस्तेन त्रुटन्ति स्फुटन्ति मौक्तिकानि मुक्ताफलानि यासु ता शुक्तयो मुक्तास्फोटा 'मुक्तास्फोट स्त्रियां शुक्ति' इत्यमर । यस्मिन् सोऽम्बुधि सागरो भयेन त्रासेनोद्भ्रान्त विह्वल यद्धृदय तस्य स्फुटन विच्छेदस्तस्य भ्रम भ्रान्ति चक्रे । शुक्तिस्फोटजनित-शब्देन समुद्रस्य हृदय स्फुटति किमिति प्रेक्षकाणा भ्रान्तिर्जातेति भाव । अत्र भ्रान्तिमानलङ्कार ।

**भाषा**

उसके हाथियो के पाव के नीचे दब कर टूटने वाली मोतियो की सीपो से अर्थात् उनके शब्दो से, प्रेक्षको को, भय से विह्वल समुद्र का हृदय ही तो नही फट रहा है, ऐसा भ्रम हुआ ।

**अन्विष्यन्मरणोपायं दुःखात्तत्सैन्यलुण्ठितः ।**
**कालकूटं हरग्रस्तं शुशोच पयसां निधिः ॥१६॥**

**अन्वयः**

तत्सैन्यलुण्ठितः पयसा निधिः दुःखात् मरणोपायम् अन्विष्यन् हरग्रस्तं कालकूट शुशोच ।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य सैन्यैश्चमूभिर्लुण्ठित स्वरत्नापहरणैरामर्दित पयसा जलाना निधि समुद्रो दु खाच्चमूसलुण्ठनजन्यक्लेशान्मरणस्य मृत्योरूपाय यत्नमन्विष्यन् ध्यायन् हरेण शिवेन ग्रस्त स्वगले स्थापित कालकूट, कालकूट नाम पूर्वं समुद्रे स्थितमुग्र विष शुशोच शोकेन सस्मार । मरणस्य सरलोपायमन्य कञ्चिदमन्यमान कालकूटस्यैव तादृश सामर्थ्य निश्चिन्वानस्तस्य च हरग्रस्तत्वेना-

ऽलभ्यत्वादधिक शोकमापेति भाव । कालकूटस्याऽप्युत्पत्ति समुद्रादेव जातेति पौराणिकी कथाऽत्राऽनुसन्धेया । अत्राऽतिशयोक्तिरलङ्कार ।

**भाषा**

उसकी सेना द्वारा रत्नादि के लेलेने से लूट लिया गया हुआ समुद्र, दु ख से, मरने का उपाय सोचते हुए अपने कालकूट नामक विष को शकर ने अपने गले मे रख लिया है, यह सोचकर, बहुत शोक करने लगा । अर्थात् यदि वह विष उसके पास होता तो उसके खाने से शीघ्र मृत्यु हो जाती ।

**विद्रमेषु समुद्रस्य कान्ताबिम्बौष्ठकान्तिषु ।**
**अराजन् राजपुत्रस्य प्रीतिपात्रीकृता दृशः ॥१७॥**

**अन्वयः**

समुद्रस्य कान्ताबिम्बौष्ठकान्तिषु विद्रुमेषु राजपुत्रस्य प्रीतिपात्रीकृताः दृशः अराजन् ।

**व्याख्या**

समुद्रस्य पयोधे कान्ताना रमणीना बिम्बफलवद्रक्तवर्णा ओष्ठा अधरास्तेषा कान्तिरिव कान्तिर्येषु तेषु विद्रुमेषु प्रवालेषु 'अथ विद्रुम पुसि प्रवाल पुनपुसकम्' इत्यमर । राजपुत्रस्य विक्रमाङ्कदेवस्य प्रीते स्नेहस्य पात्रीकृता भाजनीकृता प्रेमार्द्रा इत्यर्थ । दृशो नयनान्यराजन् शुशुभिरे लग्नानीति भाव ।

**भाषा**

स्त्रियो के बिम्ब फल के ऐसे लाल ओठों के समान दिखाई पडने वाले समुद्र के मूँगो पर उस राजपुत्र की प्रेम भरी दृष्टि पडी ।

**तेन केरलभूपाल—कीलालकलुषीकृतः ।**
**अगस्त्यमुनिसंत्रासमत्याज्यत पयोनिधिः ॥१८॥**

**अन्वयः**

तेन केरलभूपालकीलालकलुषीकृतः पयोनिधिः अगस्त्यमुनिसंत्रासम् अत्याज्यत ।

### व्याख्या

तेन विक्रमाङ्कदेवेन केरलस्य[१] केरलदेशस्य भूपाला राजानस्तेषा कीलालेन रुधिरेण 'शोणितेऽम्भसि कीलालम्' इत्यमर । कलुषीकृतो मलिनीकृतोऽपवित्रीकृत इत्यर्थ । पयोनिधिस्समुद्रोऽगस्त्यमुने कुम्भजमुनेस्सत्रासमाचमनत्रयेणैव सर्वसमुद्रजलरिक्तीकरणरूप भयमत्याज्यत तद्भयान्निवृत्तमकारयत । रक्तमिश्रितमपवित्र समुद्रजल कुम्भयोनि कदापि न पास्यतीति धिया निर्भयत्वमिति भाव ।

### भाषा

उसने केरलदेश के राजाओ को मारकर उनके रक्त से समुद्रजल को मिश्रित कर अतएव अपवित्र कर समुद्र को अगस्त्य मुनि के भय से छुडा दिया । अर्थात् अगस्त्य मुनि अब रक्त मिश्रित अपवित्र जल को कदापि न पीएँगे इसलिये समुद्र को अब उनका भय न रहा ।

**उदरालोडनोद्भ्रान्त-दन्तसंक्रान्तपन्नगैः ।**
**पाथोधेरन्त्रमालेव तद्दन्तिभिरकृष्यत ॥१६॥**

### अन्वयः

उदरालोडनोद्भ्रान्तदन्तसंक्रान्तपन्नगैः तद्दन्तिभिः पाथोधेः अन्त्रमाला इव अकृष्यत ।

### व्याख्या

उदरस्य समुद्रकुक्षेरालोडनान्मन्थनादुद्भ्रान्ता भयत्रस्ता दन्तेषु रदनेषु सक्रान्ता सलग्ना पन्नगा सर्पा येषा तैस्तस्य विक्रमाङ्कदेवस्य दन्तिभि करिभि पाथोधे पयोधेरन्त्रमाला इव पुरीतच्छ्रेणिरिव 'अन्त्र पुरीतत्' इत्यमर । आन्त्रमालेवेत्यर्थ । अकृष्यताऽऽकृष्टा । अत्र दन्ते उद्भ्रान्तसलग्नसर्पेष्वन्त्रमालाया उत्प्रेक्षणात्स्वरूपोत्प्रेक्षालङ्कार ।

---

[१] केरलदेशो भारतस्य दक्षिणपश्चिमकोणे विद्यमान 'ट्रावकोर' सहितान्यभूमिमण्डलात्मक आसीत् ।

### भाषा

विक्रमाङ्कदेव के हाथियो के, समुद्र के भीतर घुस कर उसका मन्थन करने से, घबडा कर उनके दाँतो मे लपटे हुए सर्पो से ऐसा प्रकट होता था मानो हाथियो ने समुद्र की अनडियाँ खीच ली हो ।

**तद्भयात्सिंहलद्वीप-भूपतिः शरणागतः ।**
**विशश्रामाश्रमपदे लोपामुद्रापतेर्मुनेः ॥२०॥**

### अन्वयः

तद्भयात् शरणागतः सिंहलद्वीपभूपतिः लोपामुद्रापतेः मुनेः आश्रमपदे विशश्राम ।

### व्याख्या

तस्माद्विक्रमादित्याङ्कद्भय भीतिस्तस्माच्छरणमागतो रक्षार्थं तत्समीपे समुपस्थित सिंहलद्वीपस्य सीलोननाम्ना प्रसिद्धस्य द्वीपस्य भूपतिर्नृपतिर्लोपामुद्राया अगस्त्यपत्न्या पतेर्मुनेरगस्त्यस्य 'अगस्त्य कुम्भसम्भव । मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी' इत्यमर । आश्रमपदे विशश्राम विश्रान्तिमाजगाम । सिंहलद्वीपस्याऽपि युद्ध विना विजयोऽनेन कृत इति भाव । अगस्त्याश्रमप्राप्त्या तस्य तापसाश्रमस्वीकारोऽपि सूचित ।

### भाषा

उसके भय से शरण मे आया हुआ सीलोन का राजा, अगस्त्यमुनि के आश्रम मे विश्राम करने लगा अर्थात् राजपाट छोडकर तपस्या करने लगा ।

**धुनानेन धनुश्चित्रं कृतास्तेन मुखेन्दवः ।**
**गाङ्गकुण्डपुरस्त्रीणां गलत्कुण्डलमण्डलाः ॥२१॥**

### अन्वयः

धनुः धुनानेन तेन गाङ्गकुण्डपुरस्त्रीणा मुखेन्दवः गलत्कुण्डलमण्डलाः कृताः (इति) चित्रम् ।

### व्याख्या

धनुश्चाप धुनानेन सचालयता टङ्कारयता वा तेन विक्रमाङ्कदेवेन [१]गाङ्ग कुण्डस्य गाङ्गकुण्डचोलपुरनामकस्य पुरस्य नगरस्य स्त्रीणा ललनाना मुखेन्दव आननचन्द्रा गलन्ति भूमौ पतन्ति कुण्डलमण्डलानि कर्णभूषणसमूहा येभ्यस्ते स्रस्तोन्तससमूहा कृता विरचिता इति चित्रमाश्चर्यकरम् । गाङ्गकुण्ड-चोलपुरस्य विजय कृतस्तेन युद्धे मृताना पतीना नाशात् स्त्रीणामाभूषणत्याग सजात इति भाव । अथवा कर्णपीडकेन भयकरधनुष्टङ्कारेण पूरिताना कर्णाना कम्पना-त्तद्गतभूषणपतन जातमिति भाव । अत्रधनु कम्पनेन कुण्डलाना निपत-नोक्त्याऽसङ्गत्यलङ्कार । "कार्यकारणयोर्भिन्नदेशतायामसङ्गति" इति लक्षणात् ।

### भाषा

उसके धनुष की टङ्कार करते रहने से गङ्गकुण्ड चोलपुर की स्त्रियो के मुखचन्द्र, कान के आभूषणो से रहित हो गए, यह एक आश्चर्य की बात है । अर्थात् धनुष के कर्ण के लिये असह्य टङ्कारो से कान का पर्दा फटने लगने से कानो को जोर से हिलाने पर, उनमे के आभूषण गिर गए । अथवा पतिमरण से आभूषण धारण करना बन्द हो गया ।

**यशःकूर्चिकया चित्रं दिग्भित्तिषु निविष्टया ।**
**द्रविडीगण्डफलके तेनावर्त्यत पाण्डिमा ॥२२॥**

### अन्वयः

**तेन दिग्भित्तिषु निविष्टया यशःकूर्चिकया द्रविडीगण्डफलके पाण्डिमा अवर्त्यत इति चित्रम् ।**

### व्याख्या

तेन कुमारेण विक्रमाङ्कदेवेन दिश एव भित्तयस्तासु निविष्टया सप्रापितया यशस स्वकीर्त्ते कूर्चिका यशोरूपश्वेतीकरणद्रवपदार्थस्य लेपनयन्त्र तया द्रविडीना द्रविडाङ्गनाना गण्डफलके कपोलस्थले पाण्डिमा शुक्लत्वमवर्त्यत प्रावर्त्यत शुक्लत्व कृतमित्यर्थ । इति चित्रमाश्चर्यकरम् । पतिमरणात् खेदात्

---

[१] राजेन्द्र चोल (गगैकोण्ड) निर्मापिता चोलराजधानी । कावेरीनद्यास्तटे विद्यमानाऽऽसीत् । सम्प्रति गङ्गकुण्डचोलपुरनाम्ना प्रसिद्धा ।

कुङ्कुमादिरक्तीकरणलेपाभावाच्च शुक्लत्व जातमिति भाव । अत्राऽप्य-सङ्गत्यलङ्कार ।

### भाषा

दिशा रूपी भीतो पर उसके यशरूपी सफेदी की कूची के फिरने से द्रविड देश की ललनाओ के कपोलस्थल सफेद पड गये, यह एक आश्चर्य की बात है। अर्थात् द्रविड देश के वीरो को मारडालने से उनकी स्त्रियो के कपोलस्थल दु ख से अथवा केसरिया चन्दन आदि का प्रयोग न होने से सफेद पड गये थे।

**गलितोत्तुङ्गशृंङ्गत्वाद् द्विषां तेन जिगीषुणा ।**
**अपि लूनशिरस्केव राजधानी व्यधीयत ॥२३॥**

### अन्वयः

जिगीषुणा तेन द्विषां राजधानी अपि गलितोत्तुङ्गशृङ्गत्वात् लूनशिरस्का इव व्यधीयत ।

### व्याख्या

जेतुमिच्छुर्जिगीषुस्तेन जिगीषुणा विजयैषिणा तेन विक्रमाङ्कदेवेन द्विषा शत्रूणा 'द्विड्विपक्षाहितामित्र दस्युशात्रवशत्रव' इत्यमर । राजधानी धीयन्ते राजानोऽस्यामिति धानी, राज्ञो धानी राजधानी प्रधानपुरी अपि गलितानि भग्नानि सन्ति पतितान्युत्तुङ्गान्यत्युच्चानि शृङ्गाणि शिखराणि 'कूटोऽस्त्री शिखर शृङ्गम्' इत्यमर । यस्या सा तस्या भावो गलितोत्तुङ्गशृङ्गत्व तस्मात् कारणाल्लून च्छिन्न शिरो मस्तक यस्या सा लूनशिरस्केव 'शेषाद्विभाषेति कप्' व्यधीयत सम्पादिता। तस्या अत्युच्चप्रासादशिखरपतनात् राजधानी छिन्नमस्तकेव भाति स्मेति भाव । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

विजय की इच्छा रखने वाले विक्रमाङ्कदेव ने शत्रु की राजधानी के ऊँचे २ शिखरो के टूट कर नीचे गिर पडने के कारण, मानो उसे भी सिर कटी बना दिया ।

**तत्प्रतापमवोचन्त वक्त्रैर्विगलदश्रुभिः ।**
**पुरन्ध्रयो नरेन्द्राणां जलार्द्रासमतां गतैः ॥२४॥**

**अन्वयः**

नरेन्द्राणां पुरन्ध्रयः जलार्द्रासमतां गतैः विगलदश्रुभिः वस्त्रैः तत्प्रतापम् अवोचन्त ।

**व्याख्या**

नरेन्द्राणा विपक्षनृपाणा पुरन्ध्रय कान्ता जलार्द्राभिर्जलार्द्रव्यजनै सह समता तुल्यता गतै प्राप्तैर्विगलन्ति पतन्त्यश्रूणि नेत्रजलानि येभ्यस्तानि विगलदश्रूणि तैर्वस्त्रैर्वासोभि 'वस्त्रमाच्छादन वास' इत्यमर । तस्य राजकुमारविक्रमाङ्कदेवस्य प्रताप प्रभावमवोचन्त समूचु । पतिविरहादसह्यदुःखेन रोदनादश्रुपरम्परयाऽऽर्द्रं वस्त्रमेव तस्य कुमारस्य प्रताप प्रकटयितुमलमिति भाव । अत्र विगलदश्रु-वस्त्राणा जलार्द्राभिस्साम्यप्रतिपादनादुपमालङ्कार ।

**भाषा**

विपक्षी राजाओ की स्त्रियाँ पानी से भिगाए हुए पखो के समान अश्रुओ से अत्यधिक भीगे हुए अतएव अश्रुओ की बूदो को टपकाने वाले अपने वस्त्रो से उस राजकुमार के प्रताप को व्यक्त करती थी ।

**चोलान्तःपुरगेहेषु सिहानां तस्य बाहुना ।**
**लोललाङ्गूलदण्डानां द्वाररक्षा समर्पिता ॥२५॥**

**अन्वयः**

तस्य बाहुना चोलान्तःपुरगेहेषु द्वाररक्षा लोललाङ्गूलदण्डाना सिहाना समर्पिता ।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य बाहुना भुजेन चोलस्य चोलदेशीयनृपस्याऽन्त पुरगेहे-ष्ववरोधगृहेषु 'स्त्र्यगार भूभुजामन्त पुर स्यादवरोधनम् । शुद्धान्तश्चावरो-धश्च' इत्यमर । द्वाराणा रक्षा रक्षणभारो लोलाश्चञ्चला लाङ्गूला दण्डा इव पुच्छदण्डा येषा ते तेषा सिहाना मृगेन्द्राणा कृते सर्मापता निहिता । शत्रुनाशानन्तर सर्वेषु नगरस्थेषु पलायितेषु सत्सु रिक्तत्वात्तदन्त पुरेषु सिहा समागत्य निवसन्ति स्म । द्वारपाला दण्ड धारयन्तीति सिहा स्वपुच्छ दण्डरूप धारयन्तो द्वारपालकार्यं कुर्वन्ति स्मेति भाव । अनेन तद्भुजशौर्यं व्यज्यते । अत्र नगराणा शून्यत्वरूपव्यङ्ग्यस्यैव भङ्ग्या कथनात्पर्यायोक्तालङ्कार. ।

### भाषा

उसके भुजबल ने चोलराजाओ के अन्त पुर की दरबानी, चञ्चल पूछ रूपी दण्डे को धारण करने वाले सिहो को सौप दी। अर्थात् उस नगर से सब मनुष्यो के भाग जाने पर नगर के बीरान जगल हो जाने से उसके अन्त पुर को गुफा समझ उसमे शेर रहने लगे।

**चिन्तया दुर्बलं देहं द्रविडो यत्पलायितः।**
**संकटाद्रिदरीद्वार-प्रवेशे बह्वमन्यत ॥२६॥**

### अन्वयः

यत्पलायितः द्रविडः सकटाद्रिदरीद्वारप्रवेशे चिन्तया दुर्बल देहं बहु अमन्यत।

### व्याख्या

यस्माद्विक्रमाङ्कदेवात्पलायित समराङ्गण स्वगृहञ्च परित्यज्य द्रुतगतिमवलम्ब्य प्रधावितो द्रविडो द्रविडदेशनृप सकट सबाधमल्पावकाशमित्यर्थ। 'सकट नातु सबाध' इत्यमर। यदद्रे पर्वतस्य दरीणा कन्दराणा 'दरी तु कन्दरो वा स्त्री' इत्यमर। द्वार 'स्त्री द्वार्द्वार प्रतीहार' इत्यमर। तस्य प्रवेशस्तस्मिन् पर्वतकन्दराणामल्पावकाशद्वारप्रवेशे चिन्तया पराजयचिन्तया दुर्बल सामर्थ्यहीनमत एव कृश देह शरीर बह्वमन्यत प्रशसितवान्। शरीरस्य स्थूलत्वेऽल्पावकाशाद्रिदरीद्वारे प्रवेशाभावे स्वसरक्षणमसम्भवमिति स्वकृशत्व प्रशसितवानिति भाव।

### भाषा

विक्रमाङ्कदेव के भय से घर दुवार छोड कर भागा हुआ द्रविड देश का राजा, पर्वत की कन्दराओ के सकुचित द्वार मे (छिपने के लिये) घुसने योग्य, चिन्ता से कृश भये हुए अपने शरीर की बहुत प्रशसा करने लगा। अर्थात् शरीर स्थूल होने से वह उस कन्दरा मे न घुस सकता और उसको छिपने का अवसर न मिलता। इसलिये अपने दुबले पतले शरीर की सराहना करने लगा।

**दृश्यन्तेऽद्यापि तद्भीति-विद्रुतानां द्रुमालिषु।**
**[१]अलकाश्चोलकान्तानां कर्पूरतिलकाङ्किताः ॥२७॥**

---

[१] अलिका इत्यपि पाठभेद।

**अन्वयः**

द्रुमालिषु तद्भीतिविद्रुतानां चोलकान्तानाम् अलकाः अद्यापि कर्पूरतिलकाङ्किताः दृश्यन्ते ।

**व्याख्या**

द्रुमाणा वृक्षाणामालय· पक्तयस्तासु द्रुमाणामालयो येषु वा वनेषु तस्माद्राजकुमाराद्भीतिर्भय तया विद्रुताना पलायिताना, चोलकान्ताना चोलदेशस्थकामिनीनामलका केशपाशा अद्यापि कर्पूरेण कर्पूरमिश्रितेन तिलकेनाऽङ्किताः शोभिता दृश्यन्ते इति विरोध । पक्षे कर्पूरनामकतिलकनामकवृक्षैरङ्किताः सम्बद्धा इति परिहार । पतिमरणात्तद्भीतिविद्रुताना स्त्रीणा अलकाः कर्पूरतिलकेनाऽङ्किता दृश्यन्त इति विरोधस्तत्परिहारस्तु कर्पूरतिलकवृक्षेषु व्यासक्ता अलका इति भाव । अत्र श्लेषानुप्राणितो विरोधाभासालङ्कार ।

**भाषा**

उस राजा के भय से, वृक्षो के समूहो मे से या जगलो मे से भागने वाली चोल देश की नारियो के केश आज भी कर्पूरमिश्रित तिलक से शोभित दिखाई देते है । विधवा होकर, भागने वाली स्त्रियो के केश मे तिलक, इस विरोध के दूर करने के लिये उन स्त्रियो के कर्पूर और तिलक के वृक्षो से फसे हुए केश दिखाई देते है ऐसा अर्थ करने से विरोध दूर हो जाता है ।

**क्षणाद्विगलितानर्घ्य-पदार्था द्रविडक्षितेः ।**
**प्राकारसूत्रशेषाभूत् काञ्ची तद्बाहुकम्पिता ॥२८॥**

**अन्वयः**

तद्बाहुकम्पिता क्षणात् विगलितानर्घ्यपदार्था द्रविडक्षितेः काञ्ची प्राकारसूत्रशेषा अभूत् ।

**व्याख्या**

तस्य विक्रमाङ्कदेवस्य बाहुना भुजेन कम्पिता धर्षिता पक्षे सचालिता क्षणात् क्षणमात्रादेव विगलिता नष्टा पक्षे पतिता अनर्घ्यपदार्था बहुमूल्यरत्नादिपदार्था यस्या सा द्रविडक्षितेर्द्रविडराजपृथिव्या काञ्ची तन्नामनगरी पक्षे रशना प्राकारस्य प्राचीरस्य 'प्राकारो वरण साल प्राचीर प्राततो वति·'

इत्यमर । सूत्र भग्नावशेषचिह्नरूपरेखैव शेषोऽवशिष्टाशो यस्या सा पक्षे प्रकर्षेणऽऽकारे सूत्रमेव शेषो यस्या साऽभूत् । श्लेषानुप्राणित समासोक्तिरलङ्कार ।

### भाषा

उस राजकुमार के भुजबल से त्रस्त और क्षणभर मे जिसके बहुमूल्य रत्न नष्ट हो गए है ऐसी द्रविड राजा की राजधानी काञ्ची प्राकार (बाहरी दीवाल) के नष्ट हो जाने से उसके चिन्ह की लकीर मात्र शेष रह गई हो ऐसी हो गई थी। पक्ष मे उस राजकुमार के बाहु से हिलाई गई द्रविड देश रूपी कामिनी की करधनी, हिलाने से बहुमूल्य रत्नो के गिर पडने के कारण, आकार मे डोरा मात्र शेष रह गया हो, ऐसी हो गई थी ।

**तेनानास्पदमात्मीय—प्रतापोत्कर्षरागिणा ।**
**चक्रेऽनङ्गप्रतापस्य [१]वेङ्गिभूपाङ्गनाजनः ॥२६॥**

### अन्वय

आत्मीयप्रतापोत्कर्षरागिणा तेन वेङ्गिभूपाङ्गनाजनः अनङ्गप्रतापस्य अनास्पदं चक्रे ।

### व्याख्या

आत्मनोऽयमित्यात्मीय प्रताप प्रभावस्तस्योत्कर्षोऽभिवृद्धिस्तस्य रागिणाऽभिलाषुकेण तेन राजकुमारेण वेङ्गिभूपस्याऽङ्गनाजनो रमणीसमूहोऽनङ्गप्रतापस्य कामदेवप्रभावस्याऽनास्पदमभाजन चक्रे कृत । वेङ्गिभूपस्य पराजयादापत्तिसागरमग्नास्तदङ्गना कामसम्बन्धिविलासरतिक्रीडादीन् सकलान् सुखान्विस्मृतवत्य इति भाव । अथवा पतिमरणात्तासा कामक्रीडा सर्वथा लुप्तेति भाव ।

### भाषा

अपने प्रताप का उत्कर्ष चाहने वाले उस राजकुमार ने वेङ्गिभूपाल की रानियो को कामदेव के प्रताप का अस्थान कर दिया। अर्थात् राजा के मर जाने से उनमे काम वासना लुप्त हो गई ।

---

[१] वेंगिदेशो भारतस्य दक्षिणपूर्वे गोदावरीकृष्णानद्योर्मध्ये विद्यमान आसीत् ।

आक्रान्तरिपुचक्रेण [१]चक्रकोटपतेः परम् ।
लिखिताश्चित्रशालासु तेनामुच्यन्त दन्तिनः ॥३०॥

**अन्वयः**

आक्रान्तरिपुचक्रेण तेन चक्रकोटपतेः चित्रशालासु लिखिताः दन्तिनः परम् अमुच्यन्त ।

**व्याख्या**

आक्रान्त समाक्रान्त विजितमित्यर्थ । रिपुचक्र शत्रुचक्रवाल येन तेन विजितारिसमूहेन तेन विक्रमाङ्कदेवेन चक्रकोटनामकस्थानस्य पति स्वामी तस्य चक्रकोटदेशाधिपस्य चित्राणा शालासु गृहेषु चित्रमन्दिरेषु लिखिताश्चित्रिता दन्तिनो गजा पर केवलममुच्यन्त मुक्ता. । चक्रकोटपतेस्सकला गजा स्वायत्तीकृता इत्यर्थ । अत्र केवल चित्रलिखिता गजा एव त्यक्ता इत्युक्त्या सर्वाऽपि गजसेना स्वायत्तीकृतेति प्रतीत्याऽर्थापत्तिरलङ्कार ।

**भाषा**

शत्रु समूह को जीतने वाले उस राजकुमार विक्रमाङ्कदेव ने चक्रकोट के राजा की चित्रशाला मे चित्रित हाथियो को ही केवल छोड दिया अर्थात् उसके सब हाथी ले लिये ।

कृतकार्यः परावृत्य कियत्यप्यध्वनि स्थितः ।
अथ गम्यत्वमरतेरकस्मादेव सोऽगमत् ॥३१॥

**अन्वयः**

अथ कृतकार्यः सः परावृत्य कियति अध्वनि अपि स्थितः (सन्) अकस्मात् एव अरतेः गम्यत्वम् अगमत् ।

**व्याख्या**

अथ दिग्विजयानन्तर कृत कार्यं दिग्विजयरूपकृत्य येन सः सम्पादितोद्देश्य.

---

[१] वेगिदेशस्योत्तरतश्चक्रकोटनगरमासीत । एतत्प्रदेशे हस्तिनामधिकता 'आइने अकबरी' पुस्तकेनाऽपि समर्थ्यते ।

स विक्रमाङ्कदेव परावृत्य निवृत्य कियत्यध्वन्यपि मार्गेऽपि स्थितस्सन् विजय-प्रदेशात्परावृत्य स्वदेशमार्गे कियद्दूर समागतोऽपि सन्नकस्मादेवाऽतर्कितोपनत-मरतेरुद्वेगस्य गम्यत्व पात्रत्वमगमत् प्राप्त ।

**भाषा**

बाद मे दिग्विजय का कार्य सम्पन्न कर लौटते हुए मार्ग मे कुछ दूर भी आजाने पर, वह अकस्मात अशान्ति का पात्र बन गया अर्थात् वह उद्विग्न हो उठा ।

**स शङ्कातङ्कमासाद्य स्फुरणाद्वामचक्षुषः ।**
**श्रेयोऽस्तु तातपादाना-मिति सास्रमवोचत ॥३२॥**

**अन्वयः**

सः वामचक्षुषः स्फुरणात् शङ्कातङ्कम् आसाद्य तातपादाना श्रेयः अस्तु इति सास्रम् अवोचत ।

**व्याख्या**

स राजकुमारो वाम दक्षिणेतर चक्षुर्नयन तस्य वामनयनस्य स्फुरणाच्च-लनात् शङ्काया सन्देहस्याऽऽतङ्क भयमासाद्य प्राप्य तातपादाना पूज्यचरणाना (मम पितु ) श्रेय कल्याणमस्त्विति वचोऽस्रेणाऽश्रुणा सहित यथास्यात्तथाऽवोच-तोक्तवान् ।

**भाषा**

बाईं आँख के फडकने से सन्देह से भयभीत होकर उसने आँसू बहाते हुए पिता जी का शुभ हो, ऐसा कहा ।

**अदृश्यैः कैश्चिदागत्य चिन्तया शून्यचेतसः ।**
**तस्यामङ्गलवार्तव कापि कर्णे न्यधीयत ॥३३॥**

**अन्वयः**

अदृश्यैः कैश्चित् इव आगत्य चिन्तया शून्यचेतसः तस्य कर्णे का अपि अमङ्गलवार्ता न्यधीयत ।

### व्याख्या

अदृश्यैरदृष्टिगोचरैः कैश्चिदिवाऽनिर्दिष्टनामकैरिवाऽऽगत्य सम्प्राप्य चिन्तयाऽऽध्यानेन 'स्याच्चिन्तास्मृतिराध्यानम्' इत्यमर । शून्यं चेतश्चित्त यस्य तस्य विवेकरहितहृदयस्य 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । तस्य विक्रमाङ्कदेवस्य कर्णे श्रोत्रे काऽपि काचित् विचित्राऽप्यमङ्गलवार्ताऽशुभवृत्तान्तो न्यधीयत स्थापिता कथितेत्यर्थ ।

### भाषा

प्रत्यक्ष पहिचान मे न आने वाले लोगो के समान कुछ लोगो ने मानो आकर चिन्ता से शून्य हृदय उस राजपुत्र के कान मे कोई अमङ्गल बात कही।

**शुभाशुभानि वस्तूनि संमुखानि शरीरिणाम् ।**
**प्रतिबिम्बमिवायान्ति पूर्वमेवान्तरात्मनि ॥३४॥**

### अन्वयः

संमुखानि शुभाशुभानि वस्तूनि शरीरिणाम् अन्तरात्मनि प्रतिबिम्बम् इव पूर्वम् एव आयान्ति ।

### व्याख्या

समुखानि समुखमागतानि सन्निकटवर्तीनीत्यर्थ । शुभ मङ्गल्यमशुभमङ्गल्य तानि मङ्गल्यामङ्गल्यानि वस्तूनि घटना शरीरिणा प्राणिनामन्तरात्मानि प्रतिबिम्बमिव प्रतिच्छायमिव प्रागेवाऽऽयान्ति पूर्वमेव समागच्छन्ति । भवितव्यतायाः परिज्ञान प्राणिनामन्त प्रथममेव सूचितम्भवतीति भाव ।

### भाषा

निकट भविष्य मे होने वाली शुभ और अशुभ घटनाएँ प्राणियो के हृदय मे प्रतिबिम्ब के समान पहिले ही प्रतिबिम्बत हो जाती हैं।

**अवगाहितनिःशेष–शास्त्रनिर्मलधीरपि ।**
**अकारणमसौ प्राप्तः कुमारो यदधीरताम् ॥३५॥**

**अन्वयः**

यत् अवगाहितनिःशेषशास्त्रनिर्मलधी अपि असौ कुमारः अकारणम् अधीरतां प्राप्तः ।

**व्याख्या**

यद्यस्मात् कारणादवगाहितानि विलोडितानि निःशेषशास्त्राणि सकलागमास्तैर्निर्मला विशदा धीर्बुद्धिर्यस्य स 'बुद्धिर्मनीषा धिषणा धी प्रज्ञा शेमुषी मति' इत्यमर । निर्मथितसकलशास्त्रतत्वतया विशदप्रज्ञोऽपि असौ कुमारो विक्रमाङ्कदेवोऽकारण कारणरहित यथा स्यात्तथाऽधीरता चाञ्चल्य प्राप्त । सचिन्तो भूदित्यर्थ. । यदित्यनेन पूर्वश्लोकार्थ सम्बद्ध्यते ।

**भाषा**

इस कारण से सम्पूर्ण शास्त्रो के अध्ययन से निर्मल बुद्धि वाला भी वह राजकुमार निष्कारण ही अधीर हो उठा ।

**सर्वस्वदानमालोच्य दुर्निमित्तप्रशान्तये ।**
**अप्रयाणमसौ चक्रे ततः कृष्णानदीतटे ॥२६॥**

**अन्वयः**

ततः असौ दुर्निमित्तप्रशान्तये सर्वस्वदानम् आलोच्य कृष्णानदीतटे अप्रयाणं चक्रे ।

**व्याख्या**

ततस्तदनन्तरमसौ प्रसिद्ध कुमारो दुर्निमित्तस्य वामाक्षिस्फुरणरूपदुश्शकुनस्य प्रशान्तये निवारणाय सर्वस्वस्य विजयापहृताना सकलवस्तूना दानं पात्रेषु वितरण समालोच्य निर्धार्य कृष्णानद्यास्तटे तीरेऽप्रयाणमवस्थान चक्रे । तत्रैव स्थितोऽभूदित्यर्थ. ।

**भाषा**

इसके अनन्तर वह (बॉई ऑख का फडकना रूप) बुरे शकुन की शान्ति के लिये, विजय मे प्राप्त सब वस्तुओ का दान कर देने का निश्चय कर, कृष्णा नदी के तट पर रुक गया ।

स तत्क्षणात्परिम्लान-मुखं संमुखपातिनम् ।
ददर्श राजधानीतः प्रधानं दूतमागतम् ॥३७॥

**अन्वयः**

सः तत्क्षणात् राजधानीतः आगतं परिम्लानमुखं संमुखपातिनं प्रधानं दूतं ददर्श ।

**व्याख्या**

स विक्रमाङ्कदेवस्तत्क्षणात् तस्मिन्नेव समये राजधानीत कल्याणपुरत आगत प्राप्त परिम्लान ग्लानिपरीत मुखमानन यस्य त चिन्तितवदनमित्यर्थ । समुखमग्रे पतति समागच्छतीति समुखपाती त समुखमागच्छन्त प्रधान विशिष्ट दूत सदेशहर 'स्यात्सदेशहरो दूत' इत्यमर । ददर्श दृष्टवान् ।

**भाषा**

उसी समय उसने कल्याणपुर से आए हुए उदास मुख वाले सामने उपस्थित मुख्य दूत को देखा ।

**अथ कुलकेन दूतं वर्णयति कविः—**

अप्रियावेदने जिह्वा-मवगम्य पराङ्मुखीम् ।
कथयन्तमिवानर्थं श्वासैरत्यर्थमायतैः ॥३८॥

**अन्वयः**

अप्रियावेदने जिह्वा पराङ्मुखीम् अवगम्य अत्यर्थम् आयतैः श्वासैः अनर्थं कथयन्तम् इव (तं राजनन्दनः पप्रच्छ ।) इति द्विचत्वारिंशत्तमेन श्लोकेन सम्बन्धः ।

**व्याख्या**

अप्रियस्याऽशुभवृत्तान्तस्याऽऽवेदने कथने जिह्वा रसना पराङमुखी विमुखी-मनुद्युक्तामित्यर्थ । अवगम्य ज्ञात्वाऽत्यर्थमत्यन्तमायतैर्दीर्घै श्वासै श्वसनै करणैरनर्थमनिष्ट कथयन्तमिव विज्ञापयन्तमिव (राजनन्दन पप्रच्छेति द्विचत्वारिंशत्तमश्लोकेन सम्बन्ध)। अत्रोत्प्रेक्षालङ्कार. ।

**भाषा**

अप्रिय बात कहने को जीभ प्रस्तुत नही है ऐसा समझ कर मानो जोर २ से सास भर कर अनिष्ट बात कहने वाले (दूत को राजपुत्र ने पूछा।) यह ४२ वे श्लोक से सम्बन्धित है।

**निर्यद्भिरतिमात्रोष्णै-र्मुखनिश्वासवायुभिः।**
**निवेदयन्तं दुर्वार्ता-वज्रानलमुपस्थितम् ॥३९॥**

**अन्वयः**

निर्यद्भिः अतिमात्रोष्णैः मुखनिश्वासवायुभिः उपस्थित दुर्वार्तावज्रानल निवेदयन्तम् (दूतं पप्रच्छेत्यन्वयः।)

**व्याख्या**

निर्यद्भिर्निगच्छद्भिरतिमात्रोष्णै प्रकामोष्णैर्मुखस्य वदनस्य निश्वासवायुभि श्वसनपवनैरुपस्थित विद्यमान दुर्वार्ताऽशुभवृत्तान्त एव वज्राग्नि कुलिशवन्हिस्त निवेदयन्त प्रकटयन्तम् (दूत पप्रच्छेति सम्बन्ध।) मुखनिश्वासवायुकरणकदुर्वार्तारूपवज्राग्निप्रकटनक्रियाया दूते उत्प्रेक्षितत्वादुत्प्रेक्षा रूपकानुप्राणिता।

**भाषा**

विद्यमान दुर्वाता रूपी वज्राग्नि को अपने मुख से हॉपने मे निकलने वाले अत्यन्त गरम २ श्वास रूपी वायु से प्रकट करने वाले (राजदूत को पूछा।) अग्नि के ससर्ग से श्वासवायू का गरम हो जाना स्वाभाविक है।

**ककुभां भर्तृभक्तानां पृच्छन्तीनां नृपस्थितिम्।**
**विद्रवन्तमिवाभान्तमत्यन्तत्वरितैः पदैः ॥४०॥**

**अन्वयः**

नृपस्थिति पृच्छन्तीना भर्तृभक्तानां ककुभाम् अत्यन्तत्वरितैः पदैः विद्रवन्तम् इव आभान्तम् (दूतं पप्रच्छ।)

**व्याख्या**

नृपस्य राज्ञ स्थितिमवस्था पच्छन्तीना जिज्ञासमानाना भर्तभक्ताना स्वामि

स्वरूपराजभक्तानां ककुभां दिशां दिशो दिगङ्गनाः प्रतीत्यर्थः। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। अत्यन्तत्वरितैरत्यन्तशीघ्रगामिभिः पदैश्चरणैर्विद्रवन्तमिव धावन्तमिवाऽऽभान्तं भासमानम् (दूतं पप्रच्छ।)

### भाषा

राजा की खबर पूछने वाली, अपने स्वामी की भक्त दिशाओं की तरफ़ अत्यन्त वेग से भाग चलने वाले (दूत को देखा।)

**अनर्थवार्तावहन—महापातकदूषितम् ।**
**गणयित्वेव धैर्येण सर्वथापि निराकृतम् ॥४१॥**

### अन्वयः

अनर्थवार्तावहनमहापातकदूषितं गणयित्वा इव सर्वथा अपि धैर्येण निराकृतं (दूतं पप्रच्छ।)

### व्याख्या

अनर्थवार्ताया अनिष्टवृत्तान्तस्य वहनेन प्रापणेन धारणेन वा यन्महापातकं महापापं तेन दूषितं कलुषितहृदयं गणयित्वेव विदित्वेव धैर्येण धीरतया कर्त्रा सर्वथाऽपि सर्वप्रकारेणाऽपि निराकृतं परित्यक्तं (दूतं पप्रच्छ।) अनिष्टवृत्तान्तधारण-महापापमेनं विगणय्य धैर्येणाऽपि त्यक्तसङ्गमित्यर्थः। अत्रोत्प्रेक्षालङ्कारः

### भाषा

अशुभ वार्ता को धारण करने के पाप से मानों दूषित समझ कर धैर्य से एकदम परित्यक्त अर्थात् अधीर (दूतको पूछा।)।

**कृतप्रणाममासन्नमथ तं राजनन्दनः ।**
**कुशलं तातपादानामिति पप्रच्छ वत्सलः ॥४२॥**

### अन्वयः

अथ वत्सलः राजनन्दनः आसन्नं कृतप्रणामं तं तातपादानां कुशलम् इति पप्रच्छ।

**व्याख्या**

अथाऽनन्तर वत्सलः पितृविषयकस्नेहवान् राजनन्दनो राजकुमार आसन्न समीपागत कृतप्रणाम कृतनमस्कार त दूत तातपादाना मम पितृचरणाना कुशल क्षेममस्तीति 'कुशल क्षेममस्त्रियाम्' इत्यमर । पप्रच्छ पृष्टवान् ।

**भाषा**

इसके अनन्तर पास मे आकर प्रणाम करने वाले उस दूत को पिता का प्रेम रखने वाले राजपुत्र ने पिता जी कुशल तो हैं, ऐसा पूछा ।

**पञ्चभिः कुलकं, पञ्चश्लोकात्मकं कुलक[1]मत्र समाप्तमित्यर्थः ।**

**उपविश्य शनैः पार्श्वे स निरुत्सा[2]हया गिरा ।**
**कथयामास नासाग्र–विलुठद्बाष्पशीकरः ॥४३॥**

**अन्वयः**

सः पार्श्वे शनैः उपविश्य नासाग्रविलुठद्बाष्पशीकरः (सन्) निरुत्साहया गिरा कथयामास ।

**व्याख्या**

स दूत पार्श्वे समीपे शनैर्मन्दमुपविश्य स्थित्वा नासाग्रे नासिकाग्रे विलुठन्तो वर्तमाना वाष्पशीकरा अश्रुबिन्दवो यस्यैव भूतस्सन् 'शीकरोऽम्बुकणा स्मृता' इत्यमर । निरुत्साहयोत्साहशून्यया गिरा वाचा 'गीर्वाग्वाणी सरस्वती' इत्यमरः । कथयामास उवाच ।

**भाषा**

वह दूत धीरे से पास मे बैठ कर, नासिका के अग्रभाग मे आँसू की बूद से युक्त होकर अनुत्साहित वाणी से बोलने लगा ।

**विधेहि दृढमात्मानं मावधीरय धीरताम् ।**
**कुमार व्यापिपर्त्येष दुर्वीताप्रलयाम्बुदः ॥४४॥**

---

[1] छन्दोबद्धपद पद्य तेन मुक्तेन मुक्तकम् । द्वाभ्यान्तु युग्मक सदानितक त्रिभिरिष्यते । कलापक चतुर्भिश्च पञ्चभि कुलक मतम् ।

[2] निरुत्सवयेत्यपि पाठ

**अन्वयः**

हे कुमार आत्मानं दृढ विधेहि धीरतां मा अवधीरय एषः दुर्वार्ता-प्रलयाम्बुदः व्यापिपर्ति ।

**व्याख्या**

हे कुमार ! हे राजकुमार ! विक्रमाङ्कदेव ! आत्मान स्व दृढ निश्चल विधेहि कुरु । धीरता धैर्यं माऽवधीरय मा तिरस्कुरु । एष अग्रे कथनीयो दुर्वार्त्तारूपोऽमङ्गल्यवृत्तान्तरूप प्रलयाम्बुद प्रलयकालिकमेघो व्यापिपर्ति व्यापारं करोति । प्रलयकालिकमेघजन्यकष्टसमा कष्टप्रदा वार्ता श्रोतु धैर्ययुक्तो भवेति भाव ।

**भाषा**

हे राजकुमार ! विक्रमाङ्कदेव ! अपने को कडा बनालो । धैर्य मत छोडो । आगे कहा जाने वाला बुरा वृत्तान्त रूपी प्रलयकाल का मेघ अब व्यापार करने जा रहा है । अर्थात् प्रलयकाल के मेघ से होने वाले कष्ट के समान कष्ट देने वाली दुःखद वार्ता अब मै सुनाने जा रहा हूँ । इसलिये दृढ होकर धैर्य से सुनो ।

**आपाण्डुपाण्ड्यमालोल-चोलमाक्रान्तसिंहलम् ।**
**देवस्त्वद्विजयं श्रुत्वा भेजे सुखमयीं स्थितिम् ॥४५॥**

**अन्वयः**

देवः आपाण्डुपाण्ड्यम् आलोलचोलम् आक्रान्तसिहल त्वद्विजयं श्रुत्वा सुखमयीं स्थिति भेजे ।

**व्याख्या**

देवो राजाऽऽहवमल्लदेव आपाण्डुरासमन्तातपाण्डु. पाण्डुर 'हरिण पाण्डुरः पाण्डु' इत्यमर । पाण्ड्य पाण्ड्यनृपो येन तमासमन्ताल्लोलश्चलश्चोलदेशभूपो येन तमाक्रान्त सिंहल सिंहलद्वीपो येन त तव भवतो विजय दिग्विजय श्रुत्वाऽऽ-कर्ण्य सुखमयी सुखैकानुभवभूता स्थितिमवस्था भेजे प्राप ।

**भाषा**

राजा आहवमल्ल देव ने पाण्ड्राजा को निस्तेज करने वाले चोलराजा को घबडहट मे डालने वाले और सीलोन के राजा को परास्त करने वाले तुम्हारे विजय को सुन कर सुखमय अवस्था का अनुभव किया। अर्थात् राजा को अत्यन्त हर्ष हुआ।

**अकाण्डे विधि चाण्डालस्तस्मै दाहज्वरं ददौ।**
**न कैश्चिदपि लभ्यन्ते निष्कम्पाः सुखसंपदः ॥४६॥**

**अन्वयः**

अकाण्डे विधिचाण्डालः तस्मै दाहज्वरं ददौ। कैश्चित् अपि निष्कम्पाः सुखसम्पदः न लभ्यन्ते।

**व्याख्या**

अकाण्डेऽनवसरे विधिर्ब्रम्हैव चाण्डालो दुष्टकार्यकर्ता तस्मै राज्ञे दाहज्वर[१] ज्वरविशेष महासतापकर ज्वरमित्यर्थ। ददौ दत्तवान्। विधिवशादसमय एव स दाहज्वराक्रान्तोऽभूदित्यर्थ। कैश्चिदपि भाग्यवद्भिर्निष्कम्पा कम्पेन चाञ्चल्येन रहिता निष्कम्पा विघ्नरहिता सुखसम्पद सुखसम्पत्तयो न लभ्यन्ते न प्राप्यन्ते। पूर्वार्द्धस्योत्तरार्द्धेन समर्थनादर्थान्तिरन्यासालङ्कार।

**भाषा**

बेमौके ही चाण्डाल विधि ने राजा को दाहज्वर से पीडित कर दिया। कोई भी मनुष्य विघ्न रहित सुखसम्पत्ति को नही प्राप्त कर सकते।

**अपरिश्रान्तसन्तापश्चन्दनालेपनेन सः।**
**त्वदङ्कपालीपेयूषमाचकाङ्क्ष पुनः पुनः ॥४७॥**

---

[१] वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्व तथा वमि।
कण्ठोष्ठमुखनासाना पाक स्वेदश्च जायते॥
प्रलापो वक्त्रकटुता मूर्च्छादाहो मदस्तृषा।
पीतविण्मूत्रनेत्रत्व पैत्तिके भ्रम एव च॥
इति दाहज्वरलक्षणम्। (चक्रपाणिदत्तोक्तम्)

**अन्वयः**

सः चन्दनालेपेन अपरिश्रान्तसन्तापः सन् त्वदङ्कपालीपेयूषं पुनः पुनः आचकाङ्क्ष ।

**व्याख्या**

स राजा दाहज्वरे सजाते सति चन्दनस्य श्रीखण्डस्याऽऽलेपेनाऽङ्गेषु सर्वतः प्रलेपेन न परिश्रान्त शान्तिमुपगत सतापो दाहो यस्यैवभूतस्सन् तव विक्रमाङ्क-देवस्याऽङ्कपाली आश्लेष' स एव पेयूषममृत हृदयस्य शैत्यापादकत्वात्त्वत्परि-रम्भणरूपसुधा पुन पुन मुहुराचकाङ्क्षाऽभिलषितवान् ।

**भाषा**

दाहज्वर से पीडित वह राजा सर्वाङ्ग मे चन्दन के लेप से भी शान्ति न प्राप्त कर तुम्हारे आलिङ्गन रूप अमृत की कामना करने लगा ।

**क्रमादर्धप्रबुद्धानि शिशिक्षे वीक्षितानि सः ।**
**वासवस्येव दूतेषु कुर्वन्गजनिमीलिकाम् ॥४८॥**

**अन्वयः**

सः वासवस्य दूतेषु गजनिमीलिकां कुर्वन् इव क्रमात् अर्धप्रबुद्धानि वीक्षितानि शिशिक्षे ।

**व्याख्या**

स राजा वासवस्येन्द्रस्य 'वासवो वृत्रहा वृषा' इत्यमर । दूतेषु सदेश-हारकेषु स्वर्गदूतेष्वित्यर्थ । गजस्य हस्तिनो निमीलिकेव निमीलेव निमीलिका ता हस्तिसदृशदृग्व्यापार कुर्वन्निव विस्तारयन्निवोपेक्षा कुर्वन्निवेत्यर्थ । क्रमात् क्रमशोऽर्धप्रबुद्धान्यर्धविकसितानि वीक्षितानि दर्शनव्यापारान् शिशिक्षे कर्तुमारेभे । शिवसायुज्येच्छु स नृप स्वर्गदूतानपि न बहुमन्यते स्म । रोगस्याऽसाध्यत्वान्म-रणकालिकार्धनिद्रितार्धप्रबुद्धनेत्रेऽधारयदिति भाव ।

**भाषा**

वह राजा मानो इन्द्र के दूतो पर अर्थात् स्वर्गदूतो के उसे बुलाने आने पर हाथी की आँखो के समान आँखे बनाता हुआ, अधखुली आँखे ही रखने लगा ।

शिवसायुज्य की इच्छा रखने वाले उस राजा को मानो स्वर्गदूतो का कोई महत्व ही नही है ऐसा प्रकट करते हुए वह मरणकालिक अधखुली आखे रखने लगा ।

**अन्तर्दाहमिवालोक्य प्रियां कीर्तिं विनिर्गताम् ।**
**दर्शयन्दशनज्योत्स्ना–मथोवाच स मन्त्रिणः ॥४६॥**

**अन्वयः**

अथ सः मन्त्रिणः अन्तर्दाहम् आलोक्य विनिर्गतां प्रिया कीर्ति इव दशनज्योत्स्नां दर्शयन् उवाच ।

**व्याख्या**

अथाऽनन्तर स राजा मन्त्रिण आमात्यान्प्रति मन्त्रिणामित्यर्थ अन्तर्दाहमन्त सन्तापमालोक्य दृष्ट्वा विनिर्गता बहिर्नि सृता प्रिया हृद्या कीर्तिमिव यश इव शुक्लत्वाद्दशनज्योत्स्ना दन्तचन्द्रिका 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमर । दर्शयन् प्रकटयन्नुवाच जगाद ।

**भाषा**

इसके बाद वह राजा मन्त्रियो को घबडाया हुआ देख कर, बाहर निकलने वाली अपनी (सफेद) प्रिय कीर्ति के समान दन्तकान्ति को फैलाते हुए कहने लगा ।

**क्षिप्ता मुकुटमाणिक्य–पट्टिकासु महीभुजाम् ।**
**टङ्केनेव प्रतापेन निजाज्ञाक्षरमालिका ॥५०॥**

**अन्वयः**

महीभुजां मुकुटमाणिक्यपट्टिकासु प्रतापेन टङ्केन इव निजाज्ञाक्षरमालिका क्षिप्ता ।

**व्याख्या**

मही भुञ्जन्ति ते महीभुजस्तेषा राज्ञा मुकुटाना किरीटाना माणिक्यान्येव-मणय एव पट्टिकास्तासु प्रतापेन प्रभावेण टङ्केनेव पाषाणदारणेनेव 'टङ्क. पाषाणदारण.' इत्यमर । निजस्य स्वस्याऽऽज्ञानामादेशानामक्षराणि तद्बोधक-

वर्णास्तेषा मालिका परम्परा क्षिप्तोत्कीर्णा । सर्वेऽपि राजानो ममाऽऽज्ञापालका मद्वशीभूता इति भाव. । प्रतापे टङ्कत्वोत्प्रेक्षणादुत्प्रेक्षा ।

**भाषा**

मैने अपने टॉकी के समान प्रताप से राजाओ के मुकुट के माणिक्य रूपी सिल्लियो पर अपनी आज्ञाओ के अक्षर खोद दिये थे । अर्थात् सब राजा मेरी आज्ञाओ का पालन करते थे और मेरे वश मे थे ।

**दिग्भित्तयः शरश्रेणि–कृतच्छिद्रपरम्पराः ।**
**स्वयशोराजहंसस्य प्रापिताः पञ्जरश्रियम् ॥५१॥**

**अन्वयः**

शरश्रेणिकृतच्छिद्रपरम्पराः दिग्भित्तय स्वयशोराजहंसस्य पञ्जरश्रियं प्रापिताः ।

**व्याख्या**

शराणा बाणाना श्रेणिभि परम्पराभि कृताश्छिद्राणा बिलाना परम्परा पँक्तयो यासु ता दिशश एव भित्तयो दिग्भित्तय स्व स्वकीय यश एव कीर्तिरेव राजहस शुभ्रवर्णत्वात् तस्य पञ्जरस्य श्रिय शोभा प्रापिता गमिता । पञ्जराणि-च्छिद्रयुक्तान्येव भवन्ति । सर्वदिक्षु शरैश्शत्रून् हत्वा अतएव सर्वदिक्षु शरै-श्छिद्र कृत्वा सप्राप्तयशोराजहसस्य दिक्पञ्जर निर्मितमिति दिग्भित्तिभि पञ्जरशोभा समनुप्राप्तेति भाव । यशसि राजहसाभेदारोपाद्रूपकम् ।

**भाषा**

मैने बाणो को बरसा कर छिद्र मय की हुई दिशा रूपी भीतो को अपने यश रूपी राजहस के लिये पिजडे की शोभा को प्राप्त कराया । अर्थात् बाणो को बरसा कर सम्पूर्ण दिशाओ के राजाओ को जीत कर सर्वत्र अपनी कीर्त्ति फैला दी ।

**अदरिद्रीकृता भूमिर्विमुद्राभिविभूतिभिः ।**
**नीताः कुलवधूसाम्यं साधूनां वेश्मसु श्रियः ॥५२॥**

अन्वयः

विमुद्राभिः विभूतिभिः भूमिः अदरिद्रीकृता। साधूनां वेश्मसु श्रियः कुलवधूसाम्यं नीताः।

व्याख्या

विमुद्राभिरनन्ताभिर्विभूतिभि ऐश्वर्योपायैर्भूमिरदरिद्रीकृता समृद्धा कृता। साधूना सज्जनाना वेश्मसु गृहेषु 'गृह गेहोदवसित वेश्म सद्म निकेतनम्' इत्यमर। श्रियो लक्ष्म्य कुलवधूभि प्रशस्तकुलोत्पन्नरमणीभिस्साम्य समानता नीता प्रापिता। यथा कुलवधू स्थायित्व निश्चलत्त्व च भजते तथैव सता गेहेषु लक्ष्म्या स्थायित्व निश्चलत्वञ्च प्रतिपादितमिति भाव।

भाषा

मैंने दान देकर अपरिमित सम्पत्ति के साधनो से पृथ्वी की कमी दूर कर दी। सज्जनो के घर मे मैंने लक्ष्मी को कुलवधू के समान स्थायी और निश्चल कर दिया।

**प्राप्तः कोदण्डपाडित्य-जातलक्ष्मीसमागमः।**
**काकुत्स्थनिबिडस्थामा सूनुर्विक्रमलाञ्छनः॥५३॥**

अन्वयः

कोदण्डपाण्डित्यजातलक्ष्मीसमागमः काकुत्स्थनिबिडस्थामा विक्रमलाच्छनः सूनुः (मया) प्राप्तः।

व्याख्या

कोदण्डे धनुषि लक्षणया तद्विद्याया 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमर। पाण्डित्येन प्रावीण्येन जात प्राप्तो लक्ष्म्या सह समागमो मेलन यस्य स, काकुत्स्थस्येव रामचन्द्रस्येव निबिड घनमधिकमित्यर्थ। स्थाम पराक्रमो यस्य स, 'द्रविण तर सहोबलशौर्याणि स्थाम शुष्म च। शक्तिः पराक्रम प्राणो विक्रमस्त्वतिशक्तिता' इत्यमर। विक्रम पराक्रमो लाच्छन लक्षण चिह्न वा यस्य स विक्रमाङ्कदेवो नाम सूनुः पुत्रो मया प्राप्त.।

भाषा

मैंने धनुर्विद्या की पण्डिताई से लक्ष्मी का समागम प्राप्त करने वाला अर्थात्

धनुष चला कर सब राजाओ को जीत कर लक्ष्मी प्राप्त करने वाला श्री रामचन्द्र के समान अत्यधिक पराक्रमी, विक्रम चिह्न वाला अर्थात् विक्रमाङ्कदेव नाम का पुत्र पाया है ।

**तेनैव युवराजत्वं समारोप्य यशस्विना ।**
**एष साम्राज्यभारस्य वोढा सोमेश्वरः कृतः ॥५४॥**

**अन्वयः**

**यशस्विना तेन एव एषः सोमेश्वरः युवराजत्वं समारोप्य साम्राज्य-भारस्य वोढा कृतः ।**

**व्याख्या**

यश कीर्तिर्विद्यते यस्य स यशस्वी तेन यशस्विना कीर्तिमता तेन विक्रमाङ्क-देवेन एषोऽय सोमेश्वरो मम ज्येष्ठपुत्र सोमदेवो युवराजत्व युवराजपद समारोप्य प्रतिष्ठाप्य साम्राज्यस्य भारस्तस्य सकलराज्यकार्यभारस्य वोढा धारयिता कृत ।

**भाषा**

उस यशस्वी विक्रमादित्य ने ही मेरे ज्येष्ठ पुत्र सोमदेव को युवराज पद पर बैठाकर सम्पूर्ण राज्य कार्य का भार उसको सौप दिया ।

**इति मे कृतकृत्यस्य माहेश्वरशिरोमणेः ।**
**गिरिजानाथनगरे समारोहणमुत्सवः ॥५५॥**

**अन्वय**

**इति कृतकृत्यस्य माहेश्वरशिरोमणेः मे गिरिजानाथनगरे समारोहणम् उत्सवः (अस्ति ) ।**

**व्याख्या**

इतीत्थ कृतानि साधितानि कृत्यानि सर्वकार्याणि येन स तस्य कृतकृत्यस्य सम्पादितसासारिकसकलकृत्यस्य महेश्वरस्य शिवस्येमे इति माहेश्वरा शङ्कर-भक्तास्तेषा शिरोमणिर्मूर्धन्यस्तस्य मे मम गिरिजाया पार्वत्या नाथस्य शिवस्य

पुरे शिवलोके कैलासे समारोहण गमनमुत्सव आनन्दोऽस्ति । कृतकृत्यस्य मेऽधुना शिवलोकप्राप्ति प्रभूतप्रमोदावहेति भाव ।

### भाषा

इस प्रकार सासारिक समस्त कार्यों को सफलता पूर्वक सम्पादन करने वाले और शङ्कर के भक्त शिरोमणि, मेरा, पार्वतीपति महादेव की कैलास नगरी मे जाना, उत्सव है ।

**आत्मानमुन्मदद्वाःस्थ—गलहस्तितसेवकाः ।**
**अगम्यमपि दैवस्य विदन्ति हतपार्थिवाः ॥५६॥**

### अन्वयः

उन्मदद्वाःस्थगलहस्तितसेवकाः हतपार्थिवाः आत्मानं दैवस्य अगम्यम् अपि विदन्ति ।

### व्याख्या

द्वारि तिष्ठन्तीति द्वा स्था द्वारपाला उन्मदा मदोन्मत्ताश्च ते द्वास्थाश्चोन्मदद्वास्थास्तैर्गलहस्तिता गले हस्त दत्वा दूर प्रापितास्सेवका राजभक्ता यैस्ते हता अज्ञानेन हता सम्यग्ज्ञानपराङमुखा पार्थिवा राजान आत्मान स्व दैवस्य विधे 'विधिर्विधाने दैवे च' इत्यमर । अगम्यमप्यविषयमपि विदन्ति जानन्ति । अज्ञानिनो राजानो मदेन दैवमपि तिरस्कुर्वन्तीति भाव ।

### भाषा

मदोन्मत्त दरबानो द्वारा गर्दनिया देकर राजभक्त लोगो को हटवा देने वाले अज्ञानी राजा लोग अपने को दैव से भी अगम्य समझने लगते है । अर्थात् दुरभिमान से दैव भी उनका कुछ बिगाड नही सकता ऐसा समझने लगते है ।

**मम शुद्धे कुले जन्म चालुक्यवसुधाभृताम् ।**
**कियत्योऽपि गताः श्रोत्र-मैत्रीं शास्त्रार्थविप्रुषः ॥५७॥**

### अन्वयः

चालुक्यवसुधाभृतां शुद्धे कुले मम जन्म कियत्यः शास्त्रार्थविप्रुषः अपि श्रोत्रमैत्रीं गताः ।

### व्याख्या

चालुक्यस्य चालुक्यवशस्य वसुधा पृथ्वी बिभ्रति पालयन्तीति चालुक्यवसुधा-भृतस्तेषा चालुक्यभूपालाना शुद्धे निर्मले कुले वशे मम जन्म जनु । 'जनुर्जनन-जन्मानि जनिरुत्पत्तिरुद्भव' इत्यमर । कियत्यो वहुसख्याता शास्त्रार्थविप्रुषोऽपि शास्त्रार्थरूपजलविन्दवोऽपि 'पृषन्ति बिन्दुपृषता पुमाँसो विप्रुष स्त्रियाम्' इत्य-मर । श्रोत्रेण कर्णेन सह मैत्री परिचय गता प्राप्ता कर्णगोचर गता इत्यर्थ. । श्रेष्ठचालुक्यवशे जन्मना सह शास्त्रार्थोऽपि कर्णगोचरीकृत इति भाव ।

### भाषा

चालुक्यवशीय राजाओ के विशुद्ध कुल मे मेरा जन्म हुआ है। शास्त्रार्थ के कितने ही छीटे मेरे कानो मे पडे हैं। अर्थात् शास्त्रार्थो का भी मैंने बहुत श्रवण किया है।

**जानामि करिकर्णान्त—चञ्चलं हतजीवितम् ।**
**मम नान्यत्र विश्वासः पार्वतीजीवितेश्वरात् ॥५८॥**

### अन्वयः

(अहं) हतजीवितं करिकर्णान्तचञ्चल जानामि। मम पार्वतीजीविते-श्वरात् अन्यत्र विश्वासः न।

### व्याख्या

अह हतजीवितमधमजीवन करीणो हस्तिन कर्णस्तस्याऽन्त प्रान्तभागस्त-द्वच्चञ्चलमस्थिर जानामि वेद्मि। 'क्षणभङ्गुरा प्राणा' इति श्रुते.। मम पार्वत्या गिरिजाया जीवितस्य जीवनस्येश्वर शिवस्तस्मादन्यत्र स्थाने विश्वासो ममाऽऽस्था नाऽस्ति। सत्यत्वस्य स्थिरत्वस्य नित्यत्वस्य वा सत्ता शिव विहाय नाऽन्यत्र। अत शिवसायुज्यप्राप्तिरेव मम मुख्यमुद्देश्यमिति भाव ।

### भाषा

मै इस अधम जीवन को हाथियो के कान के प्रान्त भाग के सदृश चञ्चल समझता हूँ। मेरी पार्वतीपति शकर को छोड कर अन्यत्र आस्था नही है। अर्थात् मै शिवसायुज्य की कामना करता हूँ।

**उत्सङ्गे तुङ्गभद्रायास्तदेष शिवचिन्तया ।**
**वाञ्छाम्यहं निराकर्तुं देहग्रहविडम्बनाम् ॥५९॥**

**अन्वयः**

तत् एषः अह तुङ्गभद्रायाः उत्सङ्गे शिवचिन्तया देहग्रहविडम्बना निराकर्तुं वाञ्छामि ।

**व्याख्या**

तत्तस्मात्कारणात् शिवसायुज्यप्राप्तिहेतो एषोऽह तुङ्गभद्रायास्तुङ्गभद्रा-नाम्न्या नद्या उत्सङ्गेऽङ्के तटे इत्यर्थ । शिवचिन्तया शिवध्यानेन देहस्य शरीरस्य ग्रहो ग्रहण धारणमित्यर्थ । तस्य विडम्बनामुपद्रव जन्मग्रहणदु ख निराकर्तुमपनेतु वाञ्छामि समभिलषामि । शिवसायुज्येन पुनर्जन्मग्रहणदु ख मा भवत्वित्यभिलषामीति भाव ।

**भाषा**

शिवसायुज्य मुक्ति प्राप्त होने के लिये मैं तुङ्गभद्रा नदी के तट पर शकर का ध्यान करते हुए फिर से जन्म लेने के दु ख को सदा के लिये दूर कर देने की कामना रखता हूँ ।

**यातोऽयमुपकाराय कायः श्रीकण्ठसेवया ।**
**कृतघ्नव्रतमेतस्य यत्र तत्र विसर्जनम् ॥६०॥**

**अन्वयः**

अयं कायः श्रीकण्ठसेवया उपकाराय यातः । एतस्य यत्र तत्र विसर्जन कृतघ्नव्रतम् ।

**व्याख्या**

अय कायो देह श्रीकण्ठस्य शिवस्य सेवया परिचर्ययोपकाराय स्वाभीष्ट-सिद्ध्यर्थं यातो गत । एतस्य वपुषो यत्र तत्र तीर्थादन्यत्र विसर्जन त्याग· कृतं घ्नन्तीति कृतघ्ना परोपकारविस्मरणशीलास्तेषा व्रतमनुष्ठान कार्यमित्यर्थ । कृतघ्ना एव येनाऽभीष्टसिद्धि साधयन्ति तस्य कार्यनिष्पादनादनन्तर तादृश योग्य समादर न कुर्वन्ति । एवमेवाऽनेन देहेन शिवसेवाद्धारा मम महानुपकारो जातस्तस्मादस्य तीर्थस्थानेष्वेव परित्यागो युक्ततर इति भावः ।

**भाषा**

इस शरीर द्वारा शकर की आराधना करने से मेरा बडा उपकार हुआ है। इसको तीर्थस्थान के अतिरिक्त अन्यत्र त्याग करना कृतघ्नता ही होगी।

**तथेति वचनं राज्ञः प्रत्यपद्यन्त मन्त्रिणः।**
**उचिताचरणे केषां नोत्साहचतुरं मनः ॥६१॥**

**अन्वयः**

मन्त्रिणः इति राज्ञः वचन तथा प्रत्यपद्यन्त। केषां मनः उचिताचरणे उत्साहचतुरं न।

**व्याख्या**

मन्त्रिणो राजसचिवा इति पूर्वोक्त राज्ञो नृपस्य वचन वच. 'व्याहार उक्तिर्लपित भाषित वचन वच.' इत्यमर। तथा येन प्रकारेण राज्ञा कथित तेनैव प्रकारेण प्रत्यपद्यन्ताऽङ्गीचक्रु। केषा विचारशीलाना मनुष्याणा मनश्चेत उचितस्य योग्यस्य कार्यस्याऽऽचरणे सम्पादन उत्साहचतुर समुत्साहित न भवति। अपि तु सर्वेषामेव। अत्राऽर्थान्तरन्यासालङ्कार।

**भाषा**

मन्त्रियो ने राजा के इस वचन को तदनुसार ही स्वीकार किया। ऐसे कौन विचारशील लोग है जिनका मन उचित कार्य करने मे उत्साहित न हो।

**ततः कतिपयैरेव प्रयाणैः प्रणयिप्रियः।**
**तां क्षोणीपतिरद्राक्षीद् दक्षिणापथजान्हवीम् ॥६२॥**

**अन्वयः**

ततः प्रणयिप्रियः क्षोणीपतिः कतिपयैः एव प्रयाणैः तां दक्षिणापथ-जान्हवीम् अद्राक्षीत्।

**व्याख्या**

ततो राजवाक्यस्य सचिवानुमोदनानन्तर प्रणयिना स्नेहिना प्रियो हृद्य क्षोण्या पृथ्व्या. पतिरीश्वरो नृप. कतिपयैरेवाऽल्पसख्यैरेव प्रयाणै. स्थानात्स्था-

नान्तरं गत्वा तत्र किञ्चिद्विश्रम्य पुन प्रस्थानैस्ता दक्षिणापथस्य दक्षिणप्रदेशस्य जान्हवी गङ्गा तुङ्गभद्रानदीमद्राक्षीद् ददर्श ।

**भाषा**

इसके बाद अपने प्रेमियो के प्यारे उस राजा ने मार्ग में थोडे ही ठहराओ (पडावो) को देकर दक्षिणापथ की गङ्गा, तुङ्गभद्रा नदी का दर्शन किया ।

**तुङ्गभद्रा नरेन्द्रेण तेनामन्यत मानिना ।**
**तरङ्गहस्तैरुत्क्षिप्य क्षिपन्तीवेन्द्रमन्दिरे ॥६३॥**

**अन्वयः**

**मानिना तेन नरेन्द्रेण तुङ्गभद्रा तरङ्गहस्तैः उत्क्षिप्य इन्द्रमन्दिरे क्षिपन्ती इव अमन्यत ।**

**व्याख्या**

**मानश्चित्तसमुन्नतिरस्याऽस्तीति मानी तेन मानिना 'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नति' इत्यमर । तेन नरेन्द्रेणाऽऽहवमल्लदेवनृपेण तुङ्गभद्रा दक्षिणापथगङ्गा तरङ्गा वीचय एव हस्ता करास्तैस्तरङ्गरूपकरैरुत्क्षिप्योर्ध्वं प्रक्षिप्येन्द्रस्य मन्दिरे स्वर्गे (राजान) क्षिपन्तीव प्रापयन्तीवाऽमन्यत मेने । अत्रोत्प्रेक्षालङ्कार । तुङ्गभद्राया तरङ्गाभिन्नहस्तैर्जनाना स्वर्गलोकप्रापणस्य क्रियाया उत्प्रेक्षणात् ।**

**भाषा**

उस उन्नत चित राजा ने, तुङ्गभद्रा नदी, अपने तरङ्गरूपी हाथो से मानो उसे स्वर्ग मे इन्द्र के मन्दिर मे उछाल रही हो, ऐसा समझा ।

**उद्दण्डा तेन डिण्डीर-पिण्डपङ्क्तिरदृश्यत ।**
**विमानहंसमालेव प्रहिता पद्मसद्मना ॥६४॥**

**अन्वयः**

**तेन उदण्डा डिण्डीरपिण्डपङ्क्तिः पद्मसद्मना प्रहिता विमानहंसमाला इव अदृश्यत ।**

### व्याख्या

तेन राज्ञा उद्दण्डाऽत्युन्नता डिण्डीराणा फेनाना 'डिण्डीरोऽब्धिकफ फेन' इत्यमर.। पिण्डा शरीराणि समूहा इत्यर्थ 'पिण्डो बोले बले सान्द्रे देहागारैक-देशयो। देहमात्रे निवापे च गोल सिल्हकयोरपि' इति मेदिनी। तेषा पङ्क्ति श्रेणी पद्म कमलमेव सद्म गृह यस्य तेन ब्रह्मणा प्रहिता नृपानयनार्थं प्रेषिता शुक्लत्वात् विमानानि व्योमयानानि 'व्योमयान विमानोऽस्त्री' इत्यमर। एव हसमाला हसश्रेणि इवाऽदृश्यत दृष्टा। अत्र फेनपिण्डपङ्क्तौ विमानहसमालाया शुभ्रत्वादुत्प्रेक्षणाद्वस्तूत्प्रेक्षा।

### भाषा

उस राजा ने ऊँचे ऊँचे फेन के सफेद गोलो की कतार को, मानो ब्रह्मा ने उसको स्वर्ग मे बुलाने के लिये भेजे हुए विमान रूपी हसो की कतार है, ऐसा देखा।

**अतिदूरं समुत्प्लुत्य निपतद्भिः स शीकरैः।**
**अराजत धराचन्द्रः प्रत्युद्गत इव ग्रहैः ॥६५॥**

### अन्वयः

सः धराचन्द्रः अतिदूरं समुत्प्लुत्य निपतद्भिः शीकरैः ग्रहैः प्रत्युद्गत इव अराजत।

### व्याख्या

स प्रसिद्ध धराया भूमेश्चन्द्र इन्दु आहवमल्लदेवोऽतिदूरं सुदूर समुत्प्लुत्यो-र्ध्वगत्वा निपतद्भिरधस्तादापतद्भि शीकरैरम्बुकणै 'शीकरोम्बुकणा स्मृता' इत्यमर। ग्रहैर्बुधशुक्रादिग्रहनक्षत्रै प्रत्युद्गत इव सन्मानप्रदर्शनार्थ कृताभ्यु-त्थान इवाऽराजत शुशुभे। शुभ्रत्वादूर्ध्वस्थानस्थितत्वाच्चाऽम्बुकणेषु ग्रहत्वा-भेद। शीकराणामुत्प्लुत्य पुन पतने ग्रहकर्तृकाभ्युत्थानक्रियाया उत्प्रेक्षणात् क्रियोत्प्रेक्षा।

### भाषा

वह पृथ्वी का चन्द्र राजा, बहुत ऊँचे उठकर नीचे गिरने वाले जलकणो से मानो बुध शुक्र आदि ग्रहो द्वारा आदर मे उत्थापन दिया गया हो, ऐसा शोभित हुआ।

तत्रावतीर्य धौरेयो धीराणां धरणीपतिः ।
स्नात्वा चण्डीशचरण-द्वन्द्वचिन्तापरोऽभवत् ॥६६॥

अन्वयः

धीराणां धौरेयः धरणीपतिः तत्र अवतीर्य स्नात्वा चण्डीशचरणद्वन्द्व-चिन्तापरः अभवत् ।

व्याख्या

धीराणा धैर्यवता धौरेयो धुरीण 'धूर्वहे धुर्य धौरेयधुरीणास्सधुरन्धरा' इत्यमर । धरण्या धराया 'धरा धरित्री धरणी' इत्यमर । पति स्वामी भूपतिराहवमल्लदेवस्तत्र तुङ्गभद्रानद्यामवतीर्य प्रविश्य स्नात्वा स्नान विधाय चण्ड्या पार्वत्या ईश पतिश्चण्डीशस्तस्य शिवस्य चरणद्वन्द्वस्य पादयुगलस्य चिन्ता ध्यान तत्र परो लग्न शिवचरणयुगलध्यानतत्परोऽभवत् ।

भाषा

धीरो का अग्रणी वह आहवमल्लदेव राजा तुङ्गभद्रा नदी मे उतर कर और स्नना करके शकर भगवान् के चरण युगल के ध्यान मे तत्पर हो गया ।

अदत्त चापरिच्छिन्नमखिन्नः काञ्चनोत्करम् ।
न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः ॥६७॥

अन्वयः

अखिन्नः (सः) अपरिच्छिन्नं काञ्चनोत्करं अदत्त च । महाभागाः कृच्छ्रे अपि त्यागव्रतपराङ्मुखाः न (भवन्ति) ।

व्याख्या

अखिन्न प्रसन्नमानस स अपरिछिन्नममित काञ्चनस्य सुवर्णस्योत्कर समूहं अदत्त च दानपात्रेभ्य समर्पितवाश्च । महाभागा महाभाग्यवन्तो जना कृच्छ्रेऽपि कष्टे समापतितेऽपि त्यागव्रताद्दानानुष्ठानात्पराङमुखा विमुखा न भवन्ति । अत्रार्थान्तरन्यासो नामालङ्कार । "सामान्य वा विशेषो वा यदन्येन समर्थ्यते । यत्तु सोऽर्थान्तरन्यासस्साधर्म्येणेतरेण वा" ।

**भाषा**

और उस राजा ने प्रसन्न चित्त से अपरिमित सुवर्ण के ढेरो का दान किया। महा भाग्यशाली लोग कष्ट आने पर भी दानानुष्ठान से विमुख नही होते।

**प्रविश्य कण्ठदघ्नेऽथ सरित्तोये जगाम सः।**
**कल्लोलतूर्यनिर्घोषै—श्चन्द्रचूडामणेः पुरीम् ॥६८॥**

**अन्वयः**

अथ सः कण्ठदघ्ने सरित्तोये प्रविश्य कल्लोलतूर्यनिर्घोषैः चन्द्रचूडामणेः पुरीं जगाम।

**व्याख्या**

अथाऽनन्तर स राजा कण्ठदघ्ने गलप्रमाणे कण्ठदघ्नमित्यत्र कण्ठ प्रमाणमस्येति विग्रहे 'प्रमाणे द्वयसन्दघ्नञ्मात्रच' इति सूत्रेण दघ्नच् प्रत्यय। सरितस्तुङ्गभद्रानद्यास्तोये जले प्रविश्य गत्वा कल्लोला उल्लोला. 'महत्सूल्लोलकल्लोलौ' इत्यमर। एव तूर्याणि वाद्यविशेषा "तुरही" इति भाषाया प्रसिद्धा। तेषा निर्घोषैश्शब्दैस्सह चन्द्र एव हिमाशुरेव 'हिमाशुश्चन्द्रमाश्चन्द्र इन्दु कुमुदबान्धव' इत्यमर। चूडामणिश्शिरोभूषण यस्य तस्य शिवस्य पुरीं कैलास जगाम प्राप्तवान्।

**भाषा**

अनन्तर तुङ्ग भद्रा नदी मे गले तक पानी मे खडे होकर लहरो के ऊचे २ शब्द रूपी तुरही की ध्वनि के साथ वह राजा शकर की कैलास नगरी मे चला गया।

**पद्ययुग्मेन राजकुमारावस्थां वर्णयति कविः—**

**इत्युक्त्वा विरते तत्र कृतनेत्राम्बुदुर्दिनः।**
**हतासिधेनुः पार्श्वस्थैः साक्रन्दगलकन्दलः ॥६९॥**
**स्वभावादार्द्रभावेन पितृस्नेहाच्च तादृशः।**
**तथा रुरोद वपुषा भूपृष्ठलुठितेन सः ॥७०॥**

### अन्वयः

इति उक्त्वा तत्र विरते (सति) कृतनेत्राम्बुदुर्दिनः पार्श्वस्थैः हृतासिधेनुः साक्रन्दगलकन्दलः सः स्वभावात् आर्द्रभावेन तादृशः पितृस्नेहात् च भूपृष्ठलुठितेन वपुषा तथा रुरोद ।

### व्याख्या

इति पूर्वोक्तमुक्त्वा कथयित्वा तत्र दूते विरते विश्राममुपगतवति सति कृत सम्पादित नेत्राम्बुभिर्नयननिर्गताश्रुजलैर्दुर्दिन मेघावृतदिवसो येन स 'मेघच्छन्नेऽन्हि दुर्दिनम्' इत्यमर । अश्रुवृष्टि कुर्वन्नित्यर्थ । पार्श्वे तिष्ठन्तीती पार्श्वस्थास्तै समीपचरैर्जनै हृता गृहीता असिधेनुश्छुरिका यस्य स 'छुरिका चासिधेनुका' इत्यमर । आक्रन्देनाऽऽर्तनादेन सहितो गल एव कन्दलो नालो यस्य स राजकुमार स्वभावात्प्रकृत्यैवाऽऽर्द्रभावेन स्निग्धभावेन 'भाव सत्तास्वभावा-भिप्रायचेष्टात्मजन्मसु' इत्यमर । तादृशस्तथाभूतादनिर्वचनीयात्पितृस्नेहाच्च पितृप्रेम्णश्च भुव पृष्ठे भूपृष्ठे भूमितले लुठितमितस्तत परावर्तित तेन वपुषा शरीरेण 'गात्र वपु संहनन शरीर वर्ष्म विग्रह' इत्यमर. । तथैव वक्ष्यमाण-प्रकारेण रुरोद रोदन कृतवान् ।

### भाषा

इस प्रकार कह कर दूत के चुप होने पर अपने आँखो के आँसुओ से मेघ के ऐसी वृष्टि करने वाला, पास के लोगो ने कही दु ख से वह अपना प्राणान्त न करले इस भय से जिसकी छूरी छीन ली है ऐसा पुक्काफाड कर रोने वाला, वह राजकुमार, स्वभाव से ही कोमल हृदय होने से तथा वैसे पितृस्नेह से जमीन पर लोट २ कर इस प्रकार विलाप करने लगा ।

**एवंविधदुराचार—गृहीतनियमं यमम् ।**
**मन्यते स्म यथा वंशे तिग्मांशुरपि कण्टकम् ॥७१॥**

यथा तिग्माशुः अपि एवंविधदुराचारगृहीतनियम यम वशे कण्टक मन्यते स्म ।

### व्याख्या

स तथा रुरोदेति पूर्वपद्योक्तेन तथाशब्देन सहाऽत्रस्थो यथा शब्द साकाङक्ष । स तथा रुरोद यथा येन कारणेन तिग्माशु. सूर्यो यमपिताऽप्येवविधदुराचाराय

तस्य पितृमारणरूपात्याचाराय धर्मपरायणाना मृत्यव इत्यर्थ । गृहीत स्वीकृतो नियमो निश्चयो येन त यम कृतान्त वशे सूर्यवशे कण्टक कुलकलङ्क मन्यतेस्म ज्ञातवान् ।

### भाषा

राजकुमार विक्रमाङ्कदेव के वैसे रोने से यमराज के पिता सूर्य भी, उसके पिता के सदृश धर्मात्माओ को जान से मार डालने का दुराचार का काम करने के नियमी, अपने पुत्र यमराज को सूर्यवश का कलङ्क समझने लगे ।

**एतद्दुःखानभिज्ञेभ्यो दिनेभ्यः स्पृहयन्मुहुः ।**
**दिवसोऽपि यथात्मानं मन्दभाग्यममन्यत ॥७२॥**

### अन्वयः

यथा एतद्दुःखानभिज्ञेभ्यः दिनेभ्यः मुहुः स्पृहयन् दिवसः अपि आत्मानं मन्दभाग्यम् अमन्यत ।

### व्याख्या

यथेति पद पूर्वोक्तस्य तथा रुरोदेति वाक्यस्य तथा शब्देनाऽन्वेति । स तथा रुरोद यथा येन कारणेनैतद्दु खान्याऽऽहवमल्लमृत्युजन्यराजकुमारविलापादि-दु खानि तेषामनभिज्ञा अपरिचितास्तेभ्यो दिनेभ्यो दिवसेभ्यो मुहु पुन पुनः स्पृहयन्नभिलषन् दिवसोऽपि राजकुमारकृतविलापदिवसोऽप्यात्मान स्व मन्दभाग्य हतभाग्यममन्यत मेने । अन्यदिवसा मत्तो भाग्यवन्तो यैरिद महद्दुख नाऽनु-भूतमिति चिन्तयति स्मेति भाव ।

### भाषा

राजकुमार विक्रमाङ्कदेव के वैसे रोने से वह दिन भी, ऐसे क्लेश से अनभिज्ञ अन्य दिवसो के समान ही हम होते तो अच्छा था, ऐसी अभिलाषा करते हुए अपने को हतभाग्य समझने लगा ।

**"विशेषकम्" त्रिभिः पद्यैर्यत्र वाक्यसमाप्तिर्भवति तद्विशेषकं संदानितकं तिलकं वा ।**

**अथ कालकलाः स्थित्वा कियतीरप्यसौ तथा ।**
**अचिन्तयदविश्रान्त-बाष्पसंतानदुर्दिनः ॥७३॥**

### अन्वयः

अथ अविश्रान्तबाष्पसन्तानदुर्दिनः असौ कियतीः अपि कालकलाः तथा स्थित्वा अचिन्तयत् ।

### व्याख्या

अथ पितृमरणदुर्घटनाश्रवणानन्तरमविश्रान्त निरन्तर बाष्पसतानस्याऽश्रुधाराया दुर्दिन वृष्टिर्यस्मिन्स, असौ विक्रमाङ्कदेव कियतीरपि काश्चिदपि कालकला समयकलाश्चिरकालपर्यन्त तथा तेनैव प्रकारेण स्थित्वोपविश्याऽचिन्तयत् चिन्तयामास ।

### भाषा

बाद मे लगातार आँसुओ की झडी बरसाने वाले विक्रमाङ्कदेव ने चिरकाल तक उसी दशा मे रहने के बाद विचार किया ।

**तवादिकूर्म कर्माणि निषेधन्ति सुखस्थितिम् ।**
**प्रयाहि शेष निष्पेषादस्थिपञ्जरशेषताम् ॥७४॥**

### अन्वयः

हे आदिकूर्म कर्माणि तव सुखस्थिति निषेधन्ति । हे शेष निष्पेषात् अस्थिपञ्जरशेषता प्रयाहि ।

### व्याख्या

हे आदिकूर्म ! हे कच्छपावतार ! कर्माणि भाग्यानि तव सुखस्थिति सुखेन स्थितिमाहवमल्लकर्तृकभूभारहरणस्य निरन्तर जायमानत्वादल्पभूभारधारणेन भुवस्तले सुखपूर्वकवास निषेधन्ति न मन्यन्ते । हे शेष । नागराज ! निष्पेशाद्राज्ञोऽभावाद्भूभारस्याऽऽधिक्यात्तस्य धारणेन तवाऽङ्गानामत्यन्तसम्मर्दनादस्थिपञ्जर शेषोऽवशिष्टाशो यस्य स तस्य भावोऽस्थिपञ्जरशेषता तामधिकभारवहनजन्यदुःखातिशयान्मासक्षयेणाऽस्थिमात्रावशिष्टस्वरूप प्रयाहि प्राप्नुहि ।

### भाषा

हे आदिकूर्म ! हे विष्णु के अवतार रूप । दुर्भाग्यो से तुम को अब चैन से रहने को नही मिल सकता । क्योकि राजा आहवमल्लदेव के

रहने से पृथ्वी का बोझ कम होकर, तुम्हारा भूभार कम होने से तुम्हे जो सुख मिलता था वह अब उस राजा के मर जाने से तुम्हे प्राप्त न हो सकेगा। हे शेष ! हे नागराज ! राजा आहवमल्लदेव के मर जाने से पृथ्वी का बोझ अधिक होकर उससे पीसे जाने के कष्ट से तुम्हारा मास सूख कर हड्डियाँ ही अवशिष्ट रह जाएँगी।

**दिग्गजास्त्यजत स्वैर-क्रीडाविहरणादरम्।**
**संभूय भूयः सर्वेऽपि धारयन्तु धरामिमाम् ॥७५॥**

**अन्वयः**

**हे दिग्गजाः स्वैरक्रीडाविहरणादरं त्यजत सर्वे अपि भूयः संभूय इमां धरा धारयन्तु।**

**व्याख्या**

**हे दिग्गजा ! हे दिक्कुञ्जरा ! स्वैर स्वच्छन्द यथास्यात्तथा यत्क्रीडासु विहरण विहारार्थं सचलन तस्मिन्नादर स्नेह त्यजत मुञ्चत। सर्वेऽपि भवन्त-स्सकला भूय पुनरपि राज्ञ उत्पत्तिकालात्प्रागिव सभूय मिलित्वेमा धरा पृथ्वीं धारयन्तु वहन्तु। इदानीं युष्माक पृथ्वीभारवहनकर्मणि सहायको राजाऽऽहव-मल्लदेवो भुवं परित्यज्य परलोक गत इति भाव।**

**भाषा**

हे दिग्गजो ! राजा आहवमल्लदेव के रहने से पृथ्वी स्थिर थी इसलिये तुम लोग आनन्द से स्वच्छन्द क्रीडा मे घूमते थे। किन्तु अब राजा आहव-मल्लदेव पृथ्वी छोड कर परलोक को सिधार गये है, इसलिये अपना स्वच्छन्द क्रीडा प्रेम छोडो और सब मिलकर इस पृथ्वी को सह्मालो।

**बाहुराहवमल्लस्य सुवर्णस्तम्भविभ्रमः।**
**पुरन्दरधुरां धर्तुं धात्रा व्यवहितः कृतः ॥७६॥**

**अन्वयः**

धात्रा सुवर्णस्तम्भविभ्रमः आहवमल्लस्य बाहुः पुरन्दरधुरां धर्तुं व्यव-हितः कृतः।

### व्याख्या

धात्रा विरञ्चिना 'धाताब्जयोनिर्द्रुहिणो विरञ्चि कमलासन' इत्यमर । सुवर्णस्यस्तम्भ सुवर्णस्तम्भ काञ्चनस्तम्भस्तस्य विभ्रमो विलासो भ्रान्तिर्वा यस्मिन् स काञ्चनस्तम्भसदृश आहमल्लस्याऽऽहवमल्लदेवनृपस्य बाहुर्भुज पुरन्दरस्य पुरुहूतस्य 'वृद्ध श्रवा शुनासीर पुरुहूत पुरन्दर' इत्यमर । धुरा राज्यकार्यभार स्वर्गराज्यकार्यभारमित्यर्थ । धर्तुं वोढु व्यवहित कृतोऽस्मा-द्भूलोकान्महद्दूरे स्थापित । नृपस्य पुण्यातिशयेन देवत्वप्राप्त्या पुरन्दरस्य राज्यकार्ये साहाय्यप्रदानार्थं ब्रह्मणा स व्यवहित इति भाव । काव्यलिङ्गालङ्कार ।

### भाषा

ब्रह्माने, सोने के खम्भे की शोभा वाले राजा आहवमल्लदेव के बाहु को स्वर्ग के राज्य कार्य मे इन्द्र की सहायता करने के लिये इस पृथ्वी पर से दूर हटा दिया है । अर्थात् राजा को इस पृथ्वी पर से स्वर्ग मे हटा दिया है ।

**निजासु राजधानीषु स्थितिं दधतु पार्थिवाः ।**
**तादृशः पुनरुत्साहो वीरसिंहासने कुतः ॥७७॥**

### अन्वयः

पार्थिवाः निजासु राजधानीषु स्थिति दधतु । कुतः पुनः वीरसिहासने तादृशः उत्साहः ।

### व्याख्या

पृथिव्या ईश्वरा पार्थिवा नृपा निजासु स्वीयासु राजधानीषु प्रधाननगरेषु स्थिति सुखेन निवास दधतु कुर्वन्तु । कुत कस्माद्धेतो पुन भूयो वीराणा सिहासन सग्रामभूमिस्तस्मिन् तादृश पूर्वानुभूत उत्साहश्चित्तस्योन्नति । सम्प्रति नृपस्याऽऽहवमल्लदेवस्य युद्धप्रियस्याऽभावात्सर्वे राजानो युद्धभय त्यक्त्वा सुखेन निवसन्त्विति भाव ।

### भाषा

राजा लोग अब सुख से अपनी अपनी राजधानियो मे रहे । आहवमल्लदेव राजा के न रहने से अब युद्ध भूमियो मे वैसा उत्साह कहाँ । अर्थात् युद्धप्रिय राजा आहवमल्लदेव के न रहने से युद्ध का भय छोडकर सब राजा निश्चिन्त हो कर अपनी अपनी राजधानी मे सुख से रहे ।

**तद्बाहुदण्डविश्लेषे किं पौरुष करिष्यसि ।**
**प्रतिपालकवैधुर्यात् प्रताप परितप्यसे ॥७८॥**

### अन्वयः

हे पौरुष ! तद्बाहुदण्डविश्लेषे कि करिष्यसि । हे प्रताप ! प्रतिपालकवैधुर्यात् परितप्यसे ।

### व्याख्या

हे पौरुष ! हे पुरुषार्थ ! "पुभावे तत्क्रियायां च पौरुषम्' इत्यमर. । तस्याऽऽहवमल्लदेवनृपस्य बाहुदण्डो भुजदण्डस्तस्य विश्लेषे वियोगे किं करिष्यसि न किमपीत्यर्थ । तद्बाहुदण्डाभावे पुरुषार्थस्य सत्तैव नास्तीति भाव. । हे प्रताप ! हे तेज । 'स प्रताप प्रभावश्च यत्तेज कोषदण्डजम्' इत्यमर. । प्रतिपालकस्य सरक्षकस्याऽऽश्रयदातुरित्यर्थ । राज्ञ आहवमल्लदेवस्य वैधुर्या-द्राहित्यात् परितप्यसे दु खजन्यसताप प्राप्तोऽसि । आहवमल्लदेवे नृपे गते सति पौरुषप्रतापयोराश्रयाभावात्परिताप इति भाव । अत्र विनोक्तिनामाऽलङ्कार ।

### भाषा

हे पुरुषार्थ ! आहवल्लदेव राजा के वियोग मे अब तू क्या करेगा । हे प्रताप ! आश्रय के अभाव मे तू दु खी हो रहा है । अर्थात् आहवमल्लदेव राजा के न रहने से पौरुष और प्रताप दोनो ही निराधार हो गये ।

**पद्मे पद्माकरानेव पुनः सद्मत्वमानय ।**
**अयं त्वया पतिभ्रंश-संतापोऽन्यत्र दुःसहः ॥७९॥**

### अन्वयः

हे पद्मे ! पुनः पद्माकरान् एव सद्मत्वम् आनय । त्वया अयं पति-भ्रंश-संतापः अन्यत्र दुस्सहः ।

### व्याख्या

हे पद्मे ! हे लक्ष्मि ! 'लक्ष्मी पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमर । पुन भूयोऽपि पद्मानां कमलानामाकरास्समूहास्तानेव सद्मत्व गृहत्व निवासस्थानत्वमानय प्रापय । त्वया भवत्याऽयमनुभूयमान पत्युर्नृपस्य भ्रंशो

विनाशस्तस्य सन्तापो पत्यभावजन्यपरितापोऽन्यत्र कमलेभ्योऽन्यस्थाने दुस्सहो दु खेन सोढु शक्य । कमलाना सयोग एव विरहावसरे वियोगाधिसन्ताप निरस्य शरीरे शैत्यमापादयतीत्यत पुनस्त्वया पूर्वनिवासस्थान कमलमेवाऽऽश्रयणीयमिति भाव । अत्रोत्तरार्धेन पूर्वोक्तकमलसमाश्रयसमर्थनादर्थान्तरन्यास ।

### भाषा

हे लक्ष्मी ! अब कमलो को ही फिर से अपना निवासस्थान बना। स्वामी के नाश का यह दु ख कमलो के अतिरिक्त अन्य स्थान मे रह कर सहन करना अत्यन्त कठिन है। अर्थात् पति विरह जनित सन्ताप को शान्त करने के लिये कमल जनित शैत्य ही लाभदायक हो सकता है।

**श्लाघ्यं शेषफणाचक्र–विटङ्कात्पतनं भुवः ।**
**अथवा स्नेहपाण्डित्यं मृत्पिण्डस्येदृशं कुतः ॥८०॥**

### अन्वयः

भुवः शेषफणाचक्रविटङ्कात् पतन श्लाघ्यम् । अथवा मृत्पिण्डस्य ईदृशं स्नेहपाण्डित्य कुतः (सम्भवति) ।

### व्याख्या

भुव पृथिव्या पतिविनाशे शेषस्याऽनन्तसर्पराजस्य 'शेषोऽनन्तो वासुकिस्तु' इत्यमर । फणाना स्फटाना 'स्फटाया तु फणा द्वयो' इत्यमर । चक्र समूह एव विटङ्कमुच्चशिखर 'कपोतपालिकाया तु विटङ्क पुनपुसकम्' इत्यमर । तस्मात्पतन पतनेन मरण श्लाघ्य वरम् । अथवा पक्षान्तरे मृत्पिण्डस्य मृत्तिका-शरीरस्य 'पिण्डो बोले बले सान्द्रे देहागारैकदेशयो । देहमात्रे निवापे च गोल-सिह्लकयोरपि' इति मेदिनी । ईदृश विशिष्ट स्नेह प्रेम तस्य पाण्डित्य विचार-प्राचुर्यं कुत कस्माद्धेतो सम्भवति नैव स्यादचेतनत्वादिति भाव ।

### भाषा

पृथ्वी को तो पृथ्वी पति के मर जाने पर शेष राज अनन्त के फनो के समूह रूपी उच्चशिखर से गिर कर मर जाना ही उचित है। परन्तु मिट्टी का शरीर रखने वाली पृथ्वी मे इस प्रकार का प्रेम का सद्विचार कैसे सम्भव है। अर्थात् अचेतन पृथ्वी मे इस प्रकार का उच्च प्रेमभाव उत्पन्न होना ही असम्भव है।

**अपूर्वः कोपि दुर्मेधाः शङ्के वेधाः समुत्थितः ।**
**पुराणः क्लेशनिष्पन्नां स्वकृतिं नाशयेत्कथम् ॥८१॥**

### अन्वयः

कः अपि अपूर्वः दुर्मेधाः वेधाः समुत्थितः (इति) शङ्के। पुराणः (वेधाः) क्लेशनिष्पन्नां स्वकृति कथ नाशयेत् ।

### व्याख्या

कोऽपि कश्चिन्न पूर्व प्राचीन इत्यपूर्वोऽर्वाचीनो दुष्टा दोषान्विता मेधा बुद्धिर्यस्य स दुर्बुद्धिर्वेधा ब्रह्मा 'स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः' इत्यमर । समुत्थित सवृत्त (इति) शङ्के तर्कयामि । पुराण. प्राचीनो वेधा ब्रह्मा क्लेशेन महत्प्रयासेन निष्पन्ना सम्पादिता स्वकृति राजाऽऽहवमल्लदेवोत्पादनकार्यं कथ नाशयेत् समुन्मूलयेत् । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

मालूम होता है कि कोई नवीन, बुद्धिहीन ब्रह्मा आ गया है। क्यो कि यदि पुराना ब्रह्मा होता तो परिश्रम से बनाई हुई राजा आहवमल्लदेव रूपी अपनी वस्तु को कैसे नष्ट करता ।

**अहो शौर्यमहो धैर्यं चित्रं गाम्भीर्यविभ्रमाः ।**
**यत्सत्यं क्वचिदेकत्र गुणास्ते दुर्लभाः पुनः ॥८२॥**

### अन्वयः

शौर्यं अहो। धैर्यं अहो। गाम्भीर्यविभ्रमाः चित्रम्। यत् क्वचित् एकत्र पुनः ते गुणाः दुर्लभाः (तत्) सत्यम् ।

### व्याख्या

शौर्यं नृपाहवमल्लदेवनिष्ठ वीरत्वमहो आश्चर्यकारि । धैर्यं नृपाहवमल्लदेवनिष्ठ धीरत्वमहो अद्भुतम् । गाम्भीर्यस्य मर्यादाया विभ्रमा विलासाश्चित्रमाश्चर्यावलम्बिन । यत् तदिति क्वचिदित्यादिवाक्यपरामर्शकम् । क्वचित् कस्मिंश्चिदेकत्रैकस्मिन् स्थाने आधारे वा पुनस्ते पूर्वोक्तास्सर्वे गुणा शौर्यादयो दुर्लभा दुष्प्रापास्तत् सत्यमवितथम् । आहवमल्लदेवे राज्ञि पञ्चत्व गते सति

समेषा पूर्वोक्ताना गुणाना समवाय पुन कस्मिश्चिदेकस्मिन् मनुष्ये दुर्लभ इति सत्यमिति भाव ।

### भाषा

अरे वह शौर्य ! अरे वह धैर्य ! अरे वे मर्यादा के कार्य ! यह सत्य है कि ये सब गुण एकही मनुष्य मे फिर से नही मिल सकते जो आहवमल्ल देव मे थे ।

**कुण्ठी कृतारिशस्त्रस्य तस्य वज्रोपमाकृतेः ।**
**भाग्यानामेव मे दोषा-देष जातः परिक्षयः ॥८३॥**

### अन्वयः

मे भाग्यानाम् एव दोषात् कुण्ठीकृतारिशस्त्रस्य वज्रोपमाकृतेः तस्य एषः परिक्षयः जातः ।

### व्याख्या

मे मम भाग्यानामेवदुर्भाग्यानामेवदोषादपराधात् कुण्ठीकृतानि व्यर्थीकृतान्यरीणा शत्रूणा शस्त्राणि प्रहरणानि येन स तस्य व्यर्थीकृतशत्रुप्रहरणस्य वज्रस्य कुलिशस्य 'ह्रादिनीवज्रमस्त्रीस्यात्कुलिश भिदुर पवि । शतकोटि स्वरु शबो दम्भोलिरशनिर्द्वयो' इत्यमर । उपमा सादृश्य यस्या सा वज्रोपमाऽतिकठिनाऽऽकृतिर्देहो यस्य स तस्य वज्रोपमाकृतेर्वज्रवदतिकठोरशरीरस्य तस्याऽऽहवमल्लदेवस्य एष उपस्थित परिक्षयो विनाशो जात. ।

### भाषा

मेरे ही दुर्भाग्य से शत्रुओ के शस्त्रो को कुण्ठित कर देने वाले और वज्र के समान अति कठोर शरीर वाले मेरे पिता आहवमल्लदेव राजा की मृत्यु हुई है।

**पाठान्तरम् । तदेव पूर्वोक्तश्लोकार्ध प्रकारान्तरेण वर्णयति कविः ।**

**मद्भाग्यदोषादेवैष जाने जातः परिक्षयः ।**

### अन्वयः

एषः परिक्षयः मद्भाग्यदोषात् एव जातः (इति) जाने ।

**व्याख्या**

एष पूर्वोक्त परिक्षयो मम पितुराहवमल्लदेवस्य परिक्षयो नाशो मम भाग्याना दुर्भाग्याना दोषादेवाऽपराधादेव जात सम्भूत इति जाने तर्कयामि ।

**भाषा**

यह मेरे पिता आहवमल्लदेव की मृत्यु मेरे दुर्भाग्य के दोष से ही हुई है ऐसा मै समझता हूँ ।

**विधास्यति कथं धाता सर्गरत्नं तथाविधम् ।**
**कथं वा संघटिष्यन्ते तादृशाः परमाणवः ॥८४॥**

**अन्वयः**

धाता तथाविधं सर्गरत्नं कथं विधास्यति । तादृशाः परमाणवः कथं वा संघटिष्यन्ते ।

**व्याख्या**

धाता ब्रह्मा तथाविध तादृशमाहवमल्लदेवसदृश सर्गस्य सृष्टे रत्न बहुमूल्य-मणिरूपमुत्कृष्टा सृष्टिरित्यर्थ । कथ विधास्यति केन रूपेण करिष्यति । तादृशास्तथाविधा आहवमल्लदेवस्य समवायिकारणभूता परवाणव. कारणभूत-द्रव्याणि कथ वा सघटिष्यन्ते केन प्रकारेण वा मिलिष्यन्ति । आहवमल्लदेव-समवायिकारणीभूतावयवद्रव्याणा दुर्लभत्वात्तादृशी सृष्टिरपि न सम्भाव्यत इति महद्दु खकारणमिति भाव ।

**भाषा**

ब्रह्मा वैसे सृष्टि के रत्न को अर्थात् सर्वोच्च रचना को कैसे बना सकेगा ? और उस प्रकार के परमाणु जिनसे आहवमल्लदेव राजा की सृष्टि हुई थी कैसे मिलेगे । अर्थात् वैसे परमाणुओ के न मिलने से आहवमल्लदेव सदृश दूसरे मनुष्य की सृष्टि हो ही नही सकेगी यह एक बडे दु ख की बात है ।

**प्रधावत्सम्मुखानेक-वाहिनीगाहनक्षमः ।**
**अम्भोधिरिव दुष्प्रापः सत्त्वराशिस्तथाविधः ॥८५॥**

**अन्वयः**

प्रधावत्सम्मुखानेकवाहिनीगाहनक्षमः तथाविधः सत्त्वराशिः अम्भोधिः इव दुष्प्रापः ।

### व्याख्या

प्रधावन्त्योऽतितीव्रवेगेनाऽऽपतन्त्य समुद्रपक्षे वहन्त्य सम्मुखा अभिमुखा अनेका बह्व्यो वाहिन्य सेना पक्षे नद्य 'वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि वाहिनी' इत्यमर । तासा गाहने विलोडने क्षमस्समर्थस्तथाविधस्तादृश सत्त्वस्य बलस्य सत्त्वगुणस्य वा पक्षे सत्त्वानि जलजन्तवस्तेषा राशि 'सत्त्व द्रव्ये गुणे चित्ते व्यवसायस्वभावयो । पिशाचादावान्यभावे बले प्राणेषु जन्तुषु' इति हेमचन्द्र । निधिरम्भोधिरिव समुद्र इव दुष्प्रापो दुर्लभ । तीव्रवेगेन सम्मुख समागच्छन्तीना नदीना गाहने समर्थ, जलजन्तूना निधिस्समुद्र इव तीव्रवेगेन सम्मुख समागच्छन्तीना सेनाना विलोडने समर्थ बलवान् सत्त्वगुणयुक्तो राजाऽऽहवमल्लदेवसदृशो नरो दुर्लभ इति भाव । अत्र श्लिष्टोपमालङ्कार. ।

### भाषा

वेग से सम्मुख आने वाली नदियो को अपने मे मिला लेने मे समर्थ, जलजन्तुओ के निधि समुद्र के समान, वेग से सम्मुख आने वाली सेनाओ को मथ डालने मे समर्थ, सत्वगुण या बल का निधि राजा आहवमल्लदेव के ऐसा पुरुष दुर्लभ है ।

**आर्येण सौकुमार्यैक–भाजनेन हहा कथम् ।**
**अयं विषादवज्राग्निरसह्यत मया विना ॥८६॥**

### अन्वयः

सौकुमार्यैकभाजनेन आर्येण अयं विषादवज्राग्निः मया विना कथम् असह्यत, हहा ।

### व्याख्या

सौकुमार्यं कोमलता मार्दव वा तस्यैक भाजन पात्र तेन सौकुमार्यैकभाजनेन स्नेहार्द्रपरममृदुस्वभावेनाऽऽर्येण पूज्येन ज्येष्ठभ्रात्रा सोमदेवेनाऽयमनुभूयमानो विषाद एव पितृमरणशोक एव वज्राग्नि॰ कुलिशवदविषह्यदु खदहनो मया विना ममाऽनुपस्थितौ कथ केन प्रकारेणाऽसह्यत सोढ । हहा इति खेदे । अहमेव ज्येष्ठ-भ्रातुरतिप्रियोऽस्मि । दुःखकाले चाऽतिप्रियवस्तुनिरीक्षणेन मानसे शान्तिस्स-ञ्जायते, दु खसहनस्य क्षमताऽपि सपद्यते । ममाऽनुपस्थितौ कथ मे भ्राता तद्दु॰ख-सहने समर्थो जात. स्यादिति भाव ।

**भाषा**

हाय ! अत्यन्त कोमल हृदय, मेरे बडे भाई सोमदेव ने इस शोकरूपी वज्राग्नि को मेरे वहाँ न रहने पर कैसे सहन किया होगा। अर्थात् दु ख मे प्रियवस्तु के पास रहने से दु ख का वेग कम हो जाता है। मै उसका अत्यन्त प्रिय हूँ। अत मेरी अनुपस्थिति मे उसने इस दु ख को कैसे सहन किया होगा।

**साक्रन्दमिति चान्यच्च स संचिन्त्य पुनः पुनः।**
**शनैर्विवेकदीपेन पन्थानं प्रत्यपद्यत ॥८७॥**

**अन्वयः**

सः इति अन्यत् च पुनः पुनः साक्रन्द सचिन्त्य विवेकदीपेन शनैः पन्थानं प्रत्यपद्यत।

**व्याख्या**

स विक्रमाङ्कदेव इति च पूर्वोक्त विषयञ्चाऽन्यच्च किञ्चिन्मनोगतञ्च पुन पुनर्भूयोभूयस्साक्रन्द सविलाप यथास्यात्तथा सचिन्त्य विचार्य विवेक एव सदसद्विचार एव दीप प्रकाशकारकस्तेन सदसद्विचारप्रकाशेन शनै क्रमश पन्थान मार्गं स्वस्थता प्रत्यपद्यत प्राप्तवान्। विवेकप्रकाशेन शोकतमो निरस्य शनै यथाकथञ्चित् स्वस्थो बभूवेति भाव।

**भाषा**

वह विक्रमाङ्कदेव पूर्वोक्त तथा अन्य भी कुछ मानसिक बातो का रोते हुए बार बार विचार कर धीरे धीरे विवेक रूपी दीप के प्रकाश से (शोक रूपी अन्धकार को दूर कर) रास्ते पर आया। अर्थात् कुछ स्वस्थ हुआ।

**यथाविधि विधायाथ संस्थितस्य पितुः क्रियाम्।**
**अग्रजालोकनोत्कण्ठा—प्रेरितः सोऽचलत्पुरः ॥८८॥**

**अन्वयः**

अथ सः संस्थितस्य पितुः क्रिया यथाविधि विधाय अग्रजालोकनोत्कण्ठाप्रेरितः (सन्) पुरः अचलत्।

### व्याख्या

अथ किञ्चित्स्वास्थ्यप्राप्त्यनन्तर स विक्रमाङ्कदेव सस्थितस्य मृतस्य 'परासुप्राप्तपचत्वपरेतप्रेतसस्थिता' इत्यमर । पितुर्जनकस्य क्रिया तर्पणादि-कर्विधि शास्त्रविधानमनतिक्रम्य वर्तत इति यथाविधि शास्त्रमर्यादानुकूल विधाय कृत्वाऽग्रजस्य ज्येष्ठभ्रातुरवलोकने दर्शने उत्कण्ठयोत्कटेच्छया प्रेरितो नियोजितस्सन् पुरोऽग्रे कल्याणपुरमार्गेऽचलत् प्रतस्थे ।

### भाषा

कुछ स्वस्थ होने के अनन्तर, अपने मृत पिता की शास्त्रानुसार तर्पणादि क्रियाकर्म कर वह विक्रमाङ्कदेव, अपने बडे भाई सोमदेव से मिलने की उत्कण्ठा से प्रेरित होकर कल्याणपुर के मार्ग पर आगे बढा ।

कियद्भिरपि सोऽध्वानमुल्लङ्घ्य दिवसैस्ततः ।
निःशब्दसैन्यसंघात-सहितः प्राविशत्पुरीम् ॥८९॥

### अन्वयः

ततः निःशब्दसैन्यसंघातसहितः सः कियद्भिः अपि दिवसैः अध्वानम् उल्लङ्घ्य पुरीं प्राविशत् ।

### व्याख्या

तत कल्याणनगर प्रति प्रस्थानानन्तरं नि शब्दा. (दु खेन) स्वनमकुर्वाणा सैन्या सैनिकास्तेषा सघातस्समूहस्तेन सहितो युक्त स विक्रमाङ्कदेव कियद्भिरपि कतिपयैरेव दिवसैर्दिनैरध्वान पन्थानमुल्लङ्घ्य समतिक्रम्य पुरीं कल्याणनगर प्राविशत् प्रविष्ट. ।

### भाषा

इसके अनन्तर शब्द रहित अर्थात् बाजे गाजे से रहित, सेना समूह के सहित कुछ ही दिनो मे रास्ता पार कर वह कल्याणपुर मे प्रविष्ट हुआ ।

सरोजिनीव हंसेन नयेनेव नरेन्द्रता ।
कविना सुखगोष्ठीव चन्द्रेणेव विभावरी ॥९०॥

लक्ष्मीरिव प्रदानेन कवित्वेनेव वाग्मिता ।
मेने तेनापवित्रेव पित्रा विरहिता पुरी ॥६१॥

**अन्वयः**

तेन पित्रा विरहिता पुरी, हंसेन विरहिता सरोजिनी इव, नयेन विरहिता नरेन्द्रता इव, कविना विरहिता सुखगोष्ठी इव, चन्द्रेण विरहिता विभावरी इव, प्रदानेन विरहिता लक्ष्मीः इव, कवित्वेन विरहिता वाग्मिता इव अपवित्रा मेने ।

**व्याख्या**

तेन विक्रमाङ्कदेवेन पित्राऽऽहवमल्लदेवेन विरहिता वियुक्ता पुरी कल्याणपुरी हंसेन मरालेन विरहिता शून्या सरोजिनीव कमलिनीव, नयेन नीत्या विरहिता विहीना नरेन्द्रतेव राजत्वमिव राजकर्मेवेत्यर्थः । कविना सहृदयेन पण्डितेन विरहिता रिक्ता सुखस्याऽऽनन्दस्य रसस्य लक्षणया तदनुभवस्य तदनुभवकर्तुर्गोष्ठीव सभेव, चन्द्रेणेन्दुना विरहिता हीना विभावरीव रात्रिरिव कवित्वेन कविकर्मणाऽलौकिकचमत्काराधायककाव्येनेत्यर्थः । विरहिता विना वाग्मितेव वाक्प्रावीण्यमिवाऽपवित्राऽमेध्याऽरमणीयेत्यर्थः । मेने बुद्धा । मालोपमा—विनोक्त्यलङ्कारयो सङ्करः ।

**भाषा**

उसने पिता से रहित उस कल्याणपुर को, हंस से रहित कमलिनी, नीति से रहित राज्यकार्य, कवि से रहित रस भरी बातो से रसास्वाद देने वाली सभा, चन्द्रमा से रहित रात, दान से रहित सम्पत्ति और उत्तम काव्य रचना से रहित वाक्पटुता के समान, अपवित्र अर्थात् अरमणीय समझा ।

युगलकम्—युग्मकम्[1] ।

अग्रे समागतेनाथ मानितः सोऽग्रजन्मना ।
सह तेनैव सक्लेशं विवेश नृपमन्दिरम् ॥६२॥

**अन्वय.**

अथ अग्रे समागतेन अग्रजन्मना मानितः सः तेन एव सह नृपमन्दिरं सक्लेशं विवेश ।

---

[1] युग्मकलक्षण ४२ श्लोकटिप्पण्या द्रष्टव्यम् ।

### व्याख्या

अथ पुरीदर्शनानन्तरमग्रे पुर समागतेन सभाजनार्थं समुपस्थितेनाऽग्रजन्मना ज्येष्ठभ्रात्रा सोमदेवेन मानितस्समादृतस्स विक्रमाङ्कदेवस्तेनैव सोमदेवेनैव सह नृपमन्दिर राजसदन क्लेशेन दु खेन सहित सक्लेश सदु ख शोकमनुभवन्नित्यर्थ । विवेश प्रविष्ट ।

### भाषा

कल्याण नगरी में पहुँचने पर बडे भाई सोमदेव से अगवानी द्वारा सम्मानित विक्रमाङ्कदेव, उसी के साथ राजमन्दिर मे दु ख से गया ।

**अन्योन्यकण्ठाश्लेषेण पीडितस्येव निर्ययुः ।**
**बाष्पाम्भसस्तयोर्धाराश्चिरं तत्रातिमांसलाः ॥९३॥**

### अन्वयः

तत्र तयोः अन्योन्यकण्ठाश्लेषेण पीडितस्य इव बाष्पाम्भसः अति-मांसलाः धाराः चिरं निर्ययुः ।

### व्याख्या

तत्र राजमन्दिरे तयोस्सोमदेवविक्रमाङ्कदेवयोरन्योन्यस्य परस्परस्य कण्ठाश्लेषेण कण्ठपरिरम्भणेन पीडितस्येव निष्ठ्यूतस्येव बाष्पमेवाम्भो बाष्पाम्भोऽश्रुजल तस्याऽतिमासला अतिबलवत्य अतिविशाला इत्यर्थ । 'बलवान्मासलोऽसल.' इत्यमर । धारा प्रवाहाश्चिर बहुकालपर्यन्त निर्ययुर्निस्सृता. । तौ चिरकालपर्यन्तमश्रूणि मुञ्चन्तौ रुरुदतुरिति भाव । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

राजमन्दिर में एक दूसरे को कस कर गले लगाने से मानो दबने से आसुओ की विशाल धाराएँ चिरकाल तक निकलती रही ।

**क्रमात्ताभ्यामदुःखाभ्यामन्योन्यस्नेहवृत्तिभिः ।**
**केऽपि कैतवबाह्याभिरत्यवाह्यन्त वासराः ॥९४॥**

### अन्वयः

—क्रमात् अदुःखाभ्या ताभ्यां कैतवबाह्याभिः अन्योन्यस्नेहवृत्तिभिः के अपि वासराः अत्यवाह्यन्त ।

**व्याख्या**

क्रमात् क्रमशो नास्ति दुःख ययोस्तौ ताभ्या दुःखरहिताभ्या ताभ्या सोमदेवविक्रमाङ्कदेवाभ्या कैतवेन कपटेन 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमर । बाह्या बहिर्भूतास्ताभिर्निष्कपटाभिरन्योन्यस्य परस्परस्य स्नेहवृत्तिभि· प्रेमार्द्रव्यवहारै केऽपि कियन्तोऽपि वासरा दिवसा अत्यवाह्यन्त यापिता ।

**भाषा**

धीरे धीरे दुःख से मुक्त दोनो भाइयो ने परस्पर कपट रहित, प्रेम भरे व्यवहारो मे कुछ दिन बिताये ।

**ज्येष्ठं गुणैर्गरिष्ठोऽपि पितुस्तुल्यममंस्त सः ।**
**महात्मनाममार्गेण न भवन्ति प्रवृत्तयः ॥९५॥**

**अन्वयः**

सः गुणैः गरिष्ठः अपि ज्येष्ठं पितुः तुल्यम् अमंस्त । महात्मनाम् अमार्गेण प्रवृत्तयः न भवन्ति ।

**व्याख्या**

स विक्रमाङ्कदेवो गुणैश्शौर्यदयादाक्षिण्यादिनृपोचितगुणैर्गरिष्ठोऽपि गुरुतमोऽपि श्रेष्ठोऽपीतिभाव. । ज्येष्ठमग्रज सोमदेव पितुराहवमल्लदेवस्य तुल्य सन्मानेन समानममस्त विज्ञातवान् । यतो महात्मना मनस्विना महानुभावानाममार्गेणाऽनुचिताध्वना प्रवृत्तयोऽध्यवसाया न भवन्ति । 'ज्येष्ठोभ्राता पितु सम' इति-स्मरणात् । अत्राऽर्थान्तरन्यासालङ्कार ।

**भाषा**

शौर्यादिगुणो मे श्रेष्ठ होने पर भी विक्रमाङ्कदेव अपने बडे भाई सोमदेव को पिता आहवमल्लदेव के समान ही आदरपूर्वक मानता था । बडे लोगो के व्यवहार अनुचित तरीके मे नही होते ।

**स दिग्वलयमालोड्य वस्तुजातमुपार्जितम् ।**
**तस्मै समर्पयामास नास्ति लोभो यशस्विनाम् ॥९६॥**

### अन्वयः

सः दिग्वलयम् आलोड्य उपार्जितं वस्तुजातं तस्मै समर्पयामास। यशस्विनां लोभः न अस्ति ।

### व्याख्या

स विक्रमाङ्कदेवो दिग्वलय दिङमण्डलमालोड्य प्रमथ्योपार्जित सगृहीत वस्तुजात सकल वस्तु तस्मै सोमदेवाय समर्पयामास ददौ । यशस्विना कीर्तिमता लोभस्सम्पत्तिलोभो नास्ति न भवति । अत्राऽर्थान्तरन्यासालङ्कार ।

### भाषा

विक्रमाङ्कदेव ने दिग्विजय कर लाई हुई सब चीजे अपने बडे भाई सोमदेव को दे दी । यशस्वी लोगो मे लोभ नही होता ।

जातः पापरतः कैश्चिद्दिनैः सोमेश्वरस्ततः ।
एषा भगवती केन भज्यते भवितव्यता ॥६७॥

### अन्वय·

ततः कैश्चित् दिनैः सोमेश्वरः पापरतः जातः । एषा भगवती भवितव्यता केन भज्यते ।

### व्याख्या

ततो विक्रमाङ्कदेवदत्तविभूतिग्रहणानन्तर कैश्चिद्दिनै कियद्भिर्दिवसै कस्मिश्चित्काले गते सतीत्यर्थ । सोमेश्वर सोमदेव पापे पापयुक्तकर्मणि रत आसक्तो जातो बभूव । एषा प्रसिद्धा भगवती देवी भवितव्यता नियति केन पुरुषेण भज्यते विनाश्यते दूरीक्रियत इत्यर्थ ।

### भाषा

इसके बाद कुछ समय बीतने पर सोमदेव पाप करने मे प्रवृत्त हो गया । भगवती भवितव्यता को कौन टाल सकता है ।

मदिरेव नरेन्द्रश्रीस्तस्याभून्मदकारणम् ।
न विवेद परिभ्रष्टं यदशेषं यशोंशुकम् ॥६८॥

**अन्वयः**

तस्य नरेन्द्रश्रीः मदिरा इव मदकारणम् अभूत्। यत् (सः) परि-भ्रष्टम् अशेष यशोंशुकं न विवेद।

**व्याख्या**

तस्य सोमदेवस्य नरेन्द्रश्री राजलक्ष्मीर्मदिरेव मद्यमिव मदकारणमविवेक-हेतुरभूत्। यद्यस्मात्कारणात् स सोमदेव परिभ्रष्ट गलितमशेषमखिल यश कीर्तिरेवांशुक वस्त्र न विवेद न ज्ञातवान्। यथा कश्चिन्मदोन्मत्तो मदान्धत्वात् स्वशरीरात् गलित वस्त्र न जानाति तथैवाऽय सोमदेवोऽविवेकित्वादखिल यशो विनष्टमिति न जानाति स्मेति भाव।

**भाषा**

सोमदेव की राजश्री ही मदिरा के समान उसे मदोन्मत्त बनाने मे कारण हुई। इसीसे उसने पूर्णतया नष्ट होने हुए यश रूपी वस्त्र को नही जाना। अर्थात् जिस प्रकार किसी शराबी का शरीर पर का पूरा कपडा गिर जाता है तो भी उसे वह नशे मे नही जान पाता। उसी प्रकार राजलक्ष्मी के मद में चूर अविवेकी सोमदेव को सम्पूर्ण कीर्ति नष्ट हो जाने का पता ही नही चला।

**बाधिर्यमिव मङ्गल्य-तूर्यध्वनिभिरागतः।**
**ईषदप्येष नाश्रौषीद् वचनानि महात्मनाम् ॥६६॥**

**अन्वयः**

एषः मङ्गल्यतूर्यध्वनिभिः बाधिर्यम् आगतः इव महात्मना वचनानि ईषद् अपि न अश्रौषीत्।

**व्याख्या**

एष सोमदेवो मङ्गल्य माङ्गलिक तूर्य वाद्यविशेष तस्य ध्वनिभिर्नादैर्बाधिर्यं बधिरतामागत प्राप्त इव महात्मना कुलवृद्धाना महानुभावाना वचनानि सद्वाक्यानीषदपि मनागपि नाऽश्रौषीत् नाऽऽकर्णितवान्। राजलक्ष्म्या मदोन्मत्तो माङ्गलिकवाद्यविशेषनादेन बधिरतामिवाऽऽपन्न सोमदेव श्रोत्रेन्द्रियाभावात् महानुभावै समुपदिष्टानि वाक्यानि नाऽश्रृणोदिति भाव। उत्प्रेक्षालङ्कार।

**भाषा**

वह सोमदेव माङ्गलिक वाद्यविशेषो के शब्दो से मानो बहिरा होकर कुल-वृद्ध महानुभावो के सदुपदेशो को बिलकुल नही सुनता था ।

**कुर्वन्नङ्गेषु वैक्लव्यमाविष्कृतमदज्वरः ।**
**स निनाय श्रियं राजा राजयक्ष्मेव संक्षयम् ॥१००॥**

**अन्वयः**

**आविष्कृतमदज्वरः सः राजा राजयक्ष्मा इव अङ्गेषु वैक्लव्यं कुर्वन् श्रियं संक्षयं निनाय ।**

**व्याख्या**

आविष्कृत प्रकटीकृतो मद ज्वर इव मदज्वरो येन स राजा नृपस्सोमदेवो राजयक्ष्मेव क्षयरोग इवाऽङ्गेष्ववयवेषु विक्लव स्वाङ्गान्येव धारयितुमशक्तो विह्वलस्तस्य भावो वैक्लव्य विह्वलत्व कुर्वन् राजपक्षेऽमात्याद्यङ्गेषु वैक्लव्य सम्यक् प्रबन्धराहित्य दौर्मनस्यमित्यर्थ कुर्वन् सम्पादयन् श्रिय राजलक्ष्मी, राजयक्ष्मापक्षे शोभा सक्षय विनाश निनाय नयति स्म । यथा क्षयरोग पूर्वं ज्वर समुत्पाद्य रोगिणोऽवयवेषु विकलता जनयित्वा तस्य शरीरशोभा नाशयति तथैव मदाप्लुत सोमदेवोऽमात्यादिराज्याङ्गेषु वैमनस्यरूप वैक्लव्य जनयित्वा राजलक्ष्मी नाशयति स्मेति भाव । अत्रोपमालङ्कार ।

**भाषा**

अभिमान के समान ज्वर को प्रकट करने वाले क्षयरोग के समान सोमदेव राजा ने (राजयक्ष्मा के पक्ष मे) शारीरिक अवयवो मे विकलता उत्पन्न कर (राजा के पक्ष मे) अमात्य आदि राज्य के अङ्गो मे वैमनस्य उत्पन्न कर, शोभा को (पक्ष मे) राजलक्ष्मी को नष्ट कर दिया । अर्थात् जिस प्रकार क्षय रोग पहिले ज्वर प्रकट कर शरीर के अङ्ग प्रत्यङ्ग को विह्वल कर शरीर की शोभा को नष्ट कर देता है उसी प्रकार राजा ने मद प्रकट कर मन्त्री आदि राज्य के अङ्गो मे वैमनस्य उत्पन्न कर राजलक्ष्मी को नष्ट कर दिया ।

**अपास्तकुन्तलोल्लासा वैराग्यं दधती धरा ।**
**जीवत्येव धवे तस्मिन् विधवेव व्यराजत ॥१०१॥**

**अन्वयः**

अपास्तकुन्तलोल्लासा वैराग्यं दधती धरा तस्मिन् धवे जीवति एव विधवा इव व्यराजत ।

**व्याख्या**

अपास्त. परित्यक्तो निरस्तो वा कुन्तलाना कर्णाटदेशाना केशानां वोल्लास-स्समुन्नति प्रसाधन वा यया सा वैराग्य विरक्तता दधती धारयन्ती धरा पृथ्वी तस्मिन् सोमदेवे धवे पत्यौ जीवत्येव विद्यमानेऽपि विगतो मृतो धव पतिर्यस्याः सा विधवा सेव मृतपतिकानायिकेव व्यराजत विभाति स्म । कर्णाटदेशरूप-केशानामप्रसाधनादर्थात् कर्णाटदेशस्याऽवनते· पृथ्वी सत्यपि कर्णाटदेशाधिपे सोमदेवे विधवेव स्थितेति भाव । विधवैव केशप्रसाधन न करोतीति दिक् ।

**भाषा**

अपने कर्णाट देश रूपी केशो का श्रृङ्गार न करने वाली अर्थात् सोमदेव के पापाचरण से कर्णाटदेश की अवनती होने से, विरक्त पृथ्वी सोमदेवरूपी पति के जीवित रहने पर भी विधवा स्त्री के समान दिखाई देती थी । क्योकि भारत-वर्ष मे पहिले काल मे सधवा स्त्रियाँ ही केशो का श्रृङ्गार करती थी ।

**चक्रुः स्तम्बेरमाः पृष्ठे तदारोहणदूषिते ।**
**अभ्युक्षणमिवोदस्त–हस्तशीकरवारिभिः ॥१०२॥**

**अन्वयः**

स्तम्बेरमाः तदारोहणदूषिते पृष्ठे उदस्तहस्तशीकरवारिभिः अभ्युक्षणम् इव चक्रुः ।

**व्याख्या**

स्तम्बेरमा इभा 'इभ स्तम्बेरम पद्मी यूथनाथस्तु यूथप' इत्यमर । तस्य पापस्य सोमदेवस्याऽरोहणेन तत्रस्थिति गतेन दूषिते कलुषिते पृष्ठे, उदस्तान्यूर्ध्वं क्षिप्तानि हस्तेन शुण्डादण्डेन शीकरवारीणि जलकणाम्बूनि 'शीकरोम्बुकणाः स्मृता इत्यमर । तैरुदस्तहस्तशीकरवारिभिरभ्युक्षण सिञ्चनमिव चक्रु । अपवित्रस्थान जलेनाभ्युक्ष्य पवित्रीक्रियते तथैव हस्तिन पापसोमदेवस्थित्याऽ-पवित्रे पृष्ठे शीकराणि प्रक्षिप्य तत्पवित्रीचक्रुरिति भाव । उत्प्रेक्षालङ्कार ।

**भाषा**

हाथी, पापी सोमदेव के बैठने से अपवित्र अपनी पीठ को, ऊपर उछाले हुए अपने मूँड के जलकणो के पानी से मानो पानी छिडक कर पवित्र करते थे ।

**फालैर्दिव्यमिवागृण्हन् मण्डलभ्रमणोद्यताः ।**
**अयोग्यतां साधयितुं तस्य सेनातुरङ्गमाः ॥१०३॥**

**अन्वयः**

तस्य अयोग्यतां साधयितुं मण्डलभ्रमणोद्यताः सेनातुरङ्गमाः फालैः दिव्यम् इव अगृण्हन् ।

**व्याख्या**

तस्य सोमदेवस्याऽयोग्यता राजपदानर्हत्व साधयितु प्रमाणीकर्तुं मण्डलेन मण्डलाकारेण भ्रमण परिभ्रमण तस्मिन्नुद्यतास्तत्परा मण्डले शुचिदेशे यद्भ्रमण गमन तत्रोद्यता लग्ना वा सेनाया वाहिन्यास्तुरङ्गमा अश्वा फालै स्फालैरूर्ध्वमुत्प्लुत्य गमनैर्दिव्य शपथमिवाऽगृण्हन् । यथा केचन मनुष्या कमपि विषय प्रमाणीकर्तुं पवित्रमण्डले गत्वोत्थाय शपथग्रहण कुर्वन्ति । तथैव तैरश्वैर्मण्डलाकारभ्रमणव्याजेन पवित्रमण्डलमाश्रित्योत्फालैश्चोर्ध्वमुत्थाय सोमदेवस्याऽयोग्यता साधयितु शपथग्रहणमिव कृतम् । अथवा यथा केचिन्मनुष्या प्रायश्चित्तग्रहणाय पवित्रमण्डलाख्यस्थानेषु धावित्वा उत्फाल कुर्वन्त स्तेन च स्वस्य निष्पापता प्रमाणयन्ति, तथैव मण्डलाकार-क्रीडा-भ्रमणव्याजेन, उत्फालैश्चाश्वा सोमदेवसपर्कजन्यपापादात्मान पापरहित साधयितुं दिव्यमिवाऽकुर्वन्निति भाव ।

**भाषा**

उस सोमदेव की अयोग्यता सिद्ध करने के लिये उसकी सेना के घोडे मण्डलाकार (गोल) घूमते हुए या प्रायश्चित्त भूमि मे घूमते हुए अपनी उछलने की क्रीडा से या प्रायश्चित्त के लिये लम्बी छलाग मारने से मानो दिव्य का ग्रहण करने लगे । अथवा जिस प्रकार कोई मनुष्य खडा होकर शपथ ग्रहण करता है उसी प्रकार ये घोडे गोल घूमते २ बीच २ में उछल कर मानो राजा सोमदेव की अयोग्यता की कसम खा रहे थे ।

**स जातु जातुषीं मेने मन्ये नरपतिश्रियम् ।**
**एतद्विलयभीत्येव क्षात्रं तेजो यदत्यजत् ॥१०४॥**

### अन्वयः

सः नरपतिश्रियं जातु जातुषीं मेने (इति अहम्) मन्ये। यत् एतद्विलयभीत्या इव (सः) क्षात्रं तेजः अत्यजत् ।

### व्याख्या

स. सोमदेवो नरपते राज्ञ श्रिय लक्ष्मी नरपतिश्रिय राजलक्ष्मी जातु कदाचित् जतुषो लाक्षाया विकारो जातुषी ता जातुषी लाक्षामयी मेने विज्ञातवानित्यह मन्ये कल्पयामि । यद्यस्मात्कारणादेतस्या लाक्षामयलक्ष्म्या विलयो द्रवीभूतत्व तस्माद्भीतिस्तया लाक्षामयलक्ष्म्या द्रवीभूतत्वात्तस्या विलयो माऽभूदिति भीत्येव स सोमदेव क्षात्र क्षत्रियसम्बन्धि तेज प्रताप–मत्यजत् तत्याज । उष्णत्वादिति यावत् । क्षात्रतेजोहीनस्सजात इति भाव । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

मैं समझता हूँ कि सोमदेव ने राजलक्ष्मी को लाख की बनी समझ लिया था। इसी कारण से क्षात्र तेज की गर्मी से कही वह पिघल कर नष्ट न हो इस हेतु से उसने क्षात्र तेज को ही छोड दिया था।

**ज्ञातास्वादः स्वयं लक्ष्म्याः पिशाच्या इव चुम्बनात् ।**
**रुधिरं कण्ठरन्ध्रेभ्यः सर्वेषामाचकाङ्क्ष सः ॥१०५॥**

### अन्वयः

पिशाच्याः इव लक्ष्म्याः चुम्बनात् स्वयं ज्ञातास्वादः सः सर्वेषां कण्ठरन्ध्रेभ्यः रुधिरम् आचकाङ्क्ष ।

### व्याख्या

पिशाच्या राक्षस्या इव लक्ष्म्या श्रियश्चुम्बनात् मुखचुम्बनात् पिशाच्या रुधिराक्तमुखत्वात्तस्या चुम्बनात् स्वय सोमदेवो ज्ञातोऽनुभूतो रुधिरस्याऽऽस्वाद स्वादुत्व येन सोऽनुभूतरुधिरास्वाद स सोमदेव सर्वेषा जनाना कण्ठरन्ध्रेभ्यो

गलच्छिद्रेभ्यो रुधिर रक्तमाचकाङक्ष पातुमैच्छत् । प्रजाना महत्कष्टप्रदोभूत्वा तासा गलरक्तमपि पातुमैच्छदिति भाव । काव्यलिङ्गमलङ्कार ।

### भाषा

पिशाची के सदृश राजलक्ष्मी का मुख चुम्बन करने से पिशाची के मुख मे लगे हुए रक्त के स्वाद का स्वय अनुभव कर वह राजा प्रजाओ के गले घोट कर उनका खून पीने की इच्छा करने लगा । अर्थात् कर आदि लगा कर प्रजाओ को अत्यधिक कष्ट देने लगा ।

उद्धूतचामरोद्दाम—समीरासङ्गिनेव सः ।
रजसा पूर्यमाणोऽभून्मार्गं द्रष्टुमनीश्वरः ॥१०६॥

### अन्वयः

उद्धूतचामरोद्दामसमीरासङ्गिना रजसा इव पूर्यमाणः सः मार्गं द्रष्टुम् अनीश्वरः अभूत् ।

### व्याख्या

उद्धूत वेगेन चालितञ्चामर प्रकीर्णक 'चामर तु प्रकीर्णकम्' इत्यमर । तस्योद्दाम उत्कट समीर पवनस्तस्याऽऽसङ्ग सम्बन्धोऽस्त्यस्येति तत्तेन वेगसचालितप्रकीर्णकजनितोत्कटपवनसम्बन्धेनेव तत्सम्बन्धादागतेनेव रजसा धूल्या रजोगुणेन वा पूर्यमाणो पूरितनेत्रोऽत्यन्त सपृक्तो वा स सोमदेवो मार्गं पन्थान विवेकयुक्तकार्यं वा द्रष्टुमवलोकयितु विचारयितु वाऽनीश्वरोऽप्रभुरसमर्थ इवेत्यर्थ. । अभूद् बभूव ।

### भाषा

जोर से डुलाए जाने वाले चवरो से जोर से बहने वाले वायु के सम्बन्ध से उडी हुई धूर (आँखो मे पड जाने से) पक्ष मे चवर डुलाये जाने के राजकीय ऐश्वर्य के सम्बन्ध से उत्पन्न रजोगुण के कारण से वह राजा सन्मार्ग का अवलोकन करने मे असमर्थ हो गया ।

तेजोनिधीनां रत्नानां संभारं धारयन्नपि ।
बभूव दैवोपहतस्तमःस्तोमैस्तिरोहितः ॥१०७॥

**अन्वयः**

दैवोपहत (सः) तेजोनिधीनां रत्नानां संभारं धारयन् अपि तमःस्तोमैः तिरोहितः बभूव ।

**व्याख्या**

दैवेन विधिना 'दैव दिष्ट भागधेयं भाग्य स्त्री नियतिर्विधि' इत्यमर. । भाग्येनोऽपहतो निरस्तो दुर्भाग्यकवलित इत्यर्थ । स सोमदेवस्तेजसा प्रभाणां निधय आकरास्तेषा प्रभाकराणा रत्नाना मणीना सभार समूहो धारयन् वहन्नपि तमसामन्धकाराणामज्ञानाना स्तोमैस्समहैस्तिरोहित प्रच्छन्नो बभूवाऽभूत् ।। रत्नरूपस्य प्रकाशकारणस्य विद्यमानत्वेऽपि प्रकाशाभावस्य तमसो वर्णनाद्विशेषोक्तिरलङ्कार । 'विशेषोक्तिरखण्डेषु कारेणषु फलावच'।

**भाषा**

दुर्भाग्य से कवलित वह राजा तेजस्वी, व प्रकाश देने वाले रत्नसमूहो को धारण करते हुए भी अन्धकार से (अज्ञान से) आवृत हो गया ।

**उपरि प्रतिबन्धेन ध्यात्वेव नमतोऽखिलान् ।**
**अधोगमनमेवासौ विह्वलो बह्वमन्यत ॥१०८॥**

**अन्वयः**

असौ उपरि प्रतिबन्धेन विह्वलः ( सन् ) अखिलान् नमतः ध्यात्वा इव अधोगमनम् एव बहु अमन्यत ।

**व्याख्या**

असौ सोमदेव उपरि ऊर्ध्वं प्रतिबन्धेन प्रतिरोधेन गन्तुमक्षमत्वेनाऽखिलान् सकलान् जनान् नमतो नतिं कुर्वतोऽधोगच्छतो वा ध्यात्वेव विचार्येवाऽधोगमनमध. पतनमेव बहु नितान्तोपयोग्यमन्यत विज्ञातवान् । दैवहतस्य तस्योन्नतिकरण-मसम्भवमिति स्वपुरत सकलान् जनान् प्रणतान् दृष्ट्वा सोऽप्यध पतनमेवोप-योगीति निर्धारितवानिति भाव । उत्प्रेक्षालङ्कार ।

**भाषा**

वह राजा उन्नति के मार्ग पर आरूढ न हो सकने के कारण घबडा कर सब लोगो को नीचे झुक कर नमस्कार करते हुए देख कर मानो वह नीचे झुकने को अर्थात् अध पतन को ही उपयोगी समझने लगा ।

पिशाच इव सर्वेषां छलान्वेषणतत्परः ।
नासौ किमपि कर्तव्यं विवेद मदमूर्च्छया ॥१०९॥

अन्वयः

असौ पिशाचः इव सर्वेषां छलान्वेषणतत्परः ( सन् ) मदमूर्च्छया किम् अपि कर्तव्यं न विवेद ।

व्याख्या

असौ सोमदेव पिशाच इव राक्षस इव सर्वेषा जनाना छलस्य कपटव्यवहारस्याऽन्वेषणे सपादने तत्पर परायणस्सन् मदेन राजमदेन या मूर्च्छा विवेकाविवेकशून्यत्व तया किमपि किञ्चिदपि कर्तव्य राज्यभारवहनकर्त्तव्य न विवेद न जानाति स्म। यथा पिशाच सर्वान् जनान् दु खयितु तत्परो भवति तथैवाऽय राजाऽपि मदेन सर्वा प्रजा कपटव्यवहारेण पीडयन् स्वकर्तव्य न पालयति स्मेति भाव । उपमालङ्कार ।

भाषा

वह राजा सोमदेव राजमद की बेहोशी मे विवेक शून्य हो कर राक्षस के समान सब को कष्ट देने मे तत्पर अर्थात् सबके साथ कपट व्यवहार करने मे तत्पर होने से अपने कर्तव्य पथ से च्युत हो गया ।

व्यरज्यत समस्तोऽपि लोभैकवसतेर्जनः ।
त्यागो हि नाम भूपानां विश्वसंवननौषधम् ॥११०॥

अन्वयः

समस्तः अपि जनः लोभैकवसतेः (तस्मात्) व्यरज्यत । हि भूपानां त्यागः विश्वसंवननौषधं नाम (अस्ति)

व्याख्या

समस्तोऽखिलोऽपि जन प्रजाजन लोभस्याऽत्यागस्यैका वसति· स्थानं तस्मादत्यन्तलोभसपन्नात् सोमदेवात् व्यरज्यत विरक्तो जात स्नेहराहित्य सप्राप्त इति भाव. । हि यस्मात्कारणात् भूपाना नृपाणा त्यागो लोभरहितदानादिकं विश्वस्य ससारस्य सवननस्य वशीकरणस्य 'वशक्रिया सवनन मूलकर्म तु कार्मणम्' इत्यमर । औषध भेषज नामाऽस्ति । अत्रार्थान्तरन्यासालङ्कार ।

### भाषा

अत्यन्त लोभी उस राजा सोमदेव से सब प्रजा विरक्त हो गई अर्थात् उससे कोई स्नेह नही रखता था। क्योकि राजाओ मे, लोभ रहित दानादि क्रिया ही, ससार के समस्त प्राणियो को अपने वश मे करलेने का प्रधान औषध है।

**अकार्येऽपि कुमारस्य तात्पर्यमतनोदसौ।**
**किं लक्ष्मीसुखमुग्धानामसंभाव्यं दुरात्मनाम् ॥१११॥**

### अन्वयः

असौ अकार्ये अपि कुमारस्य तात्पर्यम् अतनोत्। लक्ष्मीसुखमुग्धाना दुरात्मनाम् असम्भाव्यं किम्।

### अथवा

असौ कुमारस्य अपि अकार्ये तात्पर्यम् अतनोत्। शेष पूर्ववत्।

### व्याख्या

असौ सोमदेवोऽकार्येऽपि प्रजापीडनरूपदुराचारेपि कुमारस्य विक्रमाङ्कदेवस्य तात्पर्यमिच्छामतनोत् प्रकटीचकार। यत्प्रजाप्रपीडन भवति तद्विक्रमाङ्कदेवेच्छयैव भवतीति प्रकटीचकारेति भाव। अथवा असौ सोमदेव कुमारस्याऽपि विक्रमाङ्कदेवस्याऽप्यकार्ये मारणे तात्पर्यमिच्छामतनोदकरोत्। अथवा—असौ सोमदेव कुमारस्य विक्रमाङ्कदेवस्य तात्पर्यं सद्विचारमप्यकार्येऽसद्विचारेऽतनोत् कृतवान् परिणतवानित्यर्थ। विक्रमाङ्कदेवस्य सत्परामर्शे दोष निष्पाद्य त हानिकर स्वविरुद्धञ्च गृहीतवानित्यर्थ। यस्मात् लक्ष्म्या सम्पात्या सुखेनाऽऽनन्देन मुग्धाना मूढानामज्ञानिना दुरात्मना दुष्टस्वभावाना पापरतानामित्यर्थ। जनानामसम्भाव्यमकरणीय किम् न किमपीत्यर्थ। अत्रार्थान्तरन्यासो नामालङ्कार पूर्वार्द्धस्योत्तरार्द्धेन समर्थनात्।

### भाषा

राजा सोमदेव अपने किये हुए प्रजापीडनादि बुरे कार्यो मे कुमार विक्रमाङ्कदेव की भी सम्मति है ऐसा प्रकट करने लगा। अथवा राजा सोमदेव कुमार विक्रमाङ्कदेव को मारडालने की भी इच्छा करने लगा। अथवा राजा सोमदेव कुमार विक्रमाङ्कदेव की अच्छी सलाह को भी बुरी

समझने लगा। क्योकि लक्ष्मी के सुख से मूढता को प्राप्त दुष्ट पापियो के लिये क्या अकर्तव्य है अर्थात् वे सब प्रकार के अन्याय के कार्य कर सकते है।

**भ्रामयन्नङ्कुशं दर्पात् द्विपेन्द्रमधिरुह्य सः।**
**अख्यातिबीजवापाय चखानेव नभस्थलीम् ॥११२॥**

**अन्वयः**

**सः द्विपेन्द्रम् अधिरुह्य दर्पात् अंकुशं भ्रामयन् अख्यातिबीजवापाय इव नभस्थलीं चखान।**

**व्याख्या**

स सोमदेवो द्वाभ्या मुखशुण्डाभ्या पिबन्तीति द्विपास्तेषामिन्द्र श्रेष्ठ गजेन्द्र-मधिरुह्य समारुह्य दर्पादहङ्कारादङकुश सृणि 'अङकुशोऽस्त्री सृणि स्त्रियाम्' इत्यमर। गजनियन्त्रणकारक शस्त्र भ्रामयन् सचालयन्नख्यातेर्दुर्यशसो बीजाना वापायेव रोपणायेव नभस्थलीं गगनस्थली चखान निखातवान्। हस्तिपका-दङकुश गृहीत्वा दर्पेणाऽस्त्रमिव भ्रामयतस्तस्याऽपकीर्तिर्लोकहास्यञ्च जातम्। तत्कार्यं नभस्थल्यामख्यातिबीजरोपणायेव नभस्थलीकर्षणरूपमिति कविरुत्प्रेक्षते अर्थात् न केवल पृथ्व्या किन्तु नभस्थल्यामपि तस्याऽयश प्रसृतमिति भाव। अत्रोत्प्रेक्षालङ्कार।

**भाषा**

उत्तम गज पर सवार होकर, अभिमान से अङकुश को आकाश मे चारो ओर फेरने वाले सोमदेव ने मानो अपयश के बीज को बोने के लिये आकाश रूपी खेत को जोता। अर्थात् इस लोक मे ही नही किन्तु ऊर्ध्व लोक मे भी उसका अपयश फैल गया।

**प्रणयप्रवणैवासीत् तस्य श्रीः सपरिग्रहा।**
**परं नाङ्गीकरोति स्म विक्रमाङ्कः कलङ्किनीम् ॥११३॥**

**अन्वयः**

**सपरिग्रहा श्रीः तस्य प्रणयप्रवणा एव आसीत् पर विक्रमाङ्कः कलङ्किनीं न अङ्गीकरोति स्म।**

### व्याख्या

सपरिग्रहा सपरिच्छदा श्री राज्यलक्ष्मीस्तस्य विक्रमाङ्कदेवस्य प्रणयेन प्रेम्णा प्रवणोन्मुखा प्रणयप्रवणा प्रीतितत्परैवाऽऽसीत् । पर किन्तु विक्रमाङ्को विक्रमाङ्कदेव कलङ्किनी सोमदेवससर्गात्कलुषिता ता नाऽङ्गीकरोति स्म न स्वीकरोति स्म । अमात्यादय सर्वेऽपि राज्याङ्गभूतास्त विक्रमाङ्कदेव राजासने स्थापयितुमैच्छन् । पर स सोमदेवससर्गादपवित्र राजासन न स्वीचकारेति भाव ।

### भाषा

यद्यपि राज्याङ्गभूत मन्त्री आदि से युक्त राज्यलक्ष्मी विक्रमाङ्कदेव के पास उसके प्रेम मे तत्पर होकर आ रही थी । अर्थात् मत्री लोग सोमदेव को राजगद्दी से उतार कर इसे राजा बनाना चाहते थे । परन्तु उसने उस गद्दी को सोमदेव के ससर्ग से कलङ्कित समझ स्वीकार नही किया ।

**बहुना किं प्रलापेन तथा राज्यं चकार सः ।**
**यथेन्दुमित्रे चालुक्य-गोत्रे प्राप कलङ्कताम् ॥११४॥**

### अन्वयः

बहुना प्रलापेन किम् । सः तथा राज्यं चकार यथा इन्दुमित्रे चालुक्य-गोत्रे (सः) कलङ्कता प्राप ।

### व्याख्या

बहुना प्रलापेनाऽतिसलपनेन किं किं प्रयोजन न किमपीत्यर्थ । स सोमदेवस्तथा तादृश राज्य राजकार्यं चकार कृतवान् यथा येनेन्दुमित्रे चन्द्रसदृशधवले चालुक्यगोत्रे चालुक्यनृपाणां वशे स सोमदेव कलङ्कता कलुषता प्राप प्राप्त । अनेनैव धवले चालुक्यवशे कलङ्क स्थापित इति भाव ।

### भाषा

अधिक कहने से क्या लाभ ? सोमदेव राजा ने ऐसा राज्य किया जिससे चन्द्रमा के सदृश निर्मल चालुक्य वश मे वह कलङ्क हो गया ।

**न शशाक निराकर्तुमग्रजस्य दुराग्रहम् ।**
**राज्यग्रहगृहीतानां को मन्त्रः किं च भेषजम् ॥११५॥**

अन्वयः

(सः) अग्रजस्य दुराग्रह निराकर्तुं न शशाक । राज्यग्रहगृहीतानां मन्त्रः कः भेषजं च किम् (अस्ति) ।

व्याख्या

स विक्रमाङ्कदेवोऽग्रजस्य ज्येष्ठभ्रातुर्दुराग्रह दुराचार प्रजापीडनरूप निराकर्तुं दूरीकर्तुं न शशाक न समर्थो बभूव । राज्यमेव ग्रहो दुष्टग्रह पिशाचादिर्वा तेन गृहीतानामाक्रान्तानामाविष्टाना वा नृपाणा मन्त्रो ग्रहपिशाचादिदूरीकरणमन्त्रविशेष को, न कोऽपीत्यर्थ । भेषजमौषध च किम् न किमपीत्यर्थ । राजमदेनाऽऽविष्टाना नृपाणा कृते न कोऽप्युपाय इति भाव ।

भाषा

कुमार विक्रमाङ्कदेव अपने बडे भाई के दुराचार को न रोक सका । राज्य रूपी क्रूर ग्रह से या पिशाचादि से गृहीत या आविष्ट राजाओ के लिये न कोई मन्त्र है न दवा है ।

**अचिन्तयच्च किं कार्यं विपर्यस्तधियामुना ।**
**अकीर्तिसंविभागस्य गमिष्याम्यत्र पात्रताम् ॥११६॥**

अन्वयः

विपर्यस्तधिया अमुना कि कार्यम् अत्र अकीर्तिसंविभागस्य पात्रतां गमिष्यामि (इति) च अचिन्तयत् ।

व्याख्या

विपर्यस्ता विपरीता धीर्बुद्धिर्यस्य तेन विपर्यस्तधिया 'बुद्धिर्मनीषा धिषणा धी-प्रज्ञा शेमुषी मति' इत्यमर । विपरीतबुद्धियुक्तेनाऽमुना सोमदेवेन किं कार्यं मम कि प्रयोजनम् न किमपीत्यर्थ । अत्राऽस्मिन् स्थानेऽकीर्तेर्दुर्यशस सविभागस्याऽशस्य पात्रता भाजनत्व गमिष्यामि प्राप्स्यामि इति चाऽचिन्तयद्विचारितवान् । सोमदेवेन पापरतेन सहाऽत्रस्थितौ तेन सहाऽहमपि दुर्यशसोऽशस्याऽऽश्रयो भविष्यामीति च विचारयामासेति भाव ।

**भाषा**

विपरीत अर्थात् निर्विवेक बुद्धिवाले सोमदेव से मुझे क्या करना है और यहाँ रहने से मैं भी दुर्यश के कुछ अंश का भागी हो जाऊँगा, ऐसा विक्रमाङ्कदेव ने विचार किया।

[१]त्यागमेव प्रशंसन्ति गुरोरुत्पथगामिनः।
तदितः साधयाम्येष दक्षिणाम्बुधिसम्मुखः ॥११७॥

**अन्वयः**

( यत् सत्पुरुषाः) उत्पथगामिनः गुरोः त्यागम् एव प्रशंसन्ति। तत् एषः ( अहम् ) दक्षिणाम्बुधिसम्मुखः सन् इतः साधयामि।

**व्याख्या**

यद्यस्मात्कारणात् (सत्पुरुषा ) उत्पथं कुमार्गं गच्छतीत्युत्पथगामी तस्योत्पथ-गामिनः कुमार्गस्थितस्य गुरोः पूज्यस्य ज्येष्ठस्य त्यागं सर्वथैवाऽसहयोगमेव प्रशंसन्ति समाद्रियन्ते। तत्तस्मात्कारणादेषोऽहं विक्रमाङ्कदेवो दक्षिणाम्बुधेर्द-क्षिणसमुद्रस्य सम्मुख उन्मुखस्सन्नितोऽस्मात्स्थानात् साधयामि गच्छामि।

**भाषा**

बड़ों के कुमार्गगामी होने पर उनका त्याग करना ही सज्जन लोग ठीक समझते हैं। इसलिये मैं यहाँ से दक्षिण समुद्र की ओर चला जाऊँगा।

मया निपीड्यमानास्ते निबिडं द्रविडादयः।
आर्यं विपर्यस्तमपि प्रभवन्ति न बाधितुम् ॥११८॥

**अन्वयः**

मया निबिडं निपीड्यमानाः ते द्रविडादयः विपर्यस्तम् अपि आर्यं बाधितुं न प्रभवन्ति।

---

[१] गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ इत्युक्ते।

### व्याख्या

मया विक्रमाङ्कदेवेन निबिडमत्यन्त निपीड्यमानास्सबाध्यमाना पराजिता इत्यर्थ । ते द्रविडादयो द्रविडदेशनृपतिप्रभृतयो विपर्यस्तमत्याचारिणमप्याऽऽर्य ज्येष्ठभ्रातर सोमदेव बाधितु पीडयितु विजेतुमित्यर्थ । न प्रभवन्ति न समर्था भविष्यन्ति । दुराचारिण्यपि भ्रातरि सहजस्नेहात्तस्त दुराचारेण सम्भाविताक्रमणकारिषु स्वयमाक्रमण कृत्वा भातृरक्षणाद्विक्रमाङ्कदेवस्य महापुरुषत्व व्यज्यते । दुराचारिणा राज्ञा पराजयोऽपि ध्वन्यते ।

### भाषा

दक्षिण समुद्र की ओर जाकर द्रविड देश के राजा आदि को खूब पीसूँगा अर्थात् हराऊँगा जिससे कुमार्ग मे प्रवृत्त भी मेरे वडे भाई को वे तग न कर सकेंगे अर्थात् परास्त न कर सकेंगे ।

**इति स मनसा निश्चित्यार्थं चुलुक्यशिखामणिः**
**श्रवणसरणिं भिन्दन्भेरीरवेण विनिर्ययौ ।**
**अपि च कुपितः क्ष्माभृत्सेनागजेषु निजेषुभिः**
**कतिषु विदधे धैर्यध्वंसं न साहसलाञ्छनः ॥११९॥**

### अन्वयः

चुलुक्यशिखामणिः सः इति अर्थं मनसा निश्चित्य भेरीरवेण श्रवणसरणिं भिन्दन् विनिर्ययौ । अपि च साहसलाञ्छनः कुपितः (सन्) निजेषुभिः कतिषु क्ष्माभृत्सेनागजेषु धैर्यध्वंसं न विदधे ।

### व्याख्या

चुलुक्यस्य चालुक्यवशस्य शिखामणिश्चूडारत्न स विक्रमाङ्कदेव इति पूर्वोक्तप्रकारेणाऽर्थं सर्वं वस्तुजात मनसा हृदयेन निश्चित्य निर्धार्य भेर्या दुन्दुभे रवेण नादेन 'भेरी स्त्री दुन्दुभि पुमान्' इत्यमर । श्रवणयो कर्णयो सरणिं रन्ध्र भिन्दन् विदारयन् विनिर्ययौ विनिर्जगाम । अपि चाऽन्यच्च साहसमेवोत्साह एव लाञ्छन चिन्ह यस्य स. साहसलाञ्छन उत्साहवती कुपितस्सन् क्रुद्धस्सन् निजेषुभिस्स्वकीयबाणै कतिषु कियत्सु क्ष्माभृत नृपस्य सोमदेवस्य सेनाया वाहिन्या गजा हस्तिनस्तेषु धैर्यस्य धीरताया ध्वस विनाश न विदधे न कृतवान् ।

किन्तु सर्वेषा नृपसेनागजाना धैर्यनाश चक्रे। हरिणीच्छन्द । 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ।

### भाषा

चालुक्य वश के शिरोभूषण विक्रमाङ्कदेव ने मन मे ऐसा निश्चय कर दुन्दुभी के निनाद से कान के पडदो को फाडते हुए, प्रस्थान कर दिया। साथ ही साथ साहसव्रती उसने क्रुद्ध होकर अपने बाणो से राजा की सेना के कितने ही हाथियो का धैर्य भग नही किया अर्थात् राजा सोमदेव की सेना के सब हाथियो को बाण मार कर भगा दिया।

**प्रत्यक्ता मधुनेव काननमही मौर्वीव चापोज्झिता**
**शुक्तिर्मौक्तिकवर्जितेव कविता माधुर्यहीनेव च।**
**तेनैकेन निराकृता न शुशुभे चालुक्यराज्यस्थितिः**
**सामर्थ्यं शुभजन्मनां कथयितुं कस्यास्ति वाग्विस्तरः ॥१२०॥**

### अन्वयः

एकेन तेन निराकृता चालुक्यराज्यस्थितिः मधुना प्रत्यक्ता काननमही इव, चापोज्झिता मौर्वी इव, मौक्तिकवर्जिता शुक्तिः इव, माधुर्यहीना कविता इव च न शुशुभे। शुभजन्मना सामर्थ्यं कथयितु कस्य वाग्विस्तरः (अस्ति)।

### व्याख्या

एकेन तेन केवलमेकेनैव तेन विक्रमाङ्कदेवेन निराकृता परित्यक्ता चालुक्यस्य चालुक्यराजवशस्य राज्यस्थिती राज्यदशा राज्यमर्यादा वा मधुना वसन्तेन चैत्रेण वा 'स्याच्चैत्रे चैत्रिको मधु' इत्यमर। प्रत्यक्ता प्रकर्षेण त्यक्ता काननस्याऽरण्यस्य 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमर.। मही भूमिरिव, चापेन धनुषोज्झिता दूरीकृता मौर्वी ज्येव, ''मौर्वी ज्या शिजिनी गुण' इत्यमर। मौक्तिकैर्मुक्ताभिर्वर्जिता रहिता शुक्तिरिव मुक्तास्फोट इव 'मुक्तास्फोट स्त्रिया शुक्ति' इत्यमर। माधुर्येण माधुर्यगुणेन हीना विरहिता कविता काव्यमिव, च न शुशुभे न शोभिता बभूव। शभ माङ्गलिक जन्म जनुर्येषा ते शुभजन्मानस्तेषा 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमर। सामर्थ्यं शक्ति कथयितु

**वक्तु कस्य पुरुषस्य कवेरित्यर्थ । वाचा वाणीना विस्तरो विस्तारोऽस्ति । न कस्याऽपीत्यर्थ । मालोपमार्थान्तरन्यासालङ्कारयो सङ्कर । शार्दूलविक्री-डितच्छन्द । 'सूर्याश्वैर्मसजस्तता सगुरव शार्दूलविक्रीडितम्' इति लक्षणात् ।**

### भाषा

अकेले विक्रमाङ्कदेव के चले जाने से अर्थात् न रहने से चालुक्य राज्य की परिस्थिति, वसन्त या चैत्र मास के बिना वनभूमि के समान, मौर्वी के बिना धनुष के समान, मोती के बिना सीप के समान, ओर माधुर्यगुण के बिना कविता के समान शोभित नही होती थी । सुमुहूर्त मे उत्पन्न महात्माओ की शक्ति के वर्णन करने का वाक्-सामर्थ्य कोन रख सकता हे अर्थात् कोई नही ।

इति श्री त्रिभुवनमल्लदेव—विद्यापति—काश्मीरकभट्ट श्री विल्हण-विरचिते विक्रमाङ्कदेवचरिते महाकाव्ये चतुर्थ सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**<br>
**भारद्वाज-बुधोत्तमात्समुदित. श्री विश्वनाथः सुधीः ।**<br>
**चक्रे रामकुबेरपण्डितवरात्संप्राप्तसाहाय्यक-**<br>
**ष्टीकायुग्ममिदं रमाकरुणया सर्गे चतुर्थे क्रमात् ॥**

ॐ शान्ति शान्ति शान्ति



॥ श्री ॥

## महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

### पञ्चमः सर्गः ।

**नैष दुर्मतिरिमं सहिष्यते राज्यकण्टकविशोधनोद्यतः ।**
**अग्रजादिति विशङ्क्य सङ्कटं सिंहदेवमनुजं निनाय सः ॥१॥**

**अन्वयः**

सः, राज्यकण्टकविशोधनोद्यतः दुर्मतिः एषः इमं न सहिष्यते इति अग्रजात् सङ्कटं विशङ्क्य अनुज सिहदेव निनाय ।

**व्याख्या**

स विक्रमाङ्कदेवो, राज्यस्य स्वराष्ट्रस्य कण्टका शत्रुरूपदायादास्तेषा विशोधनेऽपसारणे मारणे इत्यर्थ । उद्यतस्तत्परो स्वराष्ट्रदायाददूरीकरणे समुद्यतो दुर्मतिर्दुर्बुद्धिरेष सोमदेव इम सिहदेवनामान कनिष्ठभ्रातर न सहिष्यते स्वानुकूल्येन न मस्यते तस्याऽपि विनाशे समुद्यतो भवेदिति भाव । इति हेतोरग्रजात्सोमदेवात्सकट बाधा विशङ्कय वितर्क्याऽनुज कनिष्ठभ्रातर सिहदेवं जयसिहापरनामान निनायऽऽत्मना सह नीतवान् । अस्मिन् सर्गे रथोद्धताच्छन्द —'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ।

**भाषा**

निष्कण्टक राज्य करने की इच्छा से, राज्य मे बाधक दायादो को दूर कर देने मे तत्पर, यह कुबुद्धि मोमदेव, कही छोटे भाई सिहदेव उर्फ जयसिह का भी अस्तित्व सहन न कर सके, ऐसे सकट की आशका से, विक्रमाङ्कदेव ने उसको भी साथ ले लिया ।

**गुप्तभूषणरवेव सर्वतस्तूर्यमङ्गलनिनादशान्तितः ।**
**श्रीरलक्ष्यत विलक्ष्यचेतसा तस्य पृष्ठचलितेव भूभुजा ॥२॥**

**अन्वयः**

विलक्ष्यचेतसा भूभुजा सर्वतः तूर्यमङ्गलनिनादशान्तितः गुप्तभूषणरवा इव श्रीः तस्य पृष्ठचलिता इव अलक्ष्यत ।

**व्याख्या**

विगत विनष्ट लक्ष्य ज्ञानविषयो यस्मात्तद्विलक्ष्य ज्ञानविषयरहित चेतश्चित्त यस्य स तेनाऽज्ञानिना भुव पृथ्वीं भुनक्ति स्वोपभोगे समानयतीति भूभुक् तेन भूमीश्वरेण सोमदेवेन सर्वतस्सर्वासु दिक्षु तूर्यस्य भेर्या मङ्गलनिनाद मङ्गलध्वनिस्तस्य शान्त्यास्तूर्यमङ्गलध्वनिसमाप्तित 'पञ्चम्यास्तसिल्' इति तसिल् प्रत्यय । गुप्त प्रच्छन्नो भूषणानामलङ्काराणा रवस्स्वनो यस्या सा भूषणशब्दरहितेव श्री राज्यलक्ष्मीस्तस्य विक्रमाङ्कदेवस्य पृष्ठे पृष्ठतश्चलितेव चलन्तीवाऽलक्ष्यत दृष्टा । गते विक्रमाङ्कदेवे राज्यलक्ष्मीमपि तत्पश्चाद्गतामिवाऽनुमाति स्मेति भाव । अत्र माङ्गलिकतूर्यध्वन्यभावाद्भूषणशब्दशन्यत्वस्य पश्चाच्चलनस्य चोत्प्रेक्षणादुत्प्रेक्षालङ्कार ।

**भाषा**

विक्रमाङ्कदेव के प्रस्थान समय चारो ओर कही भी तुरही का मङ्गलनाद न होने से अज्ञानी राजा सोमदेव ने, राज्य लक्ष्मी मानो अपने आभूषणो के झकारो को दबाकर उसके पीछे चली जा रही है, ऐसा अनुभव किया ।

**अङ्कवर्तिनमशङ्कमाः कथं नाहमेनमुपरुद्धवानिति ।**
**तल्पनिर्लुठनशीर्णचन्दनः पर्यतप्यत विभावरीषु सः ॥३॥**

**अन्वयः**

आः । अङ्कवर्तिनम् अशङ्कम् एनम् अह कथ न उपरुद्धवान् इति विभावरीषु तल्पनिर्लुठनशीर्णचन्दन. सः पर्यतप्यत ।

**व्याख्या**

आ । इत्यत्यन्तखेदे । अङ्के उत्सङ्गे वर्तते इत्यङ्कवर्ती तमङ्कवर्तिन मदधीन कल्याणपुरस्य शङ्कया मत्त स्वायत्तीकरणस्य सन्देहेन रहितमशङ्कमेन विक्रमाङ्क-

देवमह सोमदेव कथ कस्मान्नोपरुद्धवान् प्रतिबद्धवान् । इति हेतोर्विभावरीषु रात्रिषु तल्पे शय्याया निर्लुठनेनेतस्तत परावर्तनेन शीर्णं गलित चन्दन गात्रे समुपलिप्तश्चन्दनपङ्को यस्य स तल्पनिर्लुठनशीर्णचन्दन स सोमदेव पर्यतप्यत विक्रमाङ्कदेव-निर्गमनजन्यपश्चात्तापेन सतप्तो बभूव ।

### भाषा

अत्यन्त दु ख की बात है कि मैंने पास ही मे विद्यमान नि शङ्क विक्रमाङ्कदेव को क्यो नही गिरफ्तार कर लिया—इस विचार से पलङ्ग पर बेचैनी से करवटे बदलते २ शरीर मे लगा हुआ चन्दन मिटाते हुए सोमदेव रात्रियो मे पश्चात्ताप करने लगता था ।

**तस्य मग्नमवनीपतेर्मनस्त्रासपङ्कपटले पटीयसि ।**
**भूरिसंख्यभरकर्षणक्षमैरप्यकृष्यत न मत्तदन्तिभिः ॥४॥**

### अन्वयः

अवनीपतेः तस्य पटीयसि त्रासपङ्कपटले मग्नं मनः भूरिसंख्यभर-कर्षणक्षमैः मत्तदन्तिभिः अपि न अकृष्यत ।

### व्याख्या

अवन्या भूमे पतिस्स्वामी तस्याऽवनीपते पृथ्वीपतेस्तस्य सोमदेवस्याऽतिशयेन पटुरिति पटीयान् तस्मिन् पटीयस्यतिघने त्रासो भयमेव 'दरस्त्रासो भीतिर्भी साध्वस भयम्' इत्यमर । पङ्क कर्दमस्तस्य पटल समूह तस्मिन् भीतिरूप-कर्दमसमूहे मग्न निपतित मनश्चित्त 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । भूरीणि भूयासि 'पुरुहू पुरु भूयिष्ठ स्फार भूयश्च भूरि च' इत्यमर । सख्यानि युद्धानि 'मृधमास्कन्दन सख्य समीक साम्परायिकम्' इत्यमर । तेषा भरो भारस्तस्य कर्षणे वहने क्षमा समर्थास्तैर्बहुयुद्धकरणक्षमैर्मत्ता मदान्धाश्च ते दन्तिनो गजाश्च 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप' इत्यमर. । तैर्मदान्धहस्तिभिरपि नाऽकृष्यत न समाकृष्टम् । विक्रमाङ्कदेवपराक्रमभया-द्व्याकुल सोमदेवस्य मनो मत्तगजराजसमूहसकुलाभिर्विद्यमानाभिस्सेनाभिरपि विक्रमाङ्कदेवस्य पराजयकरणे स्वविजये च विश्वस्त न बभूवेति भाव । त्रासे पङ्काभेदाद्रूपकम् ।

### भाषा

भय रूपी कीचड मे फसे हुए सोमदेव के मन को अनेक युद्धो के बोझ को खीचने मे समर्थ, उसके मदोन्मत्त हाथी भी खीच कर बाहर न कर सके। अर्थात् विक्रमाङ्कदेव के भय से पीडित मोमदेव अनेक युद्धो मे विजय प्राप्त कराने वाले हाथियो के (शक्तिशाली गज मेना के) रहते हुए भी, शान्ति न प्राप्त कर सका।

**स व्यसर्जयदथ क्वथन्मनाः पुष्कलं बलममुष्य पृष्ठतः।**
**किं न सम्भवति चर्मचक्षुषां कर्म लुब्धमनसामसात्त्विकम् ॥५॥**

### अन्वयः

अथ क्वथन्मनाः सः अमुष्य पृष्ठतः पुष्कल बल व्यसर्जयत्। चर्मचक्षुषा लुब्धमनसा किम् असात्त्विक कर्म न सम्भवति।

### व्याख्या

अथाऽनन्तर 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमर। क्वथद्दूयमान मनश्चित्त यस्य स सोमदेवोऽमुष्य विक्रमाङ्कदेवस्य पृष्ठत पश्चात् पुष्कल पर्याप्त 'श्रेयान् श्रेष्ठ पुष्कलस्यात्सत्तमश्चातिशोभने' इत्यमर। बल सैन्य व्यसर्जयत् प्रेषितवान्। चर्मणश्चक्षूषि येषा ते तेषामदूरदर्शिना लुब्ध लोभाकृष्ट मनो येषा ते तेषा लुब्धचेतसा किमसात्त्विक तामस कर्म कार्यं न सम्भवति, अपि तु सर्वमेव तामसिक कार्यं सम्भवतीति भाव। अत्राऽर्थान्तरन्यासोऽलङ्कार।

### भाषा

इसके अनन्तर पीडित हृदय सोमदेव ने विक्रमाङ्कदेव के पीछे एक वडी पलटन भेज दी। चर्मचक्षु अर्थात् अदूरदर्शी तथा लोभी मनुष्य कौन तामसिक कार्य नही कर सकते अर्थात् वे सब प्रकार के दुष्कर्म कर सकते है।

**प्राप्तमप्यनयपङ्कशङ्कितस्तद्बलं न सहसा जघान सः।**
**अप्रतर्क्यभुजवीर्यशालिनः सङ्कटेप्यगहनास्तथाविधाः ॥६॥**

**अन्वयः**

अनयपङ्कशङ्कितः सः प्राप्तम् अपि तद्बल सहसा न जघान। अप्रतर्क्यभुजवीर्यशालिनः तथाविधाः सङ्कटे अपि अगहनाः (भवन्ति)।

**व्याख्या**

अनय एवाऽनीतिरेव पङ्क कर्दमस्तस्माच्छङ्कित शङ्कायुक्तस्स विक्रमाङ्कदेव प्राप्त पश्चादागतमपि तस्य सोमदेवस्य बल सैन्य तद्बल 'अनीकिनी बल सैन्य चक्र चानीकमस्त्रियाम्' इत्यमर। सहसा झटिति न जघान न संहृतवान्। अप्रतर्क्यमचिन्त्य भुजयोर्दोष्णोर्वीर्य पराक्रमस्तेन शालन्ते शोभन्त इत्यप्रतर्क्यभुजवीर्यशालिनोऽचिन्त्यभुजशक्तिशोभितास्तथाविधा विक्रमाङ्कदेवसदृशा सङ्कटेप्यापत्तावप्यगहना निराकुला भवन्ति। अत्राप्यर्थान्तरन्यासोऽलङ्कार।

**भाषा**

अनीति रूपी कीचड से शङ्कित विक्रमाङ्कदेव ने सेना के पास मे आ जाने पर भी उसका सहार नही किया। क्योकि कल्पनातीत भुजबल से शोभित विक्रमाङ्कदेव जैसे लोग आपत्ति आजाने पर भी घबडाते नही।

**अन्तकः प्रतिभटक्ष्मभृतां निर्दयप्रहणनोद्यतं ततः।**
**तन्मदद्विरदपादचूर्णितं सैन्यमेककवलं चकार सः ॥७॥**

**अन्वयः**

ततः प्रतिभटक्षमाभृताम् अन्तकः सः निर्दयप्रहणनोद्यत सैन्य तन्मदद्विरदपादचूर्णित (सत्) एककवल चकार।

**व्याख्या**

ततस्सेनागमनानन्तर प्रतिभटा शत्रुरूपा ये क्षमाभृत पृथ्वीपालास्तेषा प्रतिपक्षभूपालानामन्तको यम स विक्रमाङ्कदेवो निर्दय दयारहित क्रूरतापूर्वकमित्यर्थ। यत्प्रहणन मारण तदर्थमुद्यत प्रवृत्त सैन्य बल ते प्रसिद्धा मदद्विरदा मदान्धा गजास्तेषा पादैश्चरणैश्चूर्णित मर्दित सदेककवलमेकग्रास क्षणमात्रेणैव क्षीणमित्यर्थ। चकार कृतवान्। पृष्ठत समागत सोमदेवसैन्य सहसाऽऽक्रमणोद्यत दृष्ट्वा स्वगजपादघातद्वारा नाशितवानिति भाव। रूपकमलङ्कार

### भाषा

सोमदेव की सेना के आजाने पर विपक्षी राजाओ के लिये यमस्वरूप विक्रमाङ्कदेव ने क्रूरता से मार काट करने मे प्रवृत्त उसकी सेना को, उन मदोन्मत्त हाथियो के पाँवो तले कुचला कर क्षण भर मे नष्ट कर दिया ।

**किं बहुप्रलपितैः पुनः पुनः प्रत्यनीकपृतनाः समागताः ।**
**कालवक्त्रकुहरे निवेश्य स स्वाङ्गशेषमकरोन्महीपतिम् ॥८॥**

### अन्वयः

पुनः पुनः बहुप्रलपितैः किम् । सः समागता प्रत्यनीकपृतनाः काल-वक्त्रकुहरे निवेश्य महीपति स्वाङ्गशेषम् अकरोत् ।

### व्याख्या

पुन पुन भूयो बहुप्रलपितैर्बहुभाषितै किं न किमपि प्रयोजनम् । स विक्रमाङ्कदेव समागता समराङ्गण प्रत्यागता प्रत्यनीकस्य विपक्षस्य शत्रोरि-त्यर्थ । पृतनास्सेना (कर्म) 'अस्त्रिया समरानीकरणा कलहविग्रहौ' इत्यमर । ध्वजिनी वाहिनी सेना पृतनाऽनीकिनीचमू' इत्यमर । कालस्य यमस्य वक्त्रं मुखमेव कुहर बिल 'अथ कुहर सुषिर विवर बिलम्' इत्यमर । तस्मिन्निवेश्य प्रवेश्य महीपतिं पृथ्वीपतिं सोमदेव स्वस्याऽङ्ग शरीरमेव शेषमवशिष्टाशो यस्य त स्वशरीरमात्रावशेष निस्सहायमित्यर्थ । अकरोत् कृतवान् ।

### भाषा

बार २ बहुत कहने से क्या लाभ । उसने आई हुई विपक्षी पलटनो को यमराज के मुख रूपी बिल मे डालकर राजा सोमदेव को केवल शरीर मात्र शेष बना दिया । अर्थात् उसकी सब सेना नष्ट कर डाली ।

**राजहंसमिव बाहुपञ्जरे श्रीविलासभुवि लालयन्यशः ।**
**तत्र तत्र शतपत्रलोचनश्चित्रमभ्युदयमाससाद सः ॥९॥**

### अन्वयः

शतपत्रलोचनः सः श्रीविलासभुवि बाहुपञ्जरे राजहसम् इव यशः लालयन् (सन्) तत्र तत्र चित्रम् अभ्युदयम् आससाद ।

### व्याख्या

शतपत्रे कमले इव लोचने नेत्रे यस्य स कमलनेत्रस्स विक्रमादित्य श्रियो राजलक्ष्म्या शोभाया वा विलासभुवि क्रीडास्थाने बाहुर्भुज एव पञ्जरस्तस्मिन् भुजपञ्जरे राजहसमिव मरालमिव शुभ्र यश कीर्तिं लालयन् सुखपूर्वक पालयन् सन् तत्र तत्र सर्वत्र स्थाने चित्रमाश्चर्ययुक्तमभ्युदय समुन्नतिमाससाद प्राप्तवान् ।

### भाषा

कमल के समान नेत्र वाले उस विक्रमाङ्कदेव ने राजलक्ष्मी या शोभा की विलास भूमि अपनी भुजा रूपी पिंजडे मे हस के समान श्वेत यश को प्रेमपूर्वक पालन करते हुए सर्वत्र आश्चर्य जनक अभ्युदय प्राप्त किया। अर्थात् अपने भुजबल से शत्रुओ को परास्त कर यश फैलाते हुए सर्वत्र आश्चर्य जनक अभ्युदय किया ।

**मन्युपङ्ककलुषं समुद्वहन् भ्रातृदुश्चरितचिन्तनान्मनः ।**
**सुप्रसन्नपयसा प्रसन्नतां द्रागनीयत स तुङ्गभद्रया ॥१०॥**

### अन्वयः

भ्रातृदुश्चरितचिन्तनात् मन्युपङ्ककलुषं मनः समुद्वहन् सः सुप्रसन्नपयसा तुङ्गभद्रया द्राक् प्रसन्नताम् अनीयत ।

### व्याख्या

भ्रातुस्सोमदेवस्य दुश्चरित कुचरित्र तस्य चिन्तनात् स्मरणात् मन्यु क्रोध एव दैन्यमेव वा 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर । पङ्क कर्दमस्तेन कलुष मलिन मनो हृदय समुद्वहन् धारयन् स विक्रमाङ्कदेव सुप्रसन्न निर्मल पयो जल यस्यास्तया तुङ्गभद्रया नद्या द्राग् झटिति प्रसन्नता निर्मलत्वमनीयत प्राप्त । तुङ्गभद्रादर्शनेन तत्र स्नात्वा च प्रसन्नचित्तो बभूवेति भाव । अत्र रूपकालङ्कार ।

### भाषा

अपने भाई सोमदेव के कुकर्मों का विचार करने से उत्पन्न क्रोध या विषाद रूपी कीचड से मलिन हृदय को धारण करने वाला विक्रमाङ्कदेव निर्मल जल वाली तुङ्गभद्रा नदी को देख कर (और उसमे स्नान कर) शीघ्र ही प्रसन्न हो गया ।

**तत्करीन्द्रनिवहावगाहनैर्वाहिनी प्रतिपथेन सागमत् ।**
**दन्तिदानजलनिम्नगाः पुनर्लेभिरे प्रणयमापगापतेः ॥११॥**

### अन्वयः

सा वाहिनी तत्करीन्द्रनिवहावगाहनैः प्रतिपथेन अगमत् । दन्तिदान-जलनिम्नगाः आपगापतेः प्रणयं पुनः लेभिरे ।

### व्याख्या

सा प्रसिद्धा वाहिनी तुङ्गभद्रानदी 'वाणिन्यो नर्तकी दूत्यौ स्रवन्त्यामपि वाहिनी' इत्यमर । तस्य विक्रमाङ्कदेवस्य करीन्द्रा गजेन्द्रास्तेषानिवहा समूहा-स्तेषामवगाहनानि स्नानानि तैस्तत्करीन्द्रनिवहावगाहनै प्रतिपथेन विपरीत-मार्गेणाऽगमत् प्रवहति स्म । दन्तिना करिणा दानजलस्य मदजलस्य निम्नगा नद्य आपगाना नदीना 'स्रवन्ती निम्नगापगा' इत्यमर । पतिस्समुद्रस्तस्य प्रणय स्नेह सगममित्यर्थ. । पुनर्लेभिरे प्रापुश्च । तुङ्गभद्राया. प्रतिकूलगमनेन मदजलनदीनाञ्च समुद्रसगमेन गजेन्द्राणामत्याधिक्य सूचितम् । अत्र लिङ्गसाम्या-न्नायक-नायिकाव्यवहारप्रतीते समासोक्तिरलङ्कार । तुङ्गभद्राया रुष्टनायिका-व्यवहारश्च प्रतीयते ।

### भाषा

वह तुङ्गभद्रा नदी विक्रमाङ्कदेव के असख्य बडे २ हाथियो के एक साथ उसमे उतर कर स्नान करने से उलटी बहने लगी और हाथियो के मदजल की नदियाँ समुद्र मे जा मिली ।

**वारणः प्रतिगजं विलोकयंस्तद्विमर्दरसमांसलस्पृहः ।**
**आददे न विशदं नदीजलं शीलमीदृशममर्षशालिनाम् ॥१२॥**

### अन्वयः

प्रतिगजं विलोकयन् तद्विमर्दरसमांसलस्पृहः वारणः विशदं नदीजलं न आददे । अमर्षशालिनाम् ईदृशं शीलम् ।

### व्याख्या

प्रतिगज प्रतिमल्लहस्तिन विलोकयन सपश्यन् तस्य प्रतिगजस्य विमर्देन सम्मर्देन शरीरसघट्टनेन वा यो रसो जलमानन्दो वा तस्मिन्मासला बलवती

स्पृहाऽऽकाङक्षा यस्य स वारणो गज 'मतङ्गजो गजो नाग कुञ्जरो वारणः करी' इत्यमर । विशद निर्मल नद्यास्तुङ्गभद्राया जल पयो न आददे न जग्राह । अमर्षेण रोषेण शालन्ते शोभन्ते इत्यमर्षशालिनस्तेषा 'कोपक्रोधामर्षरोषप्रतिघा-रुट्क्रुधौ स्त्रियौ' इत्यमर । क्रोधयुक्तानामीदृशमेव विधं शील स्वभाव 'शील स्वभावे सद्वृत्ते' इत्यमर । तद्गजो मदान्धत्वात्प्रतिमल्लगजेन साकं युद्धर-सानुभवेच्छया तदानन्दलोभपरवशस्सन् पिपासाशान्त्यै निर्मल पेयमपि नदीजल न पपाविति भाव । अत्राऽर्थान्तरन्यासोऽलङ्कार ।

### भाषा

विरोधी हाथी को देखकर उसको धर दबाने के रस या जल की उत्कट इच्छा रखने वाले विक्रमाङ्कदेव के हाथी ने तुङ्गभद्रा नदी के निर्मल जल का पान नही किया । क्रोधियो का स्वभाव ही ऐसा होता है ।

**षट्पदध्वनिभिराकुलीकृतः पातुमैच्छदुदकं न कुञ्जरः ।**
**तान्प्रविश्य पयसि न्यपीडयद्दूषणं हि मुखरत्वमर्थिनाम् ॥१३॥**

### अन्वयः

कुञ्जरः षट्पदध्वनिभिः आकुलीकृतः (सन्) उदकं पातुं न ऐच्छत् । (किन्तु) पयसि प्रविश्य तान् न्यपीडयत् । हि प्रार्थिना मुखरत्वं दूषणम् ।

### व्याख्या

कुञ्जरो गज' षट्पदाना भ्रमराणा 'षट्पदभ्रमरालय.' इत्यमर । ध्वनिभिः शब्दैराकुलीकृत उद्विग्नस्सन् उदक जल पातु पान कर्तुं नैच्छत् न चकमे । किन्तु पयसि जले प्रविश्य तन्मध्ये गत्वा तान् भ्रमरान् न्यपीडयद् बाधितवान् । हि यतोऽर्थिना याचकाना मुखरत्व वाचालत्व दूषण दोषः । अत्राऽर्थान्तर-न्यासालङ्कार ।

### भाषा

विक्रमाङ्कदेव के हाथी ने भौरो की भनभनाहट से घबडा कर पानी पीने की इच्छा न की । किन्तु पानी मे गोता लगा कर उनको तग किया । क्योकि अधिक बड बड करना याचको का दोष है ।

अत्यजत् प्रतिगजं मतङ्गजः पार्श्वसङ्गतकरेणुलोभतः ।
यत्र तत्र भुजदण्डचण्डिमा चित्रमप्रतिहतो मनोभुवः ॥१४॥

### अन्वयः

मतङ्गजः पार्श्वसंगतकरेणुलोभतः प्रतिगजम् अत्यजत् । यत्र तत्र मनोभुवः भुजदण्डचण्डिमा अप्रतिहतः (इति) चित्रम् ।

### व्याख्या

मतङ्गजो नाग 'मतङ्गजो गजो नाग' इत्यमर । पार्श्वे समीपे सगता मिलिता करेणुर्हस्तिनी 'करेणुरिभ्या स्त्री नेभे' इत्यमर । तस्या लोभतः प्रलोभात् प्रतिगज प्रतिमल्लनागमत्यजत् विजहो । यत्र तत्र सर्वत्र मनसा भवतीति मनोभू कामस्तस्य मनोभुव कामस्य भुजदण्डस्य दोर्दण्डस्य चण्डिमा शौर्यमप्रतिहतो निर्बाधगतिरिति चित्रमाश्चर्यकरम् । कामशरताडितस्सर्वं परित्यज्य तद्वशे भवतीति भावः ।

### भाषा

हाथी ने पास ही मे विद्यमान एक हथिनी के लोभ से विपक्षी हस्ती को छोड दिया । क्या आश्चर्य की बात है कि कामदेव के भुजदण्ड के पराक्रम मे रोक टोक करने वाला कोई नही है । अर्थात् सभी जीव कामदेव के वशीभूत है ।

रुद्धवर्त्मसु गजेषु वाजिनः प्रापुरम्भसि निमज्जनं चिरात् ।
लब्धतीरतरुकण्टकैः पुनर्नेप्सितापि तटिनी क्रमेलकैः ॥१५॥

### अन्वयः

गजेषु रुद्धवर्त्मसु (सत्सु) वाजिन· अम्भसि चिरात् निमज्जनं प्रापुः । लब्धतीरतरुकण्टकैः क्रमेलकैः पुनः तटिनी ईप्सिता अपि न ।

### व्याख्या

गजेषु हस्तिषु रुद्ध प्रतिरुद्ध वर्त्म मार्गो यैस्ते रुद्धवर्त्मानस्तेषु रुद्धवर्त्मसु प्रतिबद्धमार्गेषु सत्सु 'अयन वर्त्म मार्गाध्वपन्थान पदवी सृति' इत्यमरः । वाजिनोऽश्वा 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमर । अम्भसि जले

चिरात् बहुकालमभिव्याप्य निमज्जन स्नान प्रापु प्राप्तवन्त । गजैर्मार्गे रुद्धे सति वाजिना निस्सरणमार्गाभावात् तेऽश्वाश्चिर स्नानावसरमवापुरिति भाव । लब्धानि प्राप्तानि तीरे नदीतटे तरूणा वृक्षाणा कण्टकानि यैस्तै. क्रमेलकैरुष्ट्रै पुनस्तटिनी नदीक्षिताऽपि न दृष्टाऽपि न । उष्ट्राणा कण्टकप्रियत्वादत्र स्नानार्थं तैर्ध्यानमपि न दत्तमिति भाव ।

## भाषा

हाथियो के समूह से बाहर निकलने का रास्ता रुक जाने से घोडो ने चिरकाल तक नदी मे स्नान किया । नदी के तट पर के वृक्षो के काँटे मिल जाने से ऊँटो ने नदी की ओर आँख उठा कर भी न ताका । अर्थात् सुन्दर जलाशय मिलने पर भी स्नान करने की अभिरुचि उनमे उत्पन्न न हुई ।

अस्मरद्द्विरददानवारिणा तस्य[1] वारिनिधिराविलीकृतः ।
हन्त संततमदस्य विभ्रमानभ्रमुप्रियतमस्य दन्तिनः ॥१६॥

## अन्वयः

तस्य द्विरददानवारिणा आविलीकृतः वारिनिधिः संततमदस्य अभ्रमुप्रियतमस्य दन्तिनः विभ्रमान् हन्त ! अस्मरत् ।

## व्याख्या

तस्य विक्रमाङ्कदेवस्य द्वौ रदौ दन्तौ येषा ते द्विरदा गजा ' दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप ' इत्यमर । तेषा दानवारि मदजल 'गण्ड कटो मदो दानम्' इत्यमर । तेन गजमदजलेनाऽऽविलीकृत कलुषीकृतो वारिनिधि समुद्र. सन्ततोऽविच्छिन्नो मदो यस्य तस्य निरन्तरनिस्सरन्मदजलस्याऽभ्रमुर्नामैरावतगजस्याङ्गना 'ऐरावतोभ्रमातङ्गैरावणाभ्रमुवल्लभा ' इत्यमर । तस्या प्रियतमोऽत्यन्तप्रिय पतिस्तस्य दन्तिन ऐरावतस्य विभ्रमान् विलासान् हन्तेति खेदेऽधुना तत्समीपे देवैरपहृतस्यैरावतस्याऽभावादस्मरत् सस्मार । अत्र सेनागजसम्बन्धेन तत्सदृशैरावतस्मरणात्स्मरणालङ्कार ।

[1] तेनेति पाठात्तस्येति पाठ साधुतर प्रतिभाति ।

### भाषा

विक्रमाङ्कदेव के हाथियो के मदजल से मटमैला समुद्र, मद को सतत चुवाने वाले अभ्रमु नाम की हथिनी के प्रिय पति ऐरावत नाम के इन्द्र के हाथी का स्मरण करने लगा। उच्चैःश्रवा नामक इन्द्र के घोडे के समान ऐरावत हाथी भी पहिले समुद्र मे ही था। बाद मे समुद्र मन्थन से उत्पन्न इन दोनो को इन्द्र ने अपना वाहन बनाया।

**स्नानसक्तपरिवारसुन्दरी-वृन्दमध्यमवधीरिताङ्कुशः।**
**यज्जगाम मदलङ्घितः करी भाग्यसम्पदुपरि स्थितस्य सा ॥१७॥**

### अन्वयः

मदलङ्घितः अवधीरिताङ्कुशः करी स्नानसक्तपरिवारसुन्दरीवृन्दमध्यं यत् जगाम सा उपरि स्थितस्य भाग्यसम्पत्।

### व्याख्या

मदेन लङ्घितोऽतिक्रान्तमर्यादो मदोन्मत्त इत्यर्थ । अवधीरित उपेक्षितोऽङ्कुश सृणिर्येन स उपेक्षिताङ्कुशनियन्त्रण गज स्नानेऽवगाहने सक्ता सलग्ना परिवारसुन्दर्योऽन्त पुराङ्गनास्तासा वृन्द समूहस्तस्य मध्य स्नानलग्नान्त.-पुराङ्गनासमूहमध्य यज्जगाम प्रविष्टवान् इति यत्, अत्र यच्छब्देन पादत्रयोक्तार्थस्य सग्रह । सा उपरि गजोपरि स्थितस्य विद्यमानस्य हस्तिपकस्येत्यर्थ । भाग्यसपत् भाग्यसम्पत्तिरासीत्। नारीसमूहमध्य गजे प्रविष्टे सति तासा भयजन्यविविधवस्त्रस्खलनादिविलासदर्शनस्य सौभाग्यात् हस्तिपकस्य कृते सा घटना भाग्यसपदेवेति भाव ।

### भाषा

मदोन्मत्त हाथी का, अकुश की कुछ भी परवाह न कर स्नान करने मे व्यस्त अन्त पुर की सुन्दरियो के समूह के बीच में अचानक चला जाना, पीलवान के लिये बडे भाग्य की घटना थी। अर्थात् हाथी के डर से अर्धनग्न या नग्न अन्त पुर की कामिनीयो के प्राण छुडा कर भागने के हाव भावो को देखने का अवसर पीलवान को प्राप्त होना, बडे भाग्य की बात है अन्यथा अन्त पुर की स्त्रियो को देखना भी उसके लिये असम्भव है।

तां विधाय कतिचिद्दिनानि स प्रेयसीघुसृणपङ्किलां नदीम् ।
चोलसम्मुखमगाहताहव[1]—प्राप्तिदुर्ललितबाहुराग्रहम् ॥१८॥

**अन्वयः**

आहवप्राप्तिदुर्ललितबाहुः सः कतिचित् दिनानि ता नदीं प्रेयसीघुसृण-पङ्किला विधाय चोलसम्मुखम् आग्रहम् अगाहत ।

**व्याख्या**

आहवाना युद्धाना 'अभ्यामर्दसमाघातसग्रामाभ्यागमाहवा' इत्यमर । प्राप्तौ लाभे दुर्ललितो दुश्चेष्टो बाहुर्भुजो यस्य स युद्धाप्राप्तिखिन्नभुज स विक्रमाङ्कदेव कतिचित् कियन्ति दिनानि दिवसास्ता नदी तुङ्गभद्रा प्रेयसीनामङ्गनानां घुसृणेन कुङ्कुमेन पङ्किलां कर्दमसपन्ना विधाय कृत्वा चोलसम्मुखं चोलराज्याभिमुख-माग्रहमाक्रमणमगाहत कृतवान् ।

**भाषा**

युद्ध की प्राप्ति के लिये अत्यन्त लालायित या युद्ध की प्राप्ति न होने से दुश्चेष्ट भुजा वाले विक्रमाङ्कदेव ने कुछ दिनो तक उस तुङ्गभद्रा नदी को अङ्गनाओ के अङ्ग मे विलिप्त केशर से मिश्रित करने के अनन्तर चोलदेश पर आक्रमण कर दिया ।

इतः परं पञ्चभिः श्लोकैर्वनवासमण्डलं वर्णयति कविः—

केलिकाननशकुन्तकूजितच्छाद्यमानगलकन्दलस्वनाः ।
प्राप्नुवन्ति न विदग्धतागुणं यत्र दर्शयितुमेणलोचनाः ॥१९॥

**अन्वयः**

यत्र केलिकाननशकुन्तकूजितच्छाद्यमानगलकन्दलस्वनाः एणनयनाः विदग्धतागुण दर्शयितु न प्राप्नुवन्ति ।

---

[1] चोलसम्मुखमगाहताहवाप्राप्तिदुर्ललितबाहुराग्रहम् । इतिपाठ साधुतर प्रतिभाति ।

### व्याख्या

यत्र वनवासमण्डले केले क्रीडाया कानन वन 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमर । तस्मिन् ये शकुन्ता पक्षिणस्तेषा कूजितैश्शब्दैश्च्छाद्य-मानोऽभिभूयमानो गलकन्दलस्य गलनलिकाया स्वनश्शब्दो यासा ता एणलोचना मृगनयना, पक्षिकलकलस्योत्कटतया मृगलोचनाशब्दोऽभिभूतो माधुर्यातिश-यादिति भाव । विदग्धताया वैदग्धस्य गुण समुत्कर्षं दर्शयितु प्रकाशयितु न प्राप्नुवन्ति न शक्नुवन्ति । पक्षिणा कलकलाधिक्यादङ्गनाना कोमलशब्दा दुःश्रवा इति भाव । पक्षिणामाधिक्यात्तत्रस्थफलसम्पत्तिर्ध्वनिता । अतिश-योक्त्यलङ्कार ।

### भाषा

बागो के पक्षियो के कूजित से दबे हुए गलो के शब्द वाली मृगनयनी स्त्रियाँ अपनी दक्षता के उत्कर्ष को प्रकट करने मे समर्थ न हो सकी । अर्थात् पक्षियो के जोर से होने वाले कलरव से उनकी कोमल व मधुर ध्वनि सुनाई नही पड सकती थी ।

**यत्र तिष्ठति विरोधमुद्वहन् दाहतः प्रभृति तेजसा सह ।**
**मेचकक्रमुककाननावली-मीलितोष्णकिरणार्चिषि स्मरः ॥२०॥**

### अन्वयः

मेचकक्रमुककाननावलीमीलितोष्णकिरणार्चिषि यत्र स्मरः दाहतः प्रभृति तेजसा सह विरोधम् उद्वहन् तिष्ठति ।

### व्याख्या

मेचकाना कृष्णवर्णाना क्रमुकाणा पूगवृक्षाणा काननानि वनानि तेषामावली पंक्तिस्तया मीलितान्यवरुद्धान्युष्णकिरणस्य सूर्यस्याऽर्चींषि मयूखा यस्मिन्तस्मिन् मेचकक्रमुककाननावलीमीलितोष्णकिरणार्चिषि यत्र वनवासमण्डले स्मर कामदेवो दाहतश्शिवतृतीयनेत्राग्निभस्मीकरणात्प्रभृति तेजसा येन केनाऽपि तेजस्सा-मान्येन सह विरोध विद्वेषमुद्वहन् धारयन् तिष्ठति निवास करोति । शिवने-त्राग्निविरोधेन तेजस्सामान्येन द्वेषात्सूर्यतेजसोऽप्यत्राऽनागमनादत्र वने स्मर स्थितिमवलम्बते इति भाव । स्मरे तेजसा विरोधरूपस्य धर्मस्योत्प्रेक्षणादुत्प्रेक्षा-लङ्कारो गम्यते, तेन च काननाना क्रीडायोग्यत्व ध्वन्यत इति वस्तुध्वनि ।

**भाषा**

श्यामवर्ण के सुपारी के वृक्षो के जगलो मे जहाँ सूर्य की किरणे भी भीतर प्रवेश नही कर सकती वहाँ (वनवास मण्डल मे) शिव के तीसरे नेत्र की आग से जलने के दिन से, तेज मात्र से द्वेष करने वाला कामदेव निवास करता है।

**[१]यत्र मारुतविधूतकेतक—व्रातधूलिधवलासु भूमिषु।**
**कामिनीशरणमाश्रिते स्मरे भर्गवह्निरिव भस्मसादभूत् ॥२१॥**

**अन्वयः**

स्मरे कामिनीशरणम् आश्रिते सति यत्र मारुतविधूतकेतकव्रातधूलिधवलासु भूमिषु भर्गवह्निः भस्मसात् अभूत् इव।

**व्याख्या**

कामिनीनामङ्गनाना शरण स्वरक्षार्थं रक्षितृत्वेनाऽऽश्रितेऽवलम्बिते सति यत्र वनवासमण्डले मारुतेन पवनेन विधूता कम्पिता केतकव्राता केतकसमूहास्तेषा धूलिभि परागैर्धवलासु शुभ्रासु भूमिषु भर्गवन्हि शिवस्य तृतीयनेत्रजन्यवन्हिर्भस्मसादभूदिव भस्मशेषोऽभूदिव। कामिनीशरणागते कामदेवे यत्र भर्गवन्हिर्वायुकम्पितकेतकसमूहपरागपतनमिषेण शुभ्रत्वात् भस्मावशेषोऽभूदिवेति भाव। अत्रोत्प्रेक्षालङ्कार।

**भाषा**

कामदेव के, अङ्गनाओ की शरण ले लेने से, वनवासमण्डल मे हवा के झोको से हिलाए हुए केवडो के फूलो की धूलि से सफेद भई हुई भूमिओ पर मानो शकर के तृतीय नेत्र की अग्नि, जल जाने पर राख होकर पडी थी।

**नारिकेलफलखण्डताण्डव—क्षुण्णतत्कुहरवारिवीचयः।**
**यत्र यान्ति मरुतः स्मराञ्चतां धूतपक्वकदलीसमृद्धयः ॥२२॥**

**अन्वयः**

यत्र धूतपक्वकदलीसमृद्धयः नारिकेलफलखण्डताण्डवक्षुण्णतत्कुहरवारिवीचयः मरुतः स्मराञ्चता यान्ति।

---

[१] दृशादग्ध मनसिज जीवयन्ति दृशैव या।
विरूपाक्षस्य जयिनीस्ता स्तुमो वामलोचना। इत्युक्ते।

**व्याख्या**

यत्र वनवासमण्डले धूता कम्पिता पक्वकदलीना परिणतावस्थापन्नरम्भाफलाना समृद्धय समूहा यैस्ते, नारिकेलफलाना खण्डास्समूहास्तेषा ताण्डवेनोद्धतनृत्येन, वृक्षात् सततपातनेन जलमध्ये प्रविश्यपुर्ननिस्सरणेनेत्यर्थ । क्षुण्णा सम्मर्दिता उत्पादिता इत्यर्थ । तस्य वनमण्डलस्य कुहरे मध्ये गर्ते वा वारिवीचयो जलतरङ्गा यैस्ते मरुतो वायव' स्मरस्य कामस्याऽस्त्रता बाणत्व कामोद्दीपनाय बाणस्यप्रहरणत्वमित्यर्थ । यान्ति व्रजन्ति । पक्वकदलीसुगन्धयुक्ता नारिकेलजनितशीकरशीतला वायव कामोद्दीपका भवन्तीति भाव । तत्र कदलीफलाना नारिकेलफलानाञ्चाऽऽधिक्य व्यज्यते ।

**भाषा**

जिस वनवास मण्डल मे पके हुए केलो के समूहो को झकझोरने वाले और नारियल के फल समूहो के लगातार गिराने से, नारियलो के भीतर डूबकर फिर ऊपर निकल आने से ओर छीटे उडाने मे उस वनवास मण्डल के जल पूरित गडहो मे जल की तरङ्गो को उत्पन्न करने वाले वायु कामदेव के अस्त्र का काम करते थे अर्थात कामोद्दीपक होते थे । अर्थात् जहाँ केले ओर नारियल के बहुत पेड थे, ऐसे बनवासमण्डल मे पके हुए केलो की सुगन्व से युक्त और गडहो मे नारियलो के गिरने से उडे हुए जल कणो से ठण्डे वायु कामोद्दीपक होते थे ।

**अध्युवास वनवासमण्डलं तद्दिनानि कतिचिन्नृपात्मजः ।**
**योषितामुपवनस्थलीभुवः कर्तुमद्भुतविलाससाक्षिणीः ॥२३॥**

**अन्वयः**

नृपात्मजः उपवनस्थलीभुवः योषिताम् अद्भुतविलाससाक्षिणीः कर्तुं कतिचित् दिनानि तत् वनवासमण्डलम् अध्युवास ।

**व्याख्या**

नृपस्य राज्ञ आहवल्लदेवस्याऽऽत्मज पुत्रो विक्रमाङ्कदेव उपवनस्योद्यानस्य स्थलीभुवोऽकृत्रिमभूमयस्ता उपवनस्थलीभुवो योषिता ललनानामद्भुतविलासानामाश्चर्यकारिविभ्रमाणा साक्षिण्योऽवलोकयित्र्यस्ता कर्तुं विधातु कतिचित् कियन्ति दिनानि दिवसानि तत् पूर्वोक्त वनवासमण्डल वनवास इति नामधेय प्रदेशमध्युवासाऽध्यतिष्ठत् । तत्र वनवासमण्डले स्त्रीणा वनसमीपाकृत्रिमभूमेर्निरतिशयानन्द प्रापयितु कतिचिद्दिनान्युवासेति भाव ।

**भाषा**

साथ की अङ्गनाओ को उस वनवास नामक स्थान के प्राकृतिक भूमियो के अद्भुत आनन्द को प्राप्त कराने के उद्देश्य से, राजपुत्र ने वहाँ कुछ दिन तक वास किया ।

**इति पञ्चभिः श्लोकैः कुलकम् ।**

**उच्चचाल पुरतः शनैरसौ लीलया मलयदेशभूभुजाम् ।**
**पूर्वदर्शितपराक्रमस्मृतिं सैन्यतूर्यनिनदैः प्रबोधयन् ॥२४॥**

**अन्वयः**

**असौ सैन्यतूर्यनिनदैः मलयदेशभूभुजां पूर्वदर्शितपराक्रमस्मृतिं प्रबोधयन् लीलया शनैः पुरतः उच्चचाल ।**

**व्याख्या**

**असौ विक्रमाङ्कदेव सैन्याना सैनिकाना तूर्याणि वाद्ययन्त्रविशेषास्तेषां निनदैश्शब्दै मलयदेशस्य मलयप्रान्तस्य भूभुजा राज्ञा पूर्वं दिग्विजयसमये दर्शितस्य प्रकटीकृतस्य पराक्रमस्य शौर्यस्य स्मृति स्मरण प्रबोधयञ्जागरयन् लीलया विलासेन शनैर्मन्द मन्द पुरतोऽग्रे उच्चचाल प्रस्थितोऽभूत् ।**

**भाषा**

मलयप्रान्त के राजाओ को सेना की तुरही के शब्दो से दिग्विजय के समय दिखाए हुए अपने शौर्य का स्मरण कराते हुए, विक्रमाङ्कदेव ने आराम से धीरे २ आगे प्रस्थान किया ।

**एनमेत्य [१]जयकेशिपार्थिवः प्रार्थितादधिकमर्पयन्धनम् ।**
**निश्चलामकृत हासचन्द्रिकां कोङ्कणप्रणयिनीमुखेन्दुषु ॥२५॥**

---

[१] अय जयकेशी कादम्बकुलसमुत्पन्नो जयकेशी-द्वितीय । गोपकपुरस्य (गोवा) शासक । अस्य राज्ञी मैलालदेवी पर्माडी विक्रमादित्यस्य पुत्री । जयकेशिन पुत्री मैणलदेवीमनहिलवाडस्य राजा कर्ण उपयेमे । तयोस्तनय प्रसिद्धो जयसिंहसिद्धराजो गुर्जरदेशाधिपति । इति डा० व्यूह्लरमतम् । पर तच्चिन्त्यम् । कविवर्णितोऽय जयकेशी प्रथम एव प्रतिभाति समयविचारात् ।

### अन्वयः

जयकेशीपार्थिवः एनम् एत्य प्राथितात् अधिक धनम् अर्पयन् (सन्) कोङ्कणप्रणयिनीमुखेन्दुषु हासचन्द्रिकां निश्चलाम् अकृत ।

### व्याख्या

जयकेशी नाम कोङ्कणदेशाधिपो गुर्जरदेशाधिपस्य जयसिंहसिद्धराजस्य मातामह एनं विक्रमाङ्कदेवमेत्य प्राप्य प्रार्थितादभिकाङ्क्षितादधिकं महत्तरं धनं वित्तमर्पयन्वितरन् सन् कोङ्कणदेशस्य प्रणयिन्यो ललनास्तासां मुखेन्दवो वदनचन्द्रास्तेषु हास एव चन्द्रिका कौमुदी 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । तां हास्यकौमुदीं निश्चलां स्थिरामकृत कृतवान् । धनप्रदानेनाऽऽक्रमणाभावात् कोङ्कणदेशीया नार्यश्चिराय सुप्रसन्ना कृता इति भावः । अत्र रूपकालङ्कारः ।

### भाषा

(गुर्जर देश के राजा जयसिंह सिद्धराज के मातामह), कोकण देश के राजा जयकेशी ने विक्रमाङ्कदेव के सन्मुख उपस्थित होकर, मांगे हुए से अधिक धन देकर, कोकण देश की नारियों के मुख रूपी चन्द्रमा की हास्य रूपी चांदनी को अचल कर दिया । अर्थात् वहाँ की स्त्रियाँ युद्ध न होने से चिरकाल के लिये प्रसन्न हो गईं ।

**आलुपेन्द्रमवदातविक्रमस्त्यक्तचापलमसाववर्धयत् ।**
**दीपयत्यविनयाग्रदूतिका कोपमप्रणतिरेव तादृशाम् ॥२६॥**

### अन्वयः

अवदातविक्रमः असौ त्यक्तचापलम् आलुपेन्द्रम् अवर्धयत् । अविनयाग्रदूतिका अप्रणतिः एव तादृशाम् कोपं दीपयति ।

### व्याख्या

अवदातो धवलो लोकोत्तरत्वेन विख्यात इत्यर्थः । विक्रमः पराक्रमो यस्य सः असाधारणपराक्रमोऽसौ विक्रमाङ्कदेवस्त्यक्तं दूरीकृतं चापलमौद्धत्यं येन तमविनयासम्पृक्तं विनीतमित्यर्थः । आलुपस्य देशविशेषस्येन्द्रं राजानमालुपदेशाधिपतिमवर्धयत्सम्यक् परिपालनेन समृद्धिमन्तमकरोत् । अविनयस्यौद्धत्यस्याऽग्रदूतिका परिचायिकाऽप्रणतिरेवाऽनतिरेव तादृशामवदातविक्रमाणां विक्रमाङ्कदेवसदृशानां कोपं क्रोधं दीपयति समुज्ज्वलयति । अत्राऽर्थान्तरन्यासालङ्कारः ।

### भाषा

लोकोत्तर पराक्रम शाली विक्रमाङ्कदेव ने विनीत आलुप प्रान्त के राजा का सरक्षण कर उसकी उन्नति की । औद्धत्य का सूचक शरणागत न होना ही विक्रमाङ्कदेव सदृश महानुभावो का क्रोध उत्पन्न करता है ।

**व्यापृतैरविरतं शिलीमुखैः केरलक्षितिपवामचक्षुषाम् ।**
**पूर्वकल्पितमसावदर्शयद् गण्डपालिषु निवासमश्रुणः ॥२७॥**

### अन्वयः

असौ अविरत व्यापृतैः शिलीमुखैः पूर्वकल्पित केरलक्षितिपवामचक्षुषा गण्डपालिषु अश्रुणः निवासम् अदर्शयत् ।

### व्याख्या

असौ विक्रमाङ्कदेवोऽविरत निरन्तर 'सततेऽनारता श्रान्तसन्तताविरतानिशम्' इत्यमर । व्यापृतैस्सचालितै शिली शल्य मुखे येषा ते शिलीमुखा बाणास्तै पूर्व दिग्विजयकाल एव कल्पित विहित केरलदेशस्य ट्रावकोरप्रान्तस्य क्षितिपो नृपस्तस्य वामचक्षुषा वामलोचनाना 'कामिनी वामलोचना' इत्यमर । गण्डपालिषु कपोलस्थलेषु अश्रुणो बाष्पस्य निवास स्थितिमदर्शयत्प्रकटयाञ्चकार । विक्रमाङ्कदेववैभव दृष्ट्वा स्मृतपूर्ववृत्तान्ता केरलदेशमहिष्य बाष्पाम्बूनि मुञ्चन्त्यो भृशमदूयन्तेति भाव । अत्र भूतार्थस्य प्रत्यक्षायमाणत्वोक्त्या भाविक नामालङ्कार । "अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यत । यत्प्रत्यक्षायमाणत्व तद्भाविकमुदाहृतम्" इति लक्षणात् ।

### भाषा

दिग्विजय के समय मे विक्रमाङ्कदेव के लगातार चलाए हुए बाणो से केरलदेश की रानियो के गालो पर पडे हुए पहिले आसुओ को विक्रमाङ्क देव ने दिखाया । अर्थात् विक्रमाङ्कदेव के वैभव को देखकर, पूर्व वृत्तान्त का स्मरण होकर वे रानिया आँसू गिराने लगी और अत्यन्त दु खित हुईं ।

**तं विभाव्य रभसादुपागतं क्ष्माभुजङ्गमुपजातसाध्वसा ।**
**लोलवारिनिधिनीलकुण्डला द्राविडक्षितिपभूरकम्पत ॥२८॥**

**अन्वयः**

लोलवारिनिधिनीलकुण्डला द्राविडक्षितिपभूः रभसात् उपागतं तं क्ष्माभुजङ्गं विभाव्य उपजातसाध्वसा (सती) अकम्पत।

**व्याख्या**

लोलौ चञ्चलौ वारिनिधी पूर्वपश्चिमसमुद्रावेव नीले श्यामवर्णे कुण्डले कर्णभूषणे यस्या सा, द्राविडदेशस्य पूर्वपश्चिमसमुद्रद्वयमध्ये विद्यमानत्वात्। लोलवारिनिधिनीलकुण्डला चञ्चलनीलसमुद्रद्वयरूपयुग्मनीलकर्णावतंसा द्रविडानामयमिति द्राविडः स चाऽसौ क्षितिपो भूपस्तस्य भूर्भूमिर्द्रविडाधिपभूमी रभसाद्वेगादुपागतं समागतं तं प्रसिद्धं पूर्वज्ञातं वा क्ष्मायाः पृथिव्याः द्रविडदेशभूमेर्वा भुजङ्गं पतिं विटं वा 'भुजङ्गो विटसर्पयो' इत्यमरः। विभाव्य समालोच्योपजातं समुत्पन्नं साध्वसं भयं, समुत्पन्ना लज्जा वा 'साध्वसं भयलज्जयो' इत्यमरः। यस्याः सा उपजातसाध्वसा भीता सती, लज्जायुक्ता सती वाऽकम्पत कम्पमाप। एकत्र भयेनाऽन्यत्र सात्विकभावेन। यथा रभसादागतं पूर्वपरिचितं कामुकं वीक्ष्य लज्जायुता कामिनी सात्विकभावेन कम्पते तथैव द्राविडराजभूमी रभसादागतं पूर्वज्ञातं विक्रमाङ्कदेवं निरीक्ष्य भयेन कम्पते स्मेति भावः। अत्र समासोक्त्यलङ्कारः श्लेषानुप्राणितः।

**भाषा**

चंचल नीले रंग के पूर्वपश्चिम समुद्र रूपी नीले कुण्डलों को धारण करने वाली द्राविड राजा की भूमी रूपी कामिनी वेग से आए हुए पृथ्वी के राजा या कामुक विक्रमादित्य को देख कर भय से या लज्जा से कांपने लगी। अर्थात् जिस प्रकार नीलम के बने कुण्डलों को धारण करने वाली कामिनी पूर्व परिचित कामुक को वेग से आए हुए देखकर लज्जा से सात्विक भाव उत्पन्न होने के कारण रोमाञ्चित हो, कांपने लगती है उसी प्रकार नीले पूर्वपश्चिम समुद्ररूपी नीले (नीलम के) कुण्डलों को धारण करने वाली द्राविड राजा की भूमि वेग से आए हुए पूर्व परिचित विक्रमाङ्क देव को देख कर भय से कांपने लगी।

**तस्य सज्जधनुषः प्रतिक्रिया-शून्यपौरुषविशेषशालिनः।**
**द्राविडेन्द्रपुरुषस्ततः सभामाजगाम नयमार्गकोविदः ॥२९॥**

**अन्वयः**

ततः नयमार्गकोविदः द्राविडेन्द्रपुरुषः प्रतिक्रियाशून्यपौरुषविशेषशालिनः सज्जधनुषः तस्य सभाम् आजगाम।

**व्याख्या**

ततो राजकुमारस्य द्राविडराजभूमिसन्मुखागमनानन्तर नयस्य राजनीतेर्मार्गः पन्थास्तस्य कोविदो ज्ञाता नीतिज्ञ इत्यर्थ । द्राविडेन्द्रस्य द्रविडदेशनृपस्य चोलदेशाधिपवीरराजेन्द्रस्य पुरुषो दूतस्सन्देशहारक इत्यर्थ । प्रतिक्रिया प्रतीकारस्तया शून्य रहित पौरुष पराक्रमस्तस्य विशेषोऽतिशयस्तेन शालते शोभते तस्याऽजेयपराक्रमातिशयजुष सज्ज शरप्रक्षेपणाय पूर्णतयोद्युक्त धनु कोदण्ड यस्य स तस्य सज्जधनुषस्तस्य विक्रमाङ्कदेवस्य सभा ससदमाजगाम प्रविवेश ।

**भाषा**

बाद मे नीतिशास्त्रपारङ्गत द्रविडदेश के राजा का दूत अजेय पौरुषविशेष से शोभित तथा युद्ध के लिये सदैव धनुष को तयार रखने वाले विक्रमाङ्कदेव की सभा मे आया ।

**मौलिचुम्बितवसुन्धरातलः कुन्तलेन्द्रतनयं प्रणम्य सः ।**
**व्याजहार दशनांशुपल्लव-न्यस्तकोमलपदां सरस्वतीम् ॥३०॥**

**अन्वयः**

मौलिचुम्बितवसुन्धरातलः सः कुन्तलेन्द्रतनयं प्रणम्य दशनांशुपल्लवन्यस्तकोमलपदां सरस्वतीं व्याजहार ।

**व्याख्या**

मौलिना शिरसा चुम्बित समालिङ्गित वसुन्धरातल पृथिवीतल येन स दूतः कुन्तलेन्द्रस्याऽऽहवमल्लदेवस्य तनय पुत्र विक्रमाङ्कदेव प्रणम्य नमस्कृत्य दशनाना दन्तानामशव किरणा एव पल्लवा किसलयानि 'पल्लवोऽस्त्री किसलयम्' इत्यमर । तेषु न्यस्ते निक्षिप्ते कोमले सुकुमारौ पदे चरणौ यया सा ता सरस्वती वाग्देवता पक्षे दशनाशव पल्लवा इव कान्तिमत्त्वात्तैस्सह न्यस्तानि प्रतिपादितानि कोमलानि मधुराणि पदानि शब्दा यस्या ता सरस्वती वाच व्याजहार उवाच । मधुरपदविन्यास यथास्यात्तथोवाचेति भाव ।

### भाषा

उस दूत ने पृथ्वी पर मस्तक टेक के कुन्तलदेश के राजा आहवमल्लदेव के पुत्र विक्रमाङ्कदेव को प्रणाम कर दाँतो के किरण रूपी कोमल पत्तो पर अपने कोमल चरणो को रखने वाली सरस्वती को प्रकट किया या स्मित पूर्वक कोमल पत्तो के सदृश कोमल अर्थात् मधुर वाक्यो को कहा ।

**कश्चुलुक्यनृपवंशमण्डन त्वद्गुणान्गणयितुं प्रगल्भते ।**
**धाम पङ्करुहिणीविलासिनः कस्य सङ्कलयितुं विदग्धता ॥२१॥**

### अन्वयः

हे चुलुक्यनृपवशमण्डन कः त्वद्गुणान् गणयितु प्रगल्भते । पङ्करुहिणीविलासिनः धाम सङ्कलयितु कस्य प्रगल्भता ।

### व्याख्या

चुलुक्यनृपवशस्य चालुक्यराजकुलस्य मण्डन भूषण तत्सम्बुद्धौ, हे चुलुक्यनृपवशमण्डन ! हे विक्रमाङ्कदेव ! क पुरुषस्तव गुणास्त्वद्गुणास्तान् दयादाक्षिण्यादीन् गणयितु सख्यातु प्रगल्भते क्षमते । न कोऽपीत्यर्थ । पङ्करुहिणीना कमलिनीना विलासी सुखदायकस्सूर्यस्तस्य धाम तेज किरणानित्यर्थ । सकलयितुं गणयितु कस्य जनस्य विदग्धता पाण्डित्य सामर्थ्यमित्यर्थ । न कस्यापीतिभाव । प्रतिवस्तूपमाऽलङ्कार । "प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययो । एकोऽपि धर्म सामान्यो यत्र निर्दिश्यते पृथक्" इति लक्षणात् ।

### भाषा

हे चालुक्यराजकुल के भूषण ! विक्रमाङ्कदेव ! तुम्हारे दयादाक्षिण्यादि गुणो की गणना करने मे कौन समर्थ हो सकता है अर्थात् कोई भी समर्थ नही हो सकता । कमलिनी को सुख देने वाले सूर्य की किरणो को गिनने की पण्डिताई या सामर्थ्य किसमे है अर्थात् किसी मे नही है ।

**वर्णयामि विमलत्वमम्भसः किं त्वदीयकरवालवर्तिनः ।**
**एति यत्प्रभवमैन्दवीं द्युतिं विश्वशुक्तिपुटमौक्तिकं यशः ॥२२॥**

**अन्वयः**

त्वदीयकरवालवर्तिनः अम्भसः विमलत्व कि वर्णयामि । यत्प्रभवं विश्वशुक्तिपुटमौक्तिकं यशः ऐन्दवीं द्युतिम् एति ।

**व्याख्या**

त्वदीये त्वत्सम्बन्धिनि करवाले खड्गे वर्तत इति त्वदीयकरवालवर्ती तस्य भवदीयखड्गे स्फुटतया प्रतीयमानस्याऽम्भसो जलस्य विमलत्व विशदत्व धावल्यमित्यर्थ । किं वर्णयामि केन प्रकारेण निरूपयामि । यस्मादम्भस प्रभव उत्पत्तिर्यस्य तत् यत्प्रभव यदुत्पन्न, विश्व सम्पूर्णब्रह्माण्डमेव शुक्तिपुट तस्य मौक्तिकमेव यश कीर्तिरिन्दोरियमित्यैन्दवी तामिन्दुसम्बन्धिनी द्युति कान्तिमेति प्राप्नोति । त्वत्करवालप्रभावेण विश्वस्मिस्ते चन्द्रवच्छुभ्र यश प्रसृतमिति भाव । शुभ्रत्वाद्यशसि मौक्तिकाभेदारोपाद्रूपकम् । अस्मिन्विश्वस्मिन् शुक्तिपुटत्वारोप कारणमत परम्परितरूपकम् । 'नियतारोपणोपायस्स्यादारोपः परस्य य । तत्परम्परितमिति' लक्षणात् ।

**भाषा**

आपकी तलवार के (धार के) पानी की स्वच्छता का क्या वर्णन करे। जिससे उत्पन्न विश्वरूपी सीप का मौक्तिक रूपी यश चन्द्रमा की कान्ति को प्राप्त करता है अर्थात् आपकी तलवार से उत्पन्न चन्द्रमा के समान शुभ्र यश सम्पूर्ण विश्व मे फैल गया है ।

**खड्गवारि भवतः किमुच्यते लोलशैवलमिवारिकुन्तलैः ।**
**यत्र राजति निवेशितं त्वया राजहंसनिवहोपमं यशः ॥३३॥**

**अन्वयः**

अरिकुन्तलैः लोलशैवलम् इव भवतः खड्गवारि किम् उच्यते । यत्र त्वया निवेशित राजहसनिवहोपम यशः राजति ।

**व्याख्या**

अरीणा शत्रूणा कुन्तलै केशै (हेतुभि) लोलश्चञ्चलश्शैवलश्शेवालं 'जलनीली तु शेवाल शैवल' इत्यमर । यस्मिस्तल्लोलशैवल प्रकम्पमान-शेवालमिव भवतस्तव विक्रमाङ्कदेवस्य खड्गवारि कृपाणधाराजल किमुच्यते

जनैस्सर्वथैवाऽवर्णनीयमेवेत्यर्थ । यत्र कृपाणधाराजले त्वया भवता निवेशित प्रतिष्ठापित राजहसाना मरालाना निवहस्समूह उपमोपमान यस्य तन्मरालसमूह-सदृश शुभ्र यश कीर्तो राजति शोभते । उपमालङ्कार ।

### भाषा

शत्रुओ के केशो के लगे होने के कारण, चञ्चल सेवार से युक्त तलवार के पानी का कैसे वर्णन किया जाए। जहाँ तुम्हारे द्वारा स्थापित राजहस के समूह के समान श्वेत यश शोभित होता है। अर्थात् तुमने शत्रुओ को काटकर अपना श्वेत यश स्थापित किया।

**त्वद्भुजप्रणयिचापनिस्वनः कैरसौ समरसीम्नि सह्यते।**
**व्यक्तिमेति रिपुमन्दिरेषु यः क्रन्दितध्वनिभिरेणचक्षुषाम् ॥३४॥**

### अन्वयः

**असौ त्वद्भुजप्रणयिचापनिस्वनः समरसीम्नि कैः सह्यते। यः रिपु-मन्दिरेषु एणचक्षुषा क्रन्दितध्वनिभिः व्यक्तिम् एति।**

### व्याख्या

असौ प्रसिद्धस्तव भुजो बाहु 'भुजबाहू प्रवेष्टो दो.' इत्यमर । त्वद्भुज-स्तस्य प्रणयी दृढसम्बद्धो यश्चापो धनुस्तस्य निस्वन शब्द. समरसीम्नि युद्धभूमौ कैर्जनै सह्यते सोढु शक्यते । यो निस्वनो रिपूणा शत्रूणा मन्दिरेषु गृहेष्वेणस्य मृगस्य 'गोकर्णपृषतेणर्श्यरोहिताश्चमरो मृगा' इत्यमर । चक्षुरिव लोचनमिव चक्षुर्यासा तास्तासा मृगलोचनाना क्रन्दितानि रुदितानि 'क्रन्दित रुदित क्रुष्टम्' इत्यमर । एव ध्वनयश्शब्दास्तैर्व्यक्ति प्रकाश प्रकटतामित्यर्थ । एति प्राप्नोति। समरे यदीयचापनिर्गतबाणैर्मृतान् भर्तृन् श्रुत्वा राजपत्न्य स्वभवनेषु रुदन्तीति भाव । अत्र चापनिस्वन-तत्प्रतिध्वन्योर्वैय्यधिकरण्येन वर्णनादसङ्गतिरलङ्कार.।

### भाषा

तुम्हारी भुजा से घनिष्ठता रखने वाले इस धनुष की टङ्कार को युद्ध-भूमि मे कौन सहन कर सकते है। जिसका साक्षात्कार शत्रुओ के घरो मे मृग-नयनियो की रोने की ध्वनि से होता है। अर्थात् तुम्हारे धनुष का टङ्कार होते ही शत्रु मरता है और उसके घर की नारियाँ रोने लगती है।

निर्मदत्वमुपयान्ति हन्त ते ज्यारवैः करटिनो दिशामपि ।
कश्मलैः परिहृता इवालिभिर्यद्भजन्ति ककुभः प्रसन्नताम् ॥३५॥

अन्वयः

ते ज्यारवैः दिशा करटिनः अपि हन्त निर्मदत्वम् उपयान्ति । यत् अलिभिः इव कश्मलैः परिहृताः ककुभः प्रसन्नता भजन्ति ।

व्याख्या

ते तव विक्रमाङ्कदेवस्य ज्याया मौर्व्या रवा स्वनास्तैर्ज्यारवै शिञ्जिनी-निर्घोषै 'मौर्वी ज्या शिञ्जिनी गुण' इत्यमर । दिशा ककुभा करटिनो गजा अपि दिग्गजा अपीत्यर्थ । हन्तेति हर्षे, 'हन्त दानेऽनुकम्पाया वाक्यारम्भविषादयो । निश्चये च प्रमोदे च' इत्यमर । निर्मदत्व भयेन मदराहित्यमुपयान्ति प्राप्नुवन्ति । ते ज्यारव श्रुत्वा दिग्गजा स्वाहकार परिहृत्य भीतास्सन्तो मदरहिता भवन्तीति भाव । यद्यस्मात्कारणादलिभिरिव भ्रमरैरिव कश्मलैर्मोहैः 'मूर्छा तु कश्मल मोहोऽप्यवमर्दस्तु पीडनम्' इत्यमर । कुनृपकृतदुष्कर्मभि-रित्यर्थ । परिहृता रहिता ककुभो दिश प्रसन्नता नैर्मल्य भजन्ति समाश्रयन्ति । कश्मलस्याऽलिभिस्साम्यादुपमा ।

भाषा

यह कहते हर्ष होता है कि आप की प्रत्यञ्चा के शब्द को सुन कर दिग्गज भी भय से मद रहित हो जाते है । मद जल के न बहने से भ्रमरो के न आने के कारण, भ्रमर रूपी दुष्ट राजाओ के कुकृत्य स्वरूप कालिमा के दूर हो जाने से दिशाएँ प्रसन्न हो जाती है ।

त्वादृशेन विजिगीषुणा विना क्षत्रमक्षममसाध्यसाधने ।
प्लावनाय जगतः प्रगल्भते नो युगान्तसमयं विनाम्बुधिः ॥३६॥

अन्वयः

क्षत्रं, त्वादृशेन विजिगीषुणा विना असाध्यसाधने अक्षमम् । अम्बुधिः युगान्तसमय विना जगतः प्लावनाय नो प्रगल्भते ।

## व्याख्या

क्षतात् त्रायत इति क्षत्र क्षत्रियजाति क्षात्रधर्मो वा त्वादृशेन भवादृशेन विजिगीषुणा विजयैषिणा विनाऽसाध्याना कर्तुमशक्याना कार्याणा साधने सम्पादनेऽक्षम सामर्थ्यहीनम्। अम्बुधिस्समुद्रो युगान्तसमय विना प्रलयकालागमन विना जगतो भुवनस्य 'विष्टप भुवन जगत्' इत्यमर। प्लावनाय निमज्जनाय नो प्रगल्भते न प्रभु। अत्र प्रतिवस्तूपमालङ्कार। 'सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिरिति' लक्षणात्।

## भाषा

क्षत्रिय जाति, तुम्हारे ऐसे विजय की इच्छा रखने वाले के विना असाध्य कार्य की सिद्धि करने मे समर्थ नही हो सकती। समुद्र प्रलय काल के बिना जगत् को पानी के अन्दर डुबाने मे समर्थ नही होता।

**अग्रजे तृणवदर्पितं निजं राज्यमूर्जितगुणेन यत्त्वया।**
**वज्रलेपघटितेव तेन ते निश्चला जगति कीर्तिचन्द्रिका ॥३७॥**

## अन्वयः

यत् ऊर्जितगुणेन त्वया निज राज्यं तृणवत् अग्रजे अर्पितम्। तेन ते कीर्तिचन्द्रिका जगति वज्रलेपघटिता इव निश्चला (जाता।)

## व्याख्या

यद्यस्मात्कारणादूर्जिता श्रेष्ठा गुणा दयादाक्षिण्यादयो यस्य स तेन प्रशस्यगुणेन त्वया निज स्वकीय राज्यमग्रजे ज्येष्ठभ्रातरि सोमदेवे तृणवत्तृणेन तुल्य लोभरहितमित्यर्थ। अर्पित निवेदित तेन कारणेन ते तव कीर्तिरेव चन्द्रिका कीर्तिज्योत्स्ना वज्रलेपेन कुलिशलेपेन चिरकालस्थायिना लेपद्रव्येण निश्चलाऽचला स्थिरेत्यर्थ। जाता।

## भाषा

चूँकि श्रेष्ठ गुणो से युक्त तुमने अपना राज पाट तृणवत् समझ कर अपने बडे भाई सोमदेव को दे दिया इससे तुम्हारी कीर्ति रूपी चादनी वज्रलेप के समान अचल हो गई।

**किं करोषि निजयाथवा भुवा त्वं समस्तवसुधातलेश्वरः ।**
**केसरी[१] वसति यत्र भूधरे तत्र याति मृगराजतामसौ ॥३८॥**

**अन्वयः**

अथवा समस्तवसुधातलेश्वरः त्वं निजया भुवा कि करोषि । यत्र भूधरे केसरी वसति तत्र असौ मृगराजता याति ।

**व्याख्या**

अथवेति पक्षान्तरे । समस्तस्य समग्रस्य वसुधातलस्य भूतलस्येश्वर प्रभुस्त्व निजया स्वकीयया भुवा पृथिव्या राज्येनेत्यर्थ । कि करोषि किम्प्रयोजन धारयसि । न किमपीत्यर्थ । यत्र यस्मिन्भूधरे पर्वते केसरी सिंहो 'सिंहो मृगेन्द्र पञ्चास्यो हर्यक्ष केसरी हरि' इत्यमर । वसति गच्छति तत्र तस्मिन् स्थानेऽसौ सिंहो मृगराजता मृगराजपदवीं याति प्राप्नोति ।

**भाषा**

अथवा सम्पूर्ण पृथ्वी के स्वामी, तुमको अपनी पृथ्वी की अर्थात् राज्य की क्या परवाह है । शेर जिस पर्वत पर जा बैठता है वही वह मृगराजपद को प्राप्त कर लेता है ।

**याति पुण्यफलपात्रतामसौ यां भुवं निवससे महाभट ।**
**सा कुपार्थिवकदर्थनोज्झिता त्वां पतिं हि लभते गुणोज्ज्वलम् ॥३९॥**

**अन्वयः**

हे महाभट ! (त्व) यां भुवं निवससे असौ पुण्यफलपात्रतां याति हि, सा कुपार्थिवकदर्थनोज्झिता (या) गुणोज्ज्वल त्वा पति लभते ।

**व्याख्या**

हे महाभट ! हे महावीर ! त्व या भुव पृथिवी निवससे स्थिति करोषि, असौ भू पुण्यस्य सुकृतस्य फलाना सुखैश्वर्यसमृद्धीना पात्रता भाजनत्व याति हि निश्चयेन प्राप्नोति । सा भूमि. कुपार्थिवस्य कुत्सितनृपस्य

---

[१] 'य देश श्रयते तमेव कुरुते बाहुप्रतापार्जितम्' इति कालिदास ।

कदर्थनेन पीडनेनोज्झिता परित्यक्ता भवति या पृथिवी गुणैर्दयादाक्षिण्यशौर्यादिगुणैरुज्ज्वल प्रशस्य त्वा भवन्त पति स्वामिन लभते प्राप्नोति ।

**भाषा**

हे महावीर ! आप जिस पृथ्वी पर अर्थात् जहाँ रहोगे वह भूमि पुण्य के सुख ऐश्वर्य समृद्धि आदि फलो को अवश्य प्राप्त करेगी । वह भूमि दुष्टराजाओ की पीडा से मुक्त हो जाएगी जो दया दाक्षिण्य शौर्य आदि गुणो से देदीप्यमान आपको अपना स्वामी पाएगी । अर्थात् आप जहाँ रहोगे वह भूमि अवश्य समृद्धिशाली हो जाएगी और उसको कभी भी दुष्ट राजा लोग पीडित न कर सकेंगे ।

**त्वद्भिया गिरिगुहाश्रये[१] स्थिताः साहसाङ्क गलितत्रपा नृपाः ।**
**ज्यारवप्रतिरवेण तानपि त्वद्धनुः समरसीम्नि बाधते ॥४०॥**

**अन्वयः**

**हे साहसाङ्क ! (ये) नृपाः गलितत्रपाः (सन्तः) त्वद्भिया गिरिगुहाश्रये स्थिताः तान् अपि त्वद्धनु समरसीम्नि ज्यारवप्रतिरवेण बाधते ।**

**व्याख्या**

हे साहसाङ्क ! साहस विक्रम एवाऽङ्को विजयलक्षण 'कलङ्काङ्कौ लाञ्छनञ्च चिन्ह लक्ष्म च लक्षणम्' इत्यमर । यस्य स तत्सम्बोधने हे साहसाङ्क हे विक्रमाङ्कदेव ! ये नृपा भूपा गलिता विनिर्गता त्रपा लज्जा येषा ते विगतलज्जास्सन्तस्त्वत्तो भीस्तया भवद्भयेन गिरीणा पर्वताना गुहा कन्दरा एवाऽऽश्रय रक्षास्थान तस्मिन् स्थितास्तानपि तव धनुश्चाप समरसीम्नि समराङ्गणे ज्याया मौर्व्या रवस्य शब्दस्य प्रतिरव प्रतिध्वनिस्तेन बाधते पीडयति । पर्वतकन्दरास्वपि विक्रमाङ्कदेवस्याऽऽगमनभयादिति भाव ।

**भाषा**

हे विक्रमाङ्कदेव ! जो राजा लोग लज्जा को छोड तुम्हारे डर से पर्वतो की कन्दराओ मे छिप कर बैठ जाते है उनको भी तुम्हारा धनुप समर भूमि मे प्रत्यञ्चा की टङ्कार की प्रतिध्वनि से पीडित करता है ।

---

१ 'गिरिगुहासु ये' इत्यपि पाठान्तरम् ।

**उत्प्रतापदहनं मुखं वहन्नाहवे त्वदसिरिन्द्रजालिकः ।**
**दिव्यमस्तकसमागमं द्विषां लूनमर्त्यशिरसां करोति यत् ॥४१॥**

### अन्वय

आहवे त्वदसिः उत्प्रतापदहन मुख वहन् इन्द्रजालिकः (भवति) यत् लूनमर्त्यशिरसा द्विषा दिव्यमस्तकसमागमं करोति ।

### व्याख्या

आहवे युद्धे तव असिस्त्वदसिर्भवदीयखड्ग उद्गत ऊर्ध्वं प्रसारित प्रताप एव दहनोऽग्निर्यस्मात्तदुत्प्रतापदहन मुखमाननमग्रभागञ्च वहन् धारयन्निन्द्रजालिक इन्द्रजालविद्याप्रवीणो मायावी भवति। यद्यस्मात्कारणात् स लून छिन्न मर्त्यं मरणशील विनाशीत्यर्थ । शिरो येषा ते लूनमर्त्यशिरसस्तेषा छिन्नविनाशिमस्तकाना दिव्याना स्वर्गीयाणा मस्तकाना शिरसा सगागम प्रापण करोति । यथा कश्चिदिन्द्रजालिको मुखादग्निनिस्सरण प्रदर्शयन् चमत्कारयुक्तानि कार्याणि करोति तथैव तव खड्ग ऊर्ध्वप्रसारितप्रतापरूपदहनयुक्त मुख धारयन् लूनशिरसां शत्रूणा रणे मरणात्तेषा स्वर्गप्राप्तिर्निश्चितेति हेतोस्तेषा नूतनदिव्यमस्तकान् सदधाति । अत्रोत्तरार्धगतवाक्यार्थस्येन्द्रजालिकत्वे हेतुतया कथनात्काव्यलिङ्गमलङ्कार ।

### भाषा

युद्ध मे, ऊपर उठने वाले तेज रूपी अग्नि से युक्त मुख या नोक वाली तुम्हारी तलवार, इन्द्र जालिक हो जाती है । क्यो कि कटे हुए मानवी मस्तक वाले शत्रुओ को वह दिव्य मस्तको से युक्त कर देती है । अर्थात् युद्ध मे जो वीर मरते है वे स्वर्ग मे जाते है यह प्रसिद्धि है । इसलिये तुम्हारी तलवार इन्द्रजालिक के समान सिर कटे शत्रुओ को काल्पनिक दिव्य मस्तको से युक्त कर स्वर्ग मे भेज देती है ।

**भाग्यभूमिमपि भारतादिषु त्वादृशं न शृणुमः प्रतापिनम् ।**
**दर्शनेन विजयश्रियं रणेष्वन्यसङ्गविमुखीं करोति यः ॥४२॥**

### अन्वयः

भारतादिषु अपि त्वादृशं भाग्यभूमि प्रतापिन न शृणुमः । यः रणेषु दर्शनेन विजयश्रियम् अन्यसङ्गविमुखी करोति ।

### व्याख्या

भारतादिष्वपि महाभारतप्रभृतिप्राचीनेतिहासग्रन्थेष्वपि भारतादिदेशेष्वपि वा त्वादृश भवादृश भाग्यस्य भागधेयस्य 'दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधि' इत्यमर । भूमिमाश्रय भाग्यवन्त प्रतापिन प्रभाववन्त न श्रृणुमो नाऽऽकर्णयाम । यो रणेषु युद्धेषु दर्शनेन स्व-स्वरूपप्रकाशनेनैव विजयश्रिय जयलक्ष्मीमन्येषा राज्ञा सङ्गात्सम्बन्धाद्विमुखी पराङमुखीं करोति । युद्धेषु तव दर्शनेनैन शत्रवो भयभीता भवन्ति तस्मात्तेषा राज्यश्रीरनुपमरूपलावण्ययुक्त कामुक कामिनीव तॉस्त्यक्त्वा त्वत्समीपे समायातीति भाव । समासोक्तिरलङ्कार ।

### भाषा

महाभारत आदि प्राचीन ऐतिहासिक ग्रन्थो मे या भारत आदि देशो मे तुम्हारे ऐसा भाग्यशाली प्रतापी कोई भी सुनने मे नही आता। युद्धो मे जिसके दर्शनमात्र से शत्रुओ की राजश्री शत्रुभूत राजाओ के पास रहना ही नही चाहती। अर्थात् युद्धो मे तुम्हारे दर्शन मात्र से विपक्षी राजा भयभीत हो जाते है अत एव उनकी राजश्री, अति सुन्दर कामुक के दर्शन मात्र से, कामिनी के समान, उनको छोड कर तुम्हारे पास चली आती है।

**किं किरीटमणयः क्षमाभुजां लोहकर्षकदृषत्सहोदराः ।**
**आनयन्ति यदुपान्तवर्त्मनि त्वत्कृपाणमतिदूरवर्तिनम् ॥४३॥**

### अन्वयः

क्षमाभुजां किरीटमणयः लोहकर्षकदृषत्सहोदराः किम्? यत् अतिदूरवर्तिन त्वत्कृपाणम् उपान्तवर्त्मनि आनयन्ति ।

### व्याख्या

क्षमा पृथ्वीं भुञ्जन्ति स्वोपभोगे समानयन्ति ते क्षमाभुजो विपक्षभूमिपतयस्तेषा किरीटेषु मुकुटेषु मणयो रत्नानि 'मण्डन चाथ मुकुट किरीट पुनपुसकम्' इत्यमर । लोहस्य लौहस्य कर्षिका दृषदश्चुम्बकशिलास्तासा सहोदरास्सदृशा किम्? यद्यस्मात्कारणादतिदूरे वर्तत इत्यतिदूरवर्ती त विप्रकृष्टदेशस्थ त्वत्कृपाण त्वत्खड्गमुपान्तवर्त्मनि समीपप्रदेशे आनयन्ति समाकर्षन्ति । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

विपक्षी राजाओ के मुकुटो के मणी क्या लोहे को आकर्षण करने वाले चुम्बक पत्थर के समान है ? क्योकि बहुत दूर देश मे रहने वाले तुम्हारे लोहे के खड्ग को वे अपनी ओर आकर्षित कर लेते है।

**चोलभूमिपतिरुज्ज्वलैर्गुणैः किं नु वक्ति भवतानुरञ्जितः।**
**पश्यतस्तृणसमां तव श्रियं श्रीप्रदानकथनेन लज्जते ॥४४॥**

### अन्वयः

**भवता उज्ज्वलैः गुणैः अनुरञ्जितः चोलभूमिपतिः किं नु वक्ति। श्रियं तृणसमा पश्यतः तव श्रीप्रदानकथनेन लज्जते।**

### व्याख्या

भवता विक्रमाङ्कदेवेनोज्जलै श्रेष्ठैर्गुणैर्दयादाक्षिण्यादिभिरनुरञ्जितस्समाकर्षितश्चोलभूमिपतिश्चोलदेशाधिपो वीरराजेन्द्र किं नु वक्ति न किमपि वक्तुं पारयति। श्रिय लक्ष्मी तृणसमा तृणसदृशी तुच्छा पश्यतो भावयतस्तव श्रियो लक्ष्म्या प्रदान त्वदायत्तीकरण तत्कथनेन लक्ष्मीसमर्पणकथनेन लज्जते ह्रियमाप्नोति। विशिष्टलक्ष्मीत्यागमूर्तेस्तव पुरत स्वाल्पलक्ष्मीप्रदानप्रस्तावेऽपि लज्जा धत्ते इति भाव।

### भाषा

आप के श्रेष्ठ दया दाक्षिण्य आदि गुणो से आकर्षित चोलदेश का वीरराजेन्द्र नाम का राजा आप के सामने क्या कहे। वह, लक्ष्मी को तृण के समान तुच्छ समझने वाले आप को धन देने की बात कहने मे भी लज्जित होता है।

**अन्यपौरुषगुणेष्वपि श्रुति प्राप्तवत्सु घनगर्जितेष्विव।**
**राजहंसवनितेव मानसान्नास्य निःसरति तावकी स्तुतिः ॥४५॥**

### अन्वयः

**घनगर्जितेषु इव अन्यपौरुषगुणेषु अपि श्रुति प्राप्तवत्सु अस्य मानसात् राजहसवनिता इव तावकी स्तुतिः न निःसरति।**

### व्याख्या

घनाना मेघाना गर्जितानि स्तनितानि 'स्तनित गर्जित मेघनिर्घोषे रसितानि-च' इत्यमर । तेष्विवाऽन्येषा प्रतापिना पौरुषस्य पुरुषार्थस्य गुणेषु महत्त्वेष्व-पि श्रुति कर्णं प्राप्तवत्सु गतेषु, अस्य चोलनृपतेर्मानसान्मनसो 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । मानससरसो वा राजहसवनितेव मरालीव तावकी त्वदीया स्तुति स्तव 'स्तव स्तोत्र स्तुतिर्नुति' इत्यमर । न नि सरति न पृथग्भवति । तन्मनस्येव निश्चला तिष्ठत इति भाव । घनगर्जित श्रुत्वा यथा मराली मानससरोवरादन्यत्र न गच्छति तत्रैव तिष्ठति च तथैव बहूना राज्ञामपि पुरुषार्थकथा श्रुत्वा तव स्तुतिश्चोलदेशाधिपतेर्मनसो न पृथग्भ-वतीत्यर्थ. । अत्रोपमालङ्कार ।

### भाषा

मेघ की गरज के समान अन्य राजाओ के भी पुरुपार्थ के महत्त्व को सुन कर चोलदेश के राजा वीरराजेन्द्र के मन से तुम्हारी स्तुति मानस सरोवर से राजहसी के समान नही हटती है । अर्थात् जैसे मेघ के शब्द सुनकर राजहसी मानस सरोवर मे ही रहती है और वहा से अन्यत्र नही हटती वैसे ही अन्य राजाओ के पौरुष के महत्त्व को सुनने पर भी तुम्हारी स्तुति उस चोल राजा के मन से नही हटती किन्तु उसके मन मे विद्यमान है ।

**कन्यकां कुलविभूषणं गुणैरद्भुतैस्त्रिभुवनातिशायिनीम् ।**
**त्वत्करप्रणयिनीं विधाय सः प्राप्तुमिच्छति समस्तवन्द्यताम् ॥४६॥**

### अन्वयः

सः कुलविभूषणम् अद्भुतैः गुणैः त्रिभुवनातिशायिनीं कन्यका त्वत्कर-प्रणयिनीं विधाय समस्तवन्द्यतां प्राप्तुम् इच्छति ।

### व्याख्या

स वीरराजेन्द्रनामकश्चोलदेशराज कुलस्य वशस्य भूषणमलङ्कारभूतामद्भु-तैराश्चर्यकरैर्गुणै शीललज्जादिभिस्त्रयाणा भुवनाना समाहारस्त्रिभुवन तमतिशेते लङ्घयतीति त्रिभुवनातिशायिनी ता त्रिभुवनातिशायिनी लोकत्रयेष्वनुपमा कन्यका स्वात्मजा तव करस्य हस्तस्य प्रणयिनी सङ्गिनी ता विधाय कृत्वा त्वा विवाह्येत्यर्थ । समस्तैस्सकलैर्लोकैर्वन्द्यता नमस्यता प्राप्तु लब्धुमिच्छत्य-भिवाञ्छति ।

**भाषा**

वह वीरराजेन्द्र नामक चोल देश का राजा कुल की अलङ्कार स्वरूप और शील लज्जा आदि अद्भुत गुणो से तीनो लोको मे अनुपम, अपनी कन्या का तुमसे पाणिग्रहण अर्थात् विवाह कर सब लोगो मे वन्दनीय होना चहता है ।

**तेन तस्य वचनेन चारुणा प्राप [१]कुन्तलपतिः प्रसन्नताम् ।**
**तीव्ररोषविषवेगशान्तये भेषजं विनय एव तादृशाम्[२] ॥४७॥**

**अन्वयः**

कुन्तलपतिः तस्य चारुणा तेन वचनेन प्रसन्नता प्राप । तादृशां तीव्ररोषविषवेगशान्तये विनयः एव भेषजम् (अस्ति) ।

**व्याख्या**

कुन्तलपति कुन्तलदेशाधिपतिर्विक्रमाङ्कदेवस्तस्य द्राविडेन्द्रदूतस्य चारुणा मनोहारिणा तेन पूर्वोक्तेन वचनेन वाक्प्रपञ्चेन प्रसन्नता प्रसाद 'प्रसादस्तु प्रसन्नता' इत्यमर । प्रापोपजगाम । तादृशा विक्रमाङ्कदेवसदृशाना विजि-गीषूणा तीव्रस्तीक्ष्णो रोष क्रोध एव विष गरल तस्य वेगो रयस्तस्य शान्तये शमनाय विनय एव नम्रत्वमेव भेषजमौषध 'भेषजौषधभैषज्यान्यगदो जायु-रित्यपि' इत्यमर । अस्ति । विजिगीषूणा वीराणा पुरतो विनयदर्शन तेषां क्रोधनिवारणपूर्वकप्रसन्नतासम्पादनार्थमेक एवोपाय इति भाव । रोषे विषता-दात्म्याद्रूपकम ।

**भाषा**

कुन्तलदेशाधिपति विक्रमाङ्कदेव, द्रविडदेश के राजा के दूत की पूर्वोक्त मीठी बातो से प्रसन्न हो गया । ऐसे महापुरुषो के तीव्र क्रोध रूपी विष के वेग को रोकने के लिये केवल विनय ही औषध है ।

---

[१] कुन्तलदेश कृष्णातुङ्गभद्रासङ्गमात् कावेरीनद्युद्गमस्थानपर्यन्त प्रसृत पूर्वपश्चिमाद्रिमध्यभाग ।

[२] भावोऽयमत्राऽपि प्रदर्शित —

उत्कन्धरानेव रणाङ्गणेषु यस्यातितुङ्गस्य हठात्प्रहर्तु ।
न नम्रभावादपरो नृपाणामासीत् कृपाणप्रतिषेधमार्ग ॥ (३ सर्ग ६९ श्लोक )

कीदृशी शशिमुखी भवेदिति स्पृश्यते स्म हृदये स चिन्तया ।
कामुकेषु मिषमात्रमीक्षते नित्यकुण्डलितकार्मुकः स्मरः ॥४८॥

अन्वयः

सः शशिमुखी कीदृशी भवेत् इति चिन्तया हृदये स्पृश्यते स्म । नित्यकुण्डलितकार्मुकः स्मरः कामुकेषु मिषमात्रम् ईक्षते ।

व्याख्या

स विक्रमाङ्कदेव शशिमुखी चन्द्रमुखी द्रविडदेशराजकुमारी कीदृशी किस्वरूपा भवेदिति चिन्तया विचारेण हृदये मनसि 'चित्तन्तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर.। स्पृश्यते स्म चिन्तितो बभूव। नित्य सदैव कुण्डलित समाकृष्ट कार्मुक धनुर्येन स सततसज्जधनु स्मर कामदेव कामुकेषु कामिषु कान्ताम्प्रत्यनुरागसम्भृतेष्वित्यर्थ । मिषमात्र व्याजमात्रमीक्षते पश्यति । चिन्तोत्पादनव्याजेनैव कामबाणव्यापार सफल इति भाव । अत्राऽर्थान्तरन्यासोऽलङ्कार ।

भाषा

वह विक्रमाङ्कदेव, द्रविड देश के राजा की चन्द्रवदनी कन्या कैसी होगी इस विचार से चिन्तित हो उठा। कामियो के प्रति सदा धनुष सज्ज रखने वाला कामदेव, कामियो को पीडित करने मे कोई बहाना ही खोजता रहता है।

अब्रवीच्च मनसः प्रसन्नतां दन्तकान्तिभिरुदीरयन्निव ।
ओष्ठपृष्ठलुठितस्मिताञ्चलः कुन्तलीनयनपूर्णचन्द्रमाः ॥४९॥

अन्वयः

ओष्ठपृष्ठलुठितस्मिताञ्चलः कुन्तलीनयनपूर्णचन्द्रमाः (सः) दन्तकान्तिभिः मनसः प्रसन्नताम् उदीरयन् इव अब्रवीत् च ।

व्याख्या

ओष्ठयो पृष्ठ तत्र लुठितो लुलित स्मितस्येषद्धासस्याऽञ्चल. प्रान्तभागो यस्य स ओष्ठपृष्ठलुठितस्मिताञ्चलो लज्जयेषद्धासयुक्त कुन्तलीना कुन्तलदेश-कामिनीना नयनानि नेत्राणि 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी' इत्यमर ।

तेषा कृते पूर्णचन्द्रमा पूर्णेन्दुवदाल्हादकारक स विक्रमाङ्कदेवो दन्तकान्तिभिरीषद्धासे प्रदर्शितदन्तप्रभाभिर्मनसश्चित्तस्य प्रसन्नता प्रसादमुदीरयन् प्रकटयन्निवाऽब्रवीच्च कथयामास च । दशनकान्तिमिषेण मन प्रसादोदीरणस्योत्प्रेक्षितत्वादुत्प्रेक्षालङ्कार ।

### भाषा

ओठो के पृष्ठ भाग पर स्मितरूपी आँचल से युक्त अर्थात् कुछ लज्जा से मुस्कुराने वाला कुन्तल देश की ललनाओ के नेत्रो का पूर्णचन्द्र अर्थात् पूर्णचन्द्र के समान आनन्द देने वाला वह विक्रमाङ्कदेव, मानो दातो की कान्ति से अपने मन की प्रसन्नता को प्रकट करता हुआ बोला भी ।

**ईदृशी सुजनतामजानता कार्मुकेण मुखरत्वमत्र मे ।**
**यत्कृतं किमपि तेन लज्जया भारती कथमपि प्रवर्तते ॥५०॥**

### अन्वयः

ईदृशी सुजनताम् अजानता मे कार्मुकेण अत्र यत् किम् अपि मुखरत्व कृत तेन लज्जया (मे) भारती कथम् अपि प्रवर्तते ।

### व्याख्या

ईदृशी पूर्वोक्तेन वाक्यकदम्बेन सम्यग् व्यक्ता सुजनता सज्जनतामजानता तस्या सुजनताया अज्ञानान्मे मम कार्मुकेण धनुषाऽत्राऽस्मिन्नृपे यत्किमपि यत्किञ्चिदपि मुखरत्व वाचालत्व धाष्टर्यसूचक निन्दित कर्मेति भाव । कृत सम्पादित तेनौद्धत्येन हेतुना लज्जया ह्रिया मे मम भारती वाणी 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमर । कथमपि कृच्छ्रादेव महताकष्टेनेत्यर्थं । प्रवर्तते प्रस्फुरति ।

### भाषा

इस प्रकार पूर्व प्रकाशित सौजन्य को न जानने वाले मेरे धनुष ने इस राजा के साथ जो कुछ ज्यादती की है उस लज्जा से मेरी वाणी किसी प्रकार कठिनता से निकलती है अर्थात् मैंने राजा की सुजनता को न समझ, अपने धनुष से जो जो क्रूर काम किये है उसके लिये मै लज्जित हूँ ।

**दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः ।**
**क्षारभावमपनीय गृण्हते वारिधेः सलिलमेव वारिदाः ॥५१॥**

अन्वयः

सज्जनाः दोषजातम् अवधीर्य मानसे गुणम् एव धारयन्ति । वारिदाः वारिधेः क्षारभावम् अपनीय सलिलम् एव गृण्हते ।

व्याख्या

सज्जना सत्पुरुषा दोषाणा निन्द्यवस्तूना जात समूह दोषजात दुर्गुणकुलमित्यर्थ । अवधीर्य परित्यज्याऽवहेलन विधायेति भाव । मानसे हृदये 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । गुणमेव धारयन्ति समादरेण गृह्णन्ति । वारिदा मेघा वारिधे समुद्रस्य क्षारभाव लवणत्वमपनीय दूरीकृत्य सलिलमेव शुद्ध माधुर्यवज्जलमेव गृह्णते समाददति । दृष्टान्तालङ्कार ।

भाषा

सज्जनलोग दोषो को छोड कर मन मे गुण को ही धारण करते है । मेघ, समुद्र के खारेपन को छोड कर विशुद्ध मधुर जल ही ग्रहण करते है ।

**दिग्जयव्यसनिना पुनः पुनस्तस्य किं प्रियमनुष्ठितं मया ।**
**रज्यते मयि दृढं तथाप्यसौ वेत्ति कश्चरितमुन्नतात्मनाम् ॥५२॥**

अन्वयः

पुनः पुन दिग्जयव्यसनिना मया तस्य कि प्रियम् अनुष्ठितम् । तथापि असौ मयि दृढं रज्यते । कः उन्नतात्मना चरितं वेत्ति ।

व्याख्या

पुन पुनर्भूयो भूयो दिशा जयो दिग्जयस्तस्य व्यसनमस्याऽस्तीति दिग्जयव्यसनी तेन सर्वदिग्वर्तमाननृपमण्डलपराजयदुर्ललितचेतसा मया विक्रमाङ्कदेवेन तस्य द्राविडेन्द्रस्य कि प्रिय हितमनुष्ठित कृतम् । तथापि मया किञ्चिदुपकारेऽकृतेऽप्यसौ द्राविडेन्द्रो मयि मत्सम्बन्धे दृढ रज्यते गाढ स्नेह कुरुते । क पुरुष उन्नत उत्कृष्ट आत्मा येषा ते तेषामुन्नतात्मना महात्मना चरित माहात्म्य वेत्ति जानाति । अत्रार्थान्तरन्यासालङ्कार

**भाषा**

बार २ दिग्विजय करने मे लम्पट मैने उस द्रविडदेश के राजा का क्या प्रिय किया है। तो भी वह मुझ से घनिष्ठ प्रेम रखता है। महात्माओ के चरित्र को कौन समझ सकता है।

**तस्य भूरिगुणरत्नशालिनः स्नेहपूतहृदयस्य वाञ्छितम् ।**
**पारयामि न विधातुमन्यथा यत्स्थितं मनसि तद्विधीयताम् ।।५३।।**

**अन्वयः**

भूरिगुणरत्नशालिनः स्नेहपूतहृदयस्य तस्य वाञ्छितम् अन्यथा विधातु न पारयामि। यत् मनसि स्थित तत् विधीयताम्।

**व्याख्या**

गुणा सौजन्यादिगुणा एव रत्नानि गुणरत्नानि भूरीणि बहूनि गुणरत्नानि भूरिगुणरत्नानि तैश्शालते शोभते स तस्य बहुगुणरत्नशोभितस्य स्नेहेन प्रेम्णा पूत पवित्र हृदय मनो यस्य तस्य प्रेमपावनीकृतविशुद्धमनसस्तस्य द्राविडेन्द्रस्य वाञ्छितमभीष्ट कन्यादानादिकमन्यथा वैपरीत्येन विधातु कर्तुं न पारयामि न शक्नोमि। यदभीप्सित मनसि स्वान्ते 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर। स्थित विद्यमान तद्विधीयता क्रियताम्। मनसैवाऽनुमोदयामि तव प्रस्तावमिति भाव।

**भाषा**

अनेक गुणरत्नो से सुशोभित, प्रेम से पवित्र हृदय वाले द्राविडदेश के राजा की अभीप्सित कन्यादान की बात को न मानने मे मैं असमर्थ हूँ। जो उसके मन मे हो, वह करे।

**दर्शयन्तममृतद्रवोपमां वाचमिन्दुकरनिर्मलामिति ।**
**विक्रमाङ्कमपयातसाध्वसः साधुरेनमथ स व्यजिज्ञपत् ।।५४।।**

**अन्वयः**

अथ अपगतसाध्वसः साधुः सः अमृतद्रवोपमाम् इन्दुकरनिर्मलाम् इति वाच दर्शयन्तम् एनं विक्रमाङ्क व्यजिज्ञपत्।

### व्याख्या

अथ विक्रमाङ्कदेवोक्त्यनन्तरमपगत दूरीभूत साध्वस भय यस्य स विगत-भीस्साधुस्सज्जनस्स चोलदूतोऽमृतस्य सुधाया द्रव प्रवाह उपमोपमान यस्यास्ता पीयूषप्रवाहसदृशीमिन्दुकरवच्चन्द्रकिरणवन्निर्मला विशदा तामिति पूर्वोक्तप्रकारा वाच वाणी दर्शयन्त प्रकटयन्त ब्रुवाणमित्यर्थ । एन प्रसिद्ध विक्रमाङ्क विक्रमाङ्कदेव व्यजिज्ञपत् निवेदितवान् ।

### भाषा

विक्रमाङ्कदेव के बोलने के अनन्तर भय से रहित उस सज्जन चोलराजदूत ने अमृत के प्रवाह के ऐसी तथा चन्द्रमा के किरणो के ऐसी मीठी और निर्मल उपर्युक्त बाते बोलने वाले विक्रमाङ्कदेव से कहा ।

**किं तवान्यदुचितं वदान्यता यत्समादिशति तत्त्वया कृतम् ।**
**प्रार्थितार्थपरिपन्थितामगात् कश्चुलुक्यकुलपार्थिवोऽर्थिनाम् ॥५५॥**

### अन्वयः

तव अन्यत् उचितं किम् । वदान्यता यत् समादिशति तत् त्वया कृतम् । कः चुलुक्यकुलपार्थिवः अर्थिना प्रार्थितार्थपरिपन्थिताम् अगात् ।

### व्याख्या

तव भवतो विक्रमाङ्कदेवस्याऽन्यदितरदुचित योग्य किम् । अर्थात् भवता सर्वमुचितमेवाऽनुष्ठितम् । वदान्यतोदारता 'स्युर्वदान्यस्थूललक्ष्यदानशौडा बहुप्रदे' इत्यमर. । तावकीनेति भाव । यत्समादिशति यदाज्ञापयति तत्त्वया भवता कृत विहितम् । सर्वथैव हृदयस्य विशालतैव भवता प्रदर्शितेति भाव । कश्चुलुक्यकुलस्य चालुक्यवशस्य पार्थिवो नृपोऽर्थिना याचकाना प्रार्थितोऽभिवाञ्छितोऽर्थ प्रयोजन तस्य परिपन्थिता प्रतिकूलतामगात् गतवान् न कोऽपीत्यर्थ । चालुक्यकुलोत्पन्नाना राज्ञा याचकमनोरथपूरण स्वाभाविकमिति भाव । अत्रार्थापत्त्यलङ्कार ।

### भाषा

इससे बढ कर आपका और दूसरा क्या उचित कार्य हो सकता है । आपने अपने औदार्य के अनुरूप कार्य किया । चालुक्य वश के किस राजा ने अर्थियो की प्रार्थना का निषेध किया है अर्थात् किसी ने नही ।

**वेत्सि मे पतिमवञ्चकं यदि स्वच्छतां स्पृशति चात्र ते मनः ।**
**तन्निवृत्य कुरु तुङ्गभद्रया मुद्रिते पदमुपान्तवर्त्मनि ।।५६।।**

### अन्वयः

यदि मे पतिम् अवञ्चकं वेत्सि, अत्र ते मनः च स्वच्छतां स्पृशति तत् निवृत्य तुङ्गभद्रया मुद्रिते उपान्तवर्त्मनि पदं कुरु ।

### व्याख्या

(हे राजन् ! ) यदि त्व मे मम पति स्वामिन द्राविडेश्वरमवञ्चक निष्कपटहृदय स्वच्छान्तःकरणमित्यर्थ वेत्सि जानासि । अत्राऽस्मिन्विषये ते तव मनश्च चेतश्च स्वच्छता नैर्मल्य स्पृशत्यालिङ्गति तर्त्ताहि निवृत्याऽस्मात्स्थानात्परावृत्य तुङ्गभद्रया तन्नामनद्या मुद्रिते चिन्हित उपान्ते वर्त्म तस्मिन् सीमान्तप्रदेशे पद स्थिति स्वनिवासमित्यर्थ । कुरु विधेहि ।

### भाषा

यदि आप मेरे स्वामी द्राविडेश्वर को निष्कपट समझते है और इस सम्बन्ध मे आप का मन यदि सन्देह रहित है तो आप यहाँ से लौट कर तुङ्गभद्रा नदी से चिन्हित सीमान्तप्रदेश मे अपना डेरा डालिये ।

**कैश्चिदेव सततप्रयाणकैस्तत्र शुद्धहृदयः करिष्यति ।**
**स त्वया परिचयं प्रतापिना पर्वणीन्दुरिव तिग्मरश्मिना ।।५७।।**

### अन्वयः

तत्र शुद्धहृदयः सः कैश्चित् एव सततप्रयाणकैः प्रतापिना त्वया पर्वणि इन्दुः तिग्मरश्मिना इव परिचय करिष्यति ।

### व्याख्या

तत्र तुङ्गभद्रासीमान्तप्रदेशे शुद्ध निष्कपट हृदय मनो यस्य स निर्मलमानस स द्राविडेश्वर कैश्चिदेव कियद्भिरेव सतत निरन्तर प्रयाणकानि गमनानि प्रस्थानानि वा तै प्रतापिना प्रभावशालिना त्वया भवता सह पर्वण्यमायामिन्दुश्चन्द्रस्तिग्मरश्मिना सूर्येणेव परिचय सम्मेलन करिष्यति विधास्यति । अत्रोपमालङ्कार ।

### भाषा

तुङ्गभद्रा के सीमान्त प्रदेश मे निष्कपट हृदय वाले मेरे स्वामी द्राविडेश्वर, प्रतापी आप से, अमावस्या को, चन्द्रमा के तेजस्वी सूर्य मे मिलने के समान, रास्ते मे लगातार कुछ ही डेरे डालते हुए, आ मिलेगे ।

**गाहतेऽत्र धृतकार्मुके त्वयि प्रीतिदानमपि भीतिदानताम् ।**
**तेन तस्य महती विलक्षता यत्र वेत्सि गुणपक्षपातिताम् ॥५८॥**

### अन्वयः

अत्र धृतकार्मुके त्वयि प्रीतिदानम् अपि भीतिदानता गाहते तेन यत्र गुणपक्षपातितां वेत्सि तस्य महती विलक्षता ।

### व्याख्या

अत्राऽस्मिन् चोलराजप्रधाननगर्यां धृत गृहीत कार्मुक धनुर्येन स तस्मिन् सज्जधनुषि त्वयि विक्रमाङ्कदेवे प्रीत्या प्रेम्णा दान कन्याया प्रदानमपि भीत्या भयेन दान तस्य भावस्ता भीतिदानता भयजन्यदानत्व गाहते प्राप्नोति । सज्जधनुषाय तुभ्य यत्प्रीतिपूर्वकमपि दास्यते तद्भयेन दत्तमिति सर्वेषा ज्ञान भवेदिति भाव । तेन कारणेन यत्र यस्य द्राविडराजस्य विषये गुणेषु तदीयेषु गुणेषु सौजन्यादिषु यस्ते पक्षपातस्समादरस्तस्य भावो गुणपक्षपातिता ता वेत्सि जानासि धारयसीत्यर्थ । तस्य द्राविडाधिपस्य महती विपुला विलक्षता सलज्जत्वम् । अथवा त प्रति सर्वेषा विस्मयान्वितत्व यदेव शौर्ययुक्तोऽपि भयात् कन्या ददातीति । 'विलक्षो विस्मयान्विते' इत्यमर । त्वद्भयात्तेन कन्या प्रदत्तेति तस्य महदपयशस्तेन यस्य कृते तव गुणपक्षपातित्व वर्तते स लज्जास्पद मा भूयादिति हेतो सीमान्तप्रान्त एव तव दर्शन वरमिति भाव ।

### भाषा

उस द्राविड राजा के राज्य की प्रधान नगरी मे धनुष लेकर (अपनी सेना के साथ) आये हुए तुमको जो प्रेम पूर्वक भी दिया जाएगा वह लोगो की दृष्टि मे भय से दिया गया समझा जाएगा । इस कारण से जिसके गुणो के प्रति आप का समादर है उस चोलदेश के राजा को लज्जित होना पडेगा । या सब लोग उसके सम्बन्ध मे आश्चर्य करने लगेगे कि इतना पराक्रमी और शौर्ययुक्त होने पर भी उसने भय से अपनी लडकी कैसे दे दी ।

**नाद्य यावदवलोकिता जनैः क्वापि तस्य वचसामसत्यता।**
**मादृशां शुभविपर्ययाद्यदि व्यक्तिमेष्यति भवादृशेषु सा ॥५९॥**

### अन्वयः

अद्य यावत् जनैः तस्य वचसाम् असत्यता क्व अपि न अवलोकिता। यदि मादृशा शुभविपर्ययात् सा भवादृशेषु व्यक्तिम् एष्यति।

### व्याख्या

अद्य यावदाधुनिककालपर्यन्त जनैर्लोकैस्तस्य वचसा वाणीनामसत्यता मिथ्यात्व क्वाऽपि कस्मिन्नपि विषये नाऽवलोकिता न दृष्टा नानुभूतेत्यर्थ । यदि पर मादृशा मत्सदृशाना शुभस्य पुण्यस्य विपर्ययो वैपरीत्य तस्मात्पापात् दुर्भाग्याद्वा साऽसत्यता भवादृशेषु त्वादृशेषु महानुभावेषु व्यक्ति प्रकाशमेष्यति प्राप्स्यति । अयमस्माक दौर्भाग्यस्यैव प्रभाव स्याद्यदि तस्य वचसामसत्यता भवत्सु प्रकटीभवेदिति भाव ।

### भाषा

आज तक लोगो को किसी भी विषय मे द्राविडेश्वर की वाणी की असत्यता का अनुभव नही हुआ है। यदि आपके अनुभव मे ऐसी बात आवे तो वह मेरे ऐमो के पाप से या दुर्भाग्य से ही हो सकता है।

**एवमादिभिरनेन बोधितः कोविदेन वचनैः पुनः पुनः।**
**ज्ञातचोलहृदयः स्वयं च स प्राङ्निवेदितमगान्नदीतटम् ॥६०॥**

### अन्वयः

कोविदेन अनेन एवम् आदिभिः वचनैः पुनः पुनः बोधितः स्वयं च ज्ञातचोलहृदयः सः प्राक् निवेदित नदीतटम् अगात्।

### व्याख्या

कोविदेन पण्डितेन लौकिकव्यवहाराभिज्ञेनेत्यर्थ । अनेन दूतेनैवमादिभिरेतादृशैर्वचनै पुन पुनो भूयो भूयो बोधितो विज्ञापित स्वयञ्च गुप्तचरादिभिर्ज्ञात परीक्षित चोलस्य चोलदेशाधिपस्य हृदय येन स विज्ञातचोलराजहार्दिकभाव स विक्रमाङ्कदेव प्राक् पूर्वं निवेदित सूचित नदीतट तुङ्गभद्रानदीतीरमगाज्जगाम ।

**भाषा**

इस चतुर व लौकिकव्यवहार मे कुशल दूत द्वारा ऐसी ऐसी बातो से बार बार समझाया हुआ और स्वय भी अपने गुप्तचरो से चोल राजा के हार्दिक भाव को जान लेने वाला, विक्रमाङ्कदेव, पूर्व सूचित तुङ्गभद्रानदी के तट पर गया।

**चोलभूमिपतिरप्यनन्तरं निर्जगाम नगरात्कृतोत्सवः ।**
**पुष्पसायकपताकया तया कन्यया सह सहासवक्त्रया ॥६१॥**

**अन्वय.**

अनन्तर कृतोत्सवः चोलभूमिपतिः अपि सहासवक्त्रया पुष्पसायकपताकया तया कन्यया सह नगरात् निर्जगाम ।

**व्याख्या**

अनन्तर विक्रमाङ्कदेवस्य तुङ्गभद्रानदीतटप्राप्त्यनन्तर कृतो विहित उत्सवो महो 'मह उद्धव उत्सव' इत्यमर । येन स विहितमहश्चोलस्य चोलदेशस्य भूमिपति पृथ्वीपतिश्चोलेश्वरोऽपि हासेन सहित सहास वक्त्रमानन यस्यास्सा तया प्रफुल्लाननया पुष्पाण्येव सायका बाणा यस्य स पुष्पसायक कामस्तस्य पताका वैजयन्ती 'पताका वैजयन्ती स्यात्केतन ध्वजमस्त्रियाम' इत्यमर । कामोद्बोधकत्वात्तत्स्वरूपा तया मन्मथध्वजरूपया तया प्रसिद्धया कन्यया स्वसुतया सह नगरान्निजराजधान्या निर्जगाम बहिर्नि सृतवान् ।

**भाषा**

विक्रमाङ्कदेव के तुङ्गभद्रा नदी के तट पर पहुँचने पर चोलदेश का राजा भी मगलोत्सव मनाकर, प्रसन्न वदन और कामदेव की ध्वजा के समान अपने स्वरूप से कामोद्दीपन करने वाली अपनी कन्या के साथ अपनी राजधानी से बाहर निकल पडा ।

**सन्धिबन्धमवलोक्य निश्चलं तस्य कुन्तलनरेन्द्रसूनुना ।**
**शान्तसाध्वसमहारुजः प्रजाः स्वेषु धामसु बबन्धुरादरम् ॥६२॥**

**अन्वयः**

प्रजाः तस्य कुन्तलेन्द्रसूनुना निश्चलं सन्धिबन्धम् अवलोक्य शान्तसाध्वसमहारुजः (सत्यः) स्वेषु धामसु आदरं बबन्धुः ।

**व्याख्या**

प्रजा जनास्तस्य द्राविडेश्वरस्य कुन्तलेन्द्रस्य कुन्तलराजस्याऽऽहवमल्लदेवस्य सूनु पुत्रो विक्रमाङ्कदेवस्तेन सह निश्चल दृढ सन्धे स्नेहस्य बन्ध बन्धन सन्धिबन्ध प्रेमबन्धनमवलोक्य ज्ञात्वा शान्त समाप्त साध्वस भयमेव महारुक् महापीडा यासा ता दूरीकृतमहाव्यथा सत्य स्वेषु निजेषु धामसु गृहेष्वादरं प्रेम बबन्धुर्दधु । अय विक्रमाङ्कदेव स्नेहसम्बन्धेन न तु दिग्विजयार्थमत्राऽऽगत इति विनिश्चित्य त्यक्तचिन्ता जना आक्रमणकालिकगृहत्यागादिक सम्प्रत्यनावश्य-कमिति सुखेन स्वगृहेषु निवास चक्रुरिति भाव ।

**भाषा**

प्रजागण अपने राजा द्रविडेश्वर का कुन्तलराज आहवमल्लदेव के पुत्र विक्रमाङ्कदेव से दृढ प्रेम सम्बन्ध जानकर भय रूपी महाव्यथा से शान्त होकर, अपने अपने घरो मे सुख से रहने लगे । अर्थात् आक्रमण काल मे जो अपना घर छोड सुरक्षित स्थान मे रहने जाना पडता था उसकी आवश्यकता न समझ वे सुख से अपने अपने घर मे ही रहे ।

**दिग्गजश्रवणभङ्गकारिभिर्दुन्दुभिध्वनिभिरस्य भैरवैः ।**
**अभ्रमभ्रमुभुजङ्गडिण्डिम-ध्वाननिर्भरमिव व्यराजत ॥६३॥**

**अन्वयः**

अस्य दिग्गजश्रवणभङ्गकारिभिः भैरवैः दुन्दुभिध्वनिभिः अभ्रम् अभ्रमुभुजङ्गडिण्डिमध्वाननिर्भरम् इव व्यराजत ।

**व्याख्या**

अस्य चोलदेशाधिपस्य दिशा ककुभा 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । गजा हस्तिनो दिग्गजास्तेषा श्रवणानि कर्णास्तेषां भङ्गो बधिरीकरण तत्कुर्वन्तीति तैर्दिङ्नागकर्णबधिरीकरणसम्पादकैर्भैरवैर्भयान-कैर्दुन्दुभीना भेरीणा 'भेरी स्त्री दुन्दुभि पुमान्' इत्यमर । ध्वनयस्स्वनास्तैर्भेरी-स्वनैरभ्र नभोऽभ्रमुरैरावतकान्ता हस्तिनी 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभा' इत्यमर । तस्या भुजङ्ग पतिरैरावतस्तस्य डिण्डिमो वाद्यविशेष. डिण्डम-सदृशो ध्वनिर्वा 'वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झरा' इत्यमर । तस्य ध्वानेन

कठोरशब्देन निर्भरमिव व्याप्तमिव व्यराजताऽजायत । दुन्दुभिध्वनिष्वैरावत-डिण्डिमध्वनित्वस्योत्प्रेक्षणादुत्प्रेक्षालङ्कार ।

**भाषा**

दिग्गजो के कानो को बहिरा कर देने वाले इस चोल राजा की तुरहियो के भयकर शब्दो से मानो ऐरावत के नगाडे की ध्वनि मे या नगाडे के समान शब्द से आकाश गूज उठा हो, ऐसा प्रतीत होने लगा ।

**सर्वतः श्रवणभैरवस्फुरद्—दुन्दुभिप्रतिरवापदेशतः ।**
**सस्वनं द्विरदवृन्दघट्टनादस्फुटन्निव दिगन्तभित्तयः ॥६४॥**

**अन्वयः**

सर्वतः श्रवणभैरवस्फुरद्दुन्दुभिप्रतिरवापदेशतः द्विरदवृन्दघट्टनात् दिगन्तभित्तयः सस्वनम् अस्फुटन् इव ।

**व्याख्या**

सर्वत सकलेषु प्रदेशेषु श्रवणेभ्य कर्णेभ्यो भैरवा भयानका ये स्फुरन्त प्रकटीभवन्तो दुन्दुभीना भेरीणा प्रतिरवा प्रतिध्वनयस्तेषामपदेशतो व्याजाद् द्विरदाना गजाना वृन्दानि समूहास्तेषा घट्टनात्सघर्षणाच्च दिशामन्ता दिगन्तास्तेषा दिगन्तप्रदेशाना भित्तय कुडचानि 'भित्ति स्त्री कुडचम्' इत्यमर । सस्वन सशब्दमस्फुटन्निवाऽपतन्निव विदारिता इव जाता इति भाव । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

चारो ओर जोग २ मे बजने वाली भेरियो के कर्णकटु प्रतिध्वनियो के मिप से और हाथियो के समूहो के परस्पर धक्को से मानो दिगन्तप्रदेशो की दीवाले शब्द करती हुई फट रही थी ।

**कर्णतालपवनोर्मिशीतलैः सिञ्चति स्म करशीकराम्बुभिः ।**
**दिग्गजानिव भयेन मूर्छितांस्तस्य वारणपरम्परा पुरः ॥६५॥**

**अन्वयः**

तस्य वारणपरम्परा कर्णतालपवनोर्मिशीतलैः करशीकराम्बुभिः पुरः भयेन मूर्छितान् दिग्गजान् सिञ्चति स्म इव ।

## व्याख्या

तस्य चोलदेशाधिपस्य वारणाना गजाना परम्परा श्रेणिर्गजयूथा इत्यर्थ.। कर्णास्ताला इवेति कर्णतालास्तालपत्रसदृशश्रोत्राणि तेषा पवना वायवस्तेषामूर्मिभिस्तरङ्गैश्शीतलानि तैस्तालपत्राकारविशालश्रोत्रस्फुरणजनितवायुतरङ्गशीतै. कराणा शण्डाना शीकराम्बूनि जलकणजलानि 'शीकरोऽम्बुकणा स्मृता.' इत्यमर । तैर्हस्तिशुण्डानिस्सरज्जलबिन्दुधाराभि पुरोऽग्रे भयेन महाशब्दजनितभीत्या मूर्च्छितान चेतनारहितान् दिग्गजान् दिङनागान् सिञ्चति स्मेव पुनरपि चेतनाप्राप्त्यर्थं शीतजलोपचारेण सेवत इव । अत्रोत्प्रेक्षालङ्कार ।

## भाषा

चोलदेश के राजा के हाथियो का झुण्ड अपने कान रूपी ताड के पत्तो या पखो से उत्पन्न वायु की लहरो से ठण्ढे भए हुए सूड से छूटने वाले फुवारो के जल से, मानो सामने दिखाई देने वाले भय से मूर्छित दिग्गजो को फिर से होश मे लाने के लिये, शीतोपचार कर रहा था।

**तच्चमूरजसि दूरमुद्गते यन्न दिग्भ्रममधत्त भास्करः।**
**हेतुरत्र रजसां निवारणं कुञ्जरध्वजपटान्तवीजनैः ॥६६॥**

## अन्वयः

**तच्चमूरजसि दूरम् उद्गते (सति) भास्करः यत् दिग्भ्रमं न अधत्त अत्र कुञ्जरध्वजपटान्तवीजनैः रजसा निवारण हेतुः।**

## व्याख्या

तस्य चोलराजस्य चमूस्सेना 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू' इत्यमर । तस्या रजो धूलिस्तस्मिन् तत्सेनाधूलौ दूरमत्यूर्ध्वमुदगते उत्पतिते सति भास्कर सूर्यो यद्दिशा भ्रम दिग्भ्रान्ति नाऽधत्त न बभाराऽत्राऽस्मिन्नर्थे कुञ्जराणा हस्तिना ध्वजपटान्ताना पताकापटप्रान्तभागाना वीजनैस्सचलनैर्गजोपरिस्थितपताकावस्त्राञ्चलसचलनसमुद्भूतपवनैरित्यर्थं । रजसा धूलीना निवारण समुत्सारणमेव हेतु कारणम्। काव्यलिङ्गमलङ्कार ।

## भाषा

उसकी सेना के चलने से उडी धूलि के बहुत ऊँचाई तक छा जाने पर,

सूर्य को जो रास्ते का भ्रम न हुआ अर्थात् भुलावा न पडा, इसका कारण, हाथियो पर के झण्डो की झण्डियो के हिलते रहने से, उसकी हवा से धूलि का हट जाना ही है। अर्थात झण्डियो के, खूब ऊपर फडफडाते रहने से उसकी हवा से धूलि के हट जाने से सूर्य को साफ २ मार्ग दिखाई देता था।

**क्षोणिरेणुमिषतः सदाध्वगः स्यन्दने रचयति स्म भास्करः ।**
**पश्चिमाद्रिविषमस्थलीभुवां पूरणार्थमिव संग्रहं मृदः ॥६७॥**

**अन्वयः**

**सदाध्वगः भास्करः क्षोणिरेणुमिषतः पश्चिमाद्रिविपमस्थलीभुवां पूरणार्थम् इव स्यन्दने मृदः सग्रह रचयति स्म ।**

**व्याख्या**

सदा निरन्तरमध्वनि मार्गे गच्छतीति सदाध्वग सदैव गमनशील पान्थ इत्यर्थ । अध्वनीनोऽध्वगोऽध्वन्य पान्थ पथिक इत्यपि' इत्यमर । भास्कर सूर्य क्षोणे पृथिव्या रेणुर्धूलिस्तस्य मिषतो व्याजात् पृथ्वीधूलिव्याजात् पश्चिमाद्रि पश्चिमपर्वतस्तस्य विषमा उन्नतानता स्थल्यो भूमिभागास्तासामस्ताचलस्थितगर्ताना पूरणार्थमिव भरणार्थमिव समीकरणार्थमित्यर्थ । स्यन्दने स्वरथे मृदो मृत्तिकायास्सग्रहमेकत्रीकरण रचयति स्म सम्पादयति स्म । अत्रोत्प्रेक्षालङ्कार. ।

**भाषा**

सदैव चलते रहने वाला सूर्य, पृथ्वी की धूलि के बहाने से मानो पश्चिमाचल अर्थात् अस्ताचल की ऊची नीची जमीन को भर कर समथल बनाने के लिये अपने रथ पर मिट्टी एकत्रित कर रहा था।

**नन्दनद्रुमनिकुञ्जपुञ्जितैः पांसुभिः कुसुमधूलिवासितैः ।**
**चौर्यकेलिशयनोपयोगतस्तुष्यति स्म सुरपांसुलाजनः ॥६८॥**

**अन्वयः**

**सुरपांसुलाजनः कुसुमधूलिवासितैः नन्दनद्रुमनिकुञ्जपुञ्जितैः पासुभिः चौर्यकेलिशयनोपयोगतः तुष्यति स्म ।**

### व्याख्या

सुराणा देवाना पासुलाजन स्वैरविहारिणीजन कुसुमाना पुष्पाणा धूलय पराग 'पराग सुमनोरज' इत्यमर । ताभिर्वासितास्सुरभीकृतास्तै पुष्परेणु-सुरभीकृतैर्नन्दनस्येन्द्रवनस्य द्रुमा वृक्षास्तेषा निकुञ्जा लतादिपिहितोदराः 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमर । तेषु पुञ्जिता एकत्री-भूतास्तैर्नन्दनोद्यानवृक्षकुञ्जसञ्चितै पासुभि क्षितितलोत्थितरेणुभिश्चौर्येणाऽ-प्रशस्तरूपेण केलि क्रीडा चौर्यकेलि परपुरुषैस्सम परनारीणा रतोत्सवस्तदर्थं शयन शय्या तस्मिन् शयनरचनार्थमुपयोगस्तस्मात् चौर्यरतिशय्यानिर्माणार्थोप-योगात् तुष्यति स्म सन्तोष प्राप्नोति स्म । नन्दनोद्यानपर्यन्तमुत्थितायास्तदा-च्छाद्य स्थितायाश्च धूले कोमलत्वाच्चौर्यक्रीडारतसुरपासुलाजनस्य कोमलशय्या-प्राप्त्या सुमहान् सन्तोषो जात इति भाव । अत्रातिशयोक्तिरलङ्कार ।

### भाषा

स्वच्छन्द विहार करने वाला स्वर्गीय स्त्री समूह, पथ्वी से उठ कर नन्दन वन के कुञ्जो मे फैली हुई और पुष्परज से सुवासित धूलि के कारण (उस भूमि के नरम हो जाने से) छिपकर विषयादि करने मे कोमल शय्या के सदृश उस भूमि का उपयोग होने से, सन्तुष्ट हुआ ।

**वीक्ष्य पुष्पमधु पांसुदूषितं नन्दनं ध्रुवममुच्यतालिभिः ।**
**अन्धकारपटलच्छलेन यद् भृङ्गपूरितमिवाभवन्नभः ॥६९॥**

### अन्वयः

पासुदूषितं पुष्पमधु वीक्ष्य अलिभिः नन्दन ध्रुवम् अमुच्यत । यत् नभः अन्धकारपटलच्छलेन भृङ्गपूरितम् इव अभवत् ।

### व्याख्या

पासुभि क्षोणीसमुत्थितरजोभि 'रेणुर्द्वयो स्त्रिया धूलि पासुर्ना न द्वयो रज' इत्यमर । दूषित कलुषीकृत पुष्पाणा कुसुमाना मधु रस मकरन्द वीक्ष्य दृष्ट्वा-ऽलिभिर्भ्रमरै 'षट्पदभ्रमरालय' इत्यमर । नन्दन सुरेन्द्रोद्यान ध्रुव निश्चयेनाऽमुच्यत परित्यक्तम् । यद्यस्मात्कारणान्नभ आकाशमन्धकारस्य धूलिजनितध्वान्तस्य पटल समूहस्तस्य छलेन व्याजेन भृङ्गैर्भ्रमरै पूरित व्याप्तमिवाऽभवज्जातम् । कृष्णत्वादन्धकारे भृङ्गपटलस्योत्प्रेक्षणादुत्प्रेक्षा-लङ्कार ।

### भाषा

पृथ्वी से उठी धूलि से पुष्पो का मकरन्द, गन्दा हुआ देखकर भ्रमरो ने नन्दन वन को निश्चय ही त्याग दिया था। क्योंकि धूलिजनित अन्धकार के आधिक्य के मिष मे आकाश मानो भौरा मे छाया हुआ था। अर्थात् धूलि जनित कृष्णवर्ण अन्धकार मानो भ्रमरगण के भारे ही थ।

**जैत्रवाजिपृतना-खुरक्षत-क्षोणिधूलिपटलीभिरध्वसु ।**
**तद्बलस्य सुगमत्वमागमन् पूरितानि विषमस्थलान्यपि ॥७०॥**

### अन्वयः

अध्वसु जैत्रवाजिपृतनाखुरक्षोणिधूलिपटलीभिः पूरितानि विषमस्थलानि अपि तद्बलस्य सुगमत्वम् आगमन्।

### व्याख्या

अध्वसु मार्गेषु जैत्रा जयशीला 'जैत्रस्तु जेता योऽगच्छत्यल विद्विषत प्रति' इत्यमर। या वाजिनामश्वाना पृतना सेना 'पृतनाऽनीकिनी चमू' इत्यमर। तासा खुरै शफै क्षता विदारिता क्षोणि पृथ्वी तस्या धूलयो रजासि तासा पटलीभिस्समुहैर्जयनशीलाश्वसेनाशफविदारितभूमिमर्मुत्थितरजस्समूहै पूरितानि व्याप्तानि समीकृतानीत्यर्थ। विषमस्थलान्युच्चावचस्थानान्यपि तस्य चोलराजस्य बल सैन्य तस्य तद्बलस्य सुगमत्व सुखपूर्वकगमनार्हत्वमागमन् प्रापु। मार्गेषु तत्सेनाया अनायासेन गमनाय सेनाश्वखुरविदारितपृथ्वीरजोभिर्विषमस्थलानि पूरितानीति भाव। अत्र समाधिर्नामाऽलङ्कार। "समाधि सुकरे कार्ये दैवाद्वस्त्वन्तरागमात्" इति लक्षणात्।

### भाषा

मार्गों मे, विजयी घोडो की सेनाओं के खुरो म खुदी भूमि के धूलि समूहो से भरी गई हुई नीची ऊची जमीन, समथल होकर, चोल राजा की सेना के सुगमता से चलने के काम मे आई।

**चेतसोऽपि दधतीरलङ्घ्यतां लङ्घयद्भिरवटस्थली भुवः।**
**तस्य वाजिभिरजायत क्षितिर्भ्रान्तवातहरिणेव सर्वतः ॥७१॥**

**अन्वयः**

चेतसः अपि अलङ्घ्यता दधतीः अवटस्थलीभुवः लङ्घयद्भिः तस्य वाजिभि॰ क्षितिः सर्वतः भ्रान्तवातहरिणा इव अजायत।

**व्याख्या**

चेतसोऽपि चित्तस्याऽपि 'चित्तन्तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर। अलङ्घ्यतामप्राप्यता पार गन्तुमशक्यतामित्यर्थ। दधतीर्धारयतीरवटा गर्ता 'गर्तावटौ भुवि श्वभ्रे' इत्यमर। तेषा स्थलीभुवस्ता गर्तबहुला भूमीर्लङ्घयद्भि पार गच्छद्भिस्तस्य चोलराजस्य वाजिभिरश्वै क्षिति पृथ्वी सर्वत सर्वत्र भ्रान्ता भयाच्चकिता वातहरिणा वातमृगा 'वातप्रमीर्वातमृग कोकस्त्वीहामृगो वृक' इत्यमर। यस्या सेव निजस्थानपरिभ्रष्ट-भयचकितवातमृगयुक्तेवाऽराजत शुशुभे। अत्रोत्प्रेक्षालङ्कार।

**भाषा**

मन से भी लाघने की कल्पना न की जाने योग्य ऊबड खाबड जमीन को लाघने वाले उस चोलराज के घोडो से मानो पृथ्वी चारो ओर घबडाए हुए वातमृगो से युक्त शोभित हो रही थी।

**तेन सैन्यधनुषां शिलीमुख-ज्यालताप्रणयिनां विभूतिभिः।**
**तत्र तत्र विजयश्रियः कृते केलिकाननमिव व्यधीयत ॥७२॥**

**अन्वयः**

तेन शिलीमुखज्यालताप्रणयिनां सैन्यधनुषा विभूतिभिः विजयश्रियः कृते तत्र तत्र केलिकाननम् इव व्यधीयत।

**व्याख्या**

तेन चोलराजेन शिली शल्य मुखेऽग्रे येषा ते शिलीमुखा बाणा भ्रमराश्च 'अलिबाणौ शिलीमुखौ' इत्यमर। ज्यालताश्च मौर्वीरूपलताश्च तासा प्रणयिन स्नेहिन सम्बन्धिनस्तेषा, सैन्याना चमूना धनुषि चापा प्रियालवृक्षाश्च 'धनु प्रियाले ना न स्त्री राशिभेदे शरासने' इत्यमर। तेषा विभूतिभि समृद्धिभिर्विजयश्रियो विजयलक्ष्म्या कृतेऽर्थे तत्र तत्र तत्तत्स्थाने केलिकानन क्रीडोद्यानमिव व्यधीयत रचितम्। चोलराजेन बाणज्यालतासम्बन्धिसैन्यचापप्रतापैस्तत्र तत्र

विजय प्राप्य विजयलक्ष्म्या कृते विजयप्राप्तिस्थानेषु शान्ति प्रस्थाप्य क्रीडोद्यान-मिव रचितम्। पक्षे भ्रमरज्यारूपलताप्रणयिप्रियालवृक्षाणा समृद्धिभिस्तेन राजलक्ष्म्या कृते क्रीडोद्यानमिव रचितमिति भाव । श्लेषानुप्राणितोत्प्रेक्षा-लङ्कार ।

### भाषा

चोल देश के राजा ने बाण तथा मोर्वी से सम्बन्धरखने वाले सेना के धनुषो के प्रभाव से जहा तहाँ शान्ति स्थापन कर मानो विजयलक्ष्मी के सैल सपाटे के लिये बाग बना दी थी। पक्ष मे भोरे और लता से प्रेम करने वाले प्रियाल वृक्षो के आधिक्य से मानो विजयलक्ष्मी के लिये जहा तहा विहार करने के लिये बाग बना दी थी।

**अप्रयाणरहितैः स पार्थिवः प्राप कैरपि दिनैस्तरङ्गिणीम् ।**
**कार्यजातमसमाप्य धीमतां निद्रया परिचयोऽपि कीदृशः ॥७३॥**

### अन्वय.

सः पार्थिवः अप्रयाणरहितैः कैः अपि दिनैः तरङ्गिणीं प्राप। धीमतां कार्यजातम् असमाप्य निद्रया परिचयः अपि कीदृशः।

### व्याख्या

स पार्थिवश्चोलदेशनृपोऽप्रयाण विश्रामस्तेन रहिता हीनास्तैर्विश्रान्तिरहितै कैरपि कैश्चिदेव दिनैर्दिवसैस्तरङ्गिणीं तुङ्गभद्रानदी प्राप सप्राप्त । धीमता बुद्धिमता जनाना कार्यजात कार्यसमूहमसमाप्य परिपूर्णमकृत्वा निद्रया विश्रामेण परिचयोऽपि सम्बन्धोऽपि कीदृशो भवति । न भवतीत्यर्थ । बुद्धिमन्तो विनैव कार्यसमाप्ति विश्राम नाऽऽश्रयन्तीति भाव । पूर्वार्द्धस्योत्तरार्द्धेन समर्थनादर्थान्तर-न्यासालङ्कार ।

### भाषा

वह चोलदेश का राजा रास्ते मे कही बिना विश्राम लिए कुछ ही दिनो मे तुङ्गभद्रा नदी के पास पहुच गया। बुद्धिमान् लोगो को बिना कार्य समाप्त किये निद्रा का परिचय कैसा ? अर्थात् बुद्धिमान् लोग बिना सम्पूर्ण कार्य पूरा किए विश्राम नही लेते।

**रञ्जितः परिजनोऽस्य शीतल-स्वच्छया सपदि तुङ्गभद्रया ।**
**आगताः किमपि पृष्ठतस्तु ये पङ्कशेषमलभन्त ते जलम् ॥७४॥**

**अन्वयः**

अस्य परिजनः सपदि शीतलस्वच्छया तुङ्गभद्रया रञ्जितः । ये तु किम् अपि पृष्ठतः आगताः ते पङ्कशेष जलम् अलभन्त ।

**व्याख्या**

अस्य चोलदेशाधिपस्य परिजनोऽनुचरवर्गस्सपदि तत्क्षण 'सद्य सपदि तत्क्षणे' इत्यमर । शीतला शीता चाऽसौ स्वच्छा निर्मला च तया शीतलनिर्मलाम्बु-युक्तया तुङ्गभद्रया नद्या रञ्जित प्रसन्नो जात । ये तु जना किमपि पृष्ठत किञ्चित्कालानन्तरमागतास्तुङ्गभद्रा प्राप्तास्ते पङ्क एव शेषो यस्मिँस्तत्पङ्कशेष कर्दमावशिष्ट जल सलिलमलभन्त प्राप्तवन्त । अनेन चोलराजेन सहाऽगतस्य जनसमूहस्याऽऽधिक्य सूचितम् ।

**भाषा**

उस चोल राजा के नौकर चाकर शीघ्र ही ठढे और निर्मल जल वाली तुङ्ग भद्रा नदी से प्रसन्न हो गए । अर्थात् तुङ्गभद्रा नदी के शीतल और निर्मल जल मे स्नान आदि कर उस राजा के नौकरो को बहुत आनन्द मिला । परन्तु जो लोग कुछ देर करके आए उनको गदला पानी ही मिला । अर्थात् उस राजा के साथ मे अत्यधिक नौकर चाकर आदि आए थे ।

**दक्षिणार्णवतटादुपागतैस्तद्द्रजैः पिशुनतां गतैरिव ।**
**शीघ्रमक्रियत मध्यवर्तिभिः सा प्रतीपगतिरब्धिवल्लभा ॥७५॥**

**अन्वयः**

सा अब्धिवल्लभा दक्षिणार्णवतटात उपागतैः मध्यवर्तिभिः तद्द्रजैः पिशुनता गतै इव शीघ्रं प्रतीपगतिः अक्रियत ।

**व्याख्या**

सा प्रसिद्धा अब्धेस्समुद्रस्य वल्लभा प्रिया समुद्रसीमन्तिनी तुङ्गभद्रा नदी दक्षिणोऽर्णवस्समुद्रस्तस्य तटात्तीरादवाचीनसमुद्रकूलादुपागतैस्समागतैर्मध्यवर्ति-

भिर्नदीजलमध्यावस्थितैस्तस्य चोलदेशनृपस्य गजा हस्तिनस्तै पिशुनता दुर्जनता गतै प्राप्तैरिव शीघ्र द्रुत प्रतीपा प्रतिकूला गतिर्गमन यस्यास्सा प्रतीपगति प्रतिकूलगामिन्यक्रियत सम्पादिता। यथा केचन पिशुना अन्योन्य भेदमुत्पाद्यो-भयथाऽपि मध्यस्था सन्त सीमन्तिनी स्वपत्युर्विपरीतमार्गगामिनी कुर्वन्ति तथैव पिशुनतामिव गतैस्तैर्गजैर्नदीमध्यस्थै प्रवाहावरोधेन तुङ्गभद्रा समुद्राद्विपरीत-देशवाहिनी कृतेति भाव । गजेषु दुर्जनत्वस्योत्प्रेक्षणादुत्प्रेक्षा । गजव्यवहारे दुर्जनव्यवहारारोपात्समासोक्तिश्च । अतस्तयोस्सकर ।

## भाषा

जिस प्रकार स्त्री पुरुष मे, दोनो ओर से मध्यस्थ बन कर, परस्पर भेद भाव उत्पन्न करने वाले दुर्जन चतुर लोग शीघ्र ही स्त्री को पति के प्रतिकूल बना देते है वैसे ही इस चोल राजा के दक्षिण समुद्रतट से आए हुए हाथियो ने, तुङ्गभद्रा नदी के बीच मे खडे होकर, प्रवाह के विपरीत बहने से मानो दुर्जनता को प्राप्त भए के समान, तुङ्गभद्रा नदी को समुद्र से विपरीत दिशा मे बहने वाली बना दिया ।

**सिन्धुतीरनिलयानुरोधतस्तत्तथा बलमवाप दीर्घताम् ।**
**अन्तरक्षपितरात्रिभिर्जनैः प्राप्यते स्म नृपमन्दिरं यथा ॥७६॥**

## अन्वयः

तत् बल सिन्धुतीरनिलयानुरोधतः तथा दीर्घताम् अवाप यथा अन्तर-क्षपितरात्रिभिः जनैः नृपमन्दिर प्राप्यते स्म ।

## व्याख्या

तत् चोलराजस्य बल सैन्य सिन्धोस्तुङ्गभद्राया नद्यास्तीर तट तस्मिन्निलयो निवासस्तस्याऽनुरोधोऽनुवर्तन 'अनुरोधोऽनुवर्तनम्' इत्यमर । तस्मात्तुङ्गभद्रा-नदीतटनिवासानुवर्तनात्तथा तादृशीमपूर्वामतिमहतीं दीर्घता विशालतामवाप प्राप्त यथा येन प्रकारेणाऽन्तरे मध्ये 'अन्तरमवकाशावधिपरिधानान्तर्धिभेद तादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽतरात्मनि च' इत्यमर । क्षपिता यापिता रात्रिर्निशा यैस्ते तैर्मार्गगमनेनैव व्यतीतरात्र्यवच्छिन्नकालैर्जनै प्रजाभि-र्नृपस्य राज्ञो मन्दिर राजभवन प्राप्यते स्म गम्यते स्म । तीरभूमेस्सकीर्णत्वा-त्तीरे सेनाया बहुदूरपर्यन्त श्रेणिबद्धनिवासेन पश्चादागता ये केचन राजमन्दिर

जिगमिषवस्ते नदीतीरमार्गे सम्पूर्णैकरात्रिसमय व्यतीत्यैव राजभवन प्राप्ता इति सेनाया विशालत्व दूरदेशव्यापित्वञ्च सूचितम् ।

### भाषा

चोलराज की उस सेना के तुङ्गभद्रा नदी के किनारे पर ही डेरा रखने के अनुरोध से, (किनारे की सकीर्णता से कतार मे बहुत दूर तक टिकी होने से) वह सेना इतनी अधिक विशाल व दूरदेश व्यापी हो गई थी कि राजभवन मे जाने वाले सम्पूर्ण रात भर का समय चलने मे लगाने पर ही, राज भवन मे पहुँच पाते थे ।

**चोलकेलिसलिलावगाहन-प्राप्तभूरिघनसारपाण्डुरा ।**
**सा हिमाचलविटङ्कनिर्गता जाह्नवीव तटिनी व्यराजत ॥७७॥**

### अन्वयः

चोलकेलिसलिलावगाहनप्राप्तभूरिघनसारपाण्डुरा सा तटिनी हिमाचलविटङ्कनिर्गता जाह्नवी इव व्यराजत ।

### व्याख्या

चोलस्य चोलदेशनृपतेश्चोलजनस्य च यत्केलिसलिलावगाहन क्रीडार्थजलस्नान तेन प्राप्तो लब्धो भूरि घनसार प्रचुरकर्पूरस्तेन पाण्डुरा शुभ्रवर्णा सा प्रसिद्धा तटिनी तुङ्गभद्रानदी 'तरङ्गिणी शैवलिनी तटिनी ह्लादिनी धुनी' इत्यमर । हिमाचलस्य तुषाराद्रेर्विटङ्क शिखर 'कपोतपालिकायान्तु विटङ्क पुनपुसकम्' इत्यमर । तस्मान्निर्गता निस्सृता जाह्नवीव गङ्गेव व्यराजत शुशुभे । कर्पूरसमिश्रणात्तुङ्गभद्राया कृष्ण जल गङ्गेव शुभ्र जातमिति भाव । विटङ्क कपोतपालिकावाचकमत्र लक्षणया शिखरवाचकमिति । अत्रोपमालङ्कार ।

### भाषा

चोलदेशीय राजा और प्रजा के जलक्रीडा सहित स्नान करने से, उनके शरीर मे पोते हुए कपूर से श्वेतवर्ण को प्राप्त तुङ्गभद्रानदी, हिमालय के शिखरो से निकली गङ्गानदी के समान शोभित हुई ।

**तत्र दक्षिणतटे कृतस्थितिः कुन्तलेन्दुरवलोक्य तद्बलम् ।**
**बाहुमाहवसहस्रदीक्षितं वन्दते स्म परिचुम्बति स्म च ॥७८॥**

### अन्वयः

तत्र दक्षिणतटे कृतस्थितिः कुन्तलेन्दुः तद्बलम् अवलोक्य आहवसहस्र-दीक्षित बाहुं वन्दते स्म परिचुम्बति स्म च ।

### व्याख्या

तत्र तस्मिन् दक्षिणतटे तुङ्गभद्राया दक्षिणनीरे कृता सम्पादिता स्थिति-र्निवासो येन स कुन्तलेन्दु कुन्तलदेशचन्द्रो विक्रमाङ्कदेवस्तस्य चोलराजस्य बल सैन्यमवलोक्य दृष्ट्वाऽऽहवाना युद्धाना सहस्र तस्मिन् दीक्षित सजातदीक्ष युद्धसह-स्रकृतानुभव बाहु स्वभुज वन्दते स्म प्रणमति स्म परिचुम्बति स्म च वदनसयुक्त करोति स्म च । स्वबाहोर्महती श्लाघा कृतेति भाव ।

### भाषा

तुङ्गभद्रा नदी के दक्षिण किनारे पर निवास करने वाले कुन्तलेन्दु विक्रमाङ्क-देव ने चोल देश के राजा की सेना को देखकर हजारो युद्धो का अनुभव करने वाली अपनी भुजा को प्रणाम किया और चूम लिया । अर्थात् अपनी भुजा का आदर व प्रेम किया ।

**द्राविडोऽपि नृपतिः कुतूहलाद्वीक्ष्य तत्कटकमुत्कटद्विपम् ।**
**राज्यमुद्धृतमनर्थपङ्कतः कन्यकावितरणादमन्यत ॥७६॥**

### अन्वयः

द्राविडः नृपतिः अपि उत्कटद्विप तत्कटकं कुतूहलात् वीक्ष्य कन्यका-वितरणात् राज्यम् अनर्थपङ्कतः उद्धृतम् अमन्यत ।

### व्याख्या

द्राविडो द्रविडदेशीयो नृपतिश्चोलदेशाधिपो वीरराजेन्द्रनामको भूपतिरप्युत्कटा मदान्धा द्विपा गजा यस्मिँस्तन्मदमत्तगजप्रचुर तस्य विक्रमाङ्कदेवस्य कटक सैन्य कुतूहलात्कौतुकात् 'कौतूहल कौतुकञ्च कुतुकञ्च कुतूहलम्' इत्यमर । वीक्ष्याऽवलोक्य कन्यकाया. स्वात्मजाया वितरण दान तस्मात् स्वसुताप्रदानात् राज्य स्वचोलराज्यमनर्थ एवाऽनिष्टमेव पङ्क. कर्दमस्तस्मादनिष्टकर्दमत उद्धृतं बहिर्निस्सारितममन्यत विज्ञातवान् ।

**भाषा**

द्रविडदेश के चोलवशीय राजा वीरराजेन्द्र ने भी कौतुक से विक्रमाङ्कदेव की मदोन्मत्त हाथियो से युक्त सेना को देखकर कन्या प्रदान से अनिष्ट रूपी कीचड से अपने राज्य का उद्धार हुआ ऐसा माना ।

**प्रेषितैरथ तयोः परस्परं प्रेम्णि योग्यपुरुषैः प्रपञ्चिते ।**
**संगमः सकललोकसंमतो जायते स्म गुरुपुष्ययोरिव ॥८०॥**

**अन्वयः**

अथ प्रेषितैः योग्यपुरुषैः परस्पर प्रेम्णि प्रपञ्चिते तयोः गुरुपुष्ययोः इव सकललोकसम्मतः सगमः जायते स्म ।

**व्याख्या**

अथ विक्रमाङ्कदेववीरराजेन्द्रयोस्तुङ्गभद्रातटप्राप्त्यनन्तर प्रेषितैरुभयपक्षात्प्रापितैर्योग्यपुरुषैश्चतुरजनै परस्पर मिथ प्रेम्णि स्नेहे प्रपञ्चिते सम्वर्धिते सति तयोर्विक्रमाङ्कदेववीरराजेन्द्रयोर्गुरुपुष्ययोर्बृहस्पतिपुष्यनक्षत्रयोरिव सकललोकैस्सम्पूर्णजनैस्सम्मतस्समर्थित सगम सम्मेलन जायते स्म जातम् । [१]ज्यौतिषशास्त्रे गुरुपुष्ययोग. प्रशस्यत्वेन वर्णित । सर्वे जना तद्योगस्य शुभफलप्रदत्वञ्चाऽऽमनन्ति । अत्रोपमालङ्कार·

**भाषा**

विक्रमाङ्कदेव और वीरराजेन्द्र चोल के तुङ्गभद्रानदी के तटपर आ जाने पर, दोनो ने भेजे हुए कार्यकुशल पुरुषो के परस्पर वार्तालाप से प्रेमवृद्धि होने पर, सब लोगो को अभीष्ट गुरुपुष्ययोग के समान उनदोनो का योग अर्थात् मिलाप हुआ ।

**एष स प्रियतमः श्रियः स्वयं कर्मणा मम शुभेन दर्शितः ।**
**इत्युदश्रुनयनः प्रभावतः कुन्तलक्षितिपतेरमंस्त सः ॥८१॥**

---

[१] गुरुपुष्ययोग पञ्चसख्याकामृतसिद्धियोगेष्वेकतम ।
यदि विष्टिर्व्यतीपातो दिन वाऽप्यशुभ भवेत् ।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥
मुहूर्तचिन्तामणिटीकाया पीयूषधाराया दीपिकाकारस्य वचनम् ।

**अन्वयः**

सः कुन्तलक्षितिपतेः प्रभावतः एषः स्वय सः श्रियः प्रियतमः मम शुभेन कर्मणा दर्शितः इति उदश्रुनयनः सन् अमस्त ।

**व्याख्या**

स वीरराजेन्द्रचोल कुन्तलक्षितिपते कुन्तलदेशाधिपस्याऽऽहवमल्लदेवस्य प्रभावत प्रतापस्य माहात्म्यादेष विक्रमाङ्कदेव स्वय साक्षात् स प्रसिद्ध श्रियो लक्ष्म्या प्रियतमो विष्णुर्मम शुभेन कर्मणा मम पुण्येन दर्शित प्रत्यक्षीकृत इति पूर्वोक्तमुद्गतान्युत्थितान्यश्रूणि हर्षाश्रूणि ययोस्ते उदश्रुणी नयने नेत्रे 'लोचन नयन नेत्रमीक्षण चक्षुरक्षिणि' इत्यमर । यस्य स प्रेमाश्रुपूर्णनयनस्सन्नमस्त ज्ञातवान् । वैदिकपद्धत्त्या कन्याप्रदान विष्णुरूपिणे वरायैव क्रियत इति तस्य विष्णुस्वरूपत्वमङ्गीकृतमिति भाव ।

**भाषा**

वीरराजेन्द्र चोल ने, कुन्तलराज आहवमल्लदेव के प्रभाव के माहात्म्य से यह विक्रमाङ्कदेव साक्षात् लक्ष्मी का पति, मेरे पुण्य से मेरे दृष्टिगोचर कराया गया है ऐसा, आनन्द के आँसुओ को नेत्रो से वहाते हुए, माना ।

**पादयोः प्रणतये कृतोद्यमं तं मुदा द्रविडपार्थिवं ततः ।**
**विक्रमाङ्कनृपतिर्न्यवर्तयत् तस्य संभ्रमविशेषतोषितः ॥८२॥**

**अन्वयः**

ततः विक्रमाङ्कनृपतिः तस्य संभ्रमविशेषतोषितः (सन्) मुदा पादयोः प्रणतये कृतोद्यम त द्रविडपार्थिवं न्यवर्तयत् ।

**व्याख्या**

तत साक्षात्कारानन्तर विक्रमाङ्कनृपतिस्तस्य वीरराजेन्द्रचोलस्य सम्भ्रम-विशेषेण हर्षजनितविशिष्टत्वरया समादरविशेषेण वा तोषित प्रसादितस्सन् मुदा हर्षेण पादयोर्विक्रमाङ्कदेवचरणयो प्रणतये प्रणामाय कृतस्सम्पादित उद्यम उद्योगो येन स त कृतोत्साह त प्रसिद्ध द्रविडपार्थिव द्रविडनृप वीरराजेन्द्र न्यवर्तयत् न्यवारयन्निषेधति स्मेत्यर्थ ।

### भाषा

सामना होने के अनन्तर विक्रमाङ्कदेव ने, वीरराजेन्द्र चोल के हर्ष जनित त्वरा से या आदर से प्रसन्न होकर, आनन्द से अपने पाओ पर पड कर प्रणाम करने का उत्साह दिखाने वाले द्रविड राजा को वैसा करने से रोका।

**किं करोषि वयसाधिकेन मे क्षिप्यतां शिरसि पादपल्लवः।**
**अद्यजातमपि मूर्ध्नि धार्यते किं न रत्नममलं वयोधिकैः ॥८३॥**

### अन्वयः

**अधिकेन वयसा कि करोषि, मे शिरसि पादपल्लवः क्षिप्यताम्। कि वयोधिकैः अद्यजातम् अपि अमल रत्न मूर्ध्नि न धार्यते।**

### व्याख्या

अधिकेन त्वदपेक्षयाऽधिकेन वयसाऽवस्थया वार्धक्यविचारेणेत्यर्थ। कि करोषि कथ निषेधसि। मे मम शिरसि मूर्ध्नि पादश्चरण एव पल्लव कोमल-पत्र चरणपल्लव क्षिप्यताम् निधीयताम्। कि कथ वयसाऽवस्थयाऽधिका. श्रेष्ठास्तैर्वयोवृद्धैरद्यजातमद्यैवोत्पन्न शाणादिना सज्जीकृत नवीनमित्यर्थ। अप्यमल निर्मल रत्न मणिर्मूर्ध्नि शिरसि न धार्यते नोह्यते, अपि तु धार्यत एव। दृष्टान्तालङ्कार।

### भाषा

मै अवस्था मे बडा हूँ ऐसा विचार कर क्यो मुझे चरण पर पडने से रोकते हो। मेरे मस्तक पर अपना चरणपल्लव रक्खो अर्थात् मुझे चरण पर पडकर प्रणाम करने दो। क्या वयोवृद्ध आज ही प्राप्त अर्थात् नवीन निर्मल मणि को अपने मस्तक पर नही धारण करते अर्थात् करते ही है।

**इत्युदीरितवता निरन्तरं तेन हर्षजलपूर्णचक्षुषा।**
**कुन्तलेन्दुरगमन्मुदं परां द्राविडक्षितिपमालिलिङ्ग च ॥८४॥**

### अन्वयः

**इति उदीरितवता निरन्तरं हर्षजलपूर्णचक्षुषा तेन कुन्तलेन्दुः परां मुदम् अगमत् द्राविडक्षितिपम् आलिलिङ्ग च।**

### व्याख्या

इति पूर्वोक्तमुदीरितवतोक्तवता निरन्तरमविच्छिन्न हर्षजलेन प्रेमाश्रुणा पूर्णे व्याप्ते चक्षुषी नेत्रे यस्य तेनाऽऽनन्दाश्रुपरिप्लुतनयनेन तेन द्रविडाधिपेन कुन्तलेन्दु कुन्तलदेशचन्द्रो विक्रमाङ्कदेव परामुत्कृष्टा मुद हर्षमगमत् प्राप्तो द्राविडक्षितिप द्रविडदेशाधिप वीरराजेन्द्रमालिलिङ्ग च आश्लिष्टवांश्च । प्रेम्णा तस्याऽऽलिङ्गनञ्चकारेत्यर्थ ।

### भाषा

पूर्वोक्त बाते कहने वाले और निरन्तर प्रेमाश्रुओ से भरे नेत्र वाले द्रविड देश के राजा से कुन्तलदेश का चन्द्र विक्रमाङ्कदेव बहुत प्रसन्न हुआ और उसको गले लगा लिया ।

**अर्धासनप्रणयपूर्णमनोरथोऽथ**
**श्रीकुन्तलेश्वरमवोचत चोलभूपः ।**
**प्रत्यादिशन्दशनचन्द्रिकया किरीट-**
**रत्नातपं सदसि राजपरम्पराणाम् ॥८५॥**

### अन्वयः

अथ अर्धासनप्रणयपूर्णमनोरथः चोलभूपः सदसि दशनचन्द्रिकया राजपरम्पराणां किरीटरत्नातप प्रत्यादिशन् (सन्) श्रीकुन्तलेश्वरम् अवोचत ।

### व्याख्या

अथ परस्परालिङ्गनानन्तर (सिंहासने) अर्धासनस्य प्रणयेन कृपयाऽर्धासनप्रदानकृपयेत्यर्थ । पूर्णस्सफलो मनोरथो वाञ्छितार्थो यस्य स चोलभूपश्चोलनृपो वीरराजेन्द्र सदसि सभाया 'समज्या परिषद्गोष्ठी सभासमितिससद । आस्थानी क्लीबमास्थान स्त्रीनपुसकयो सद' इत्यमर । दशनाना दन्ताना चन्द्रिका प्रकाशस्तया दन्तकान्त्या राजपरम्पराणा नृपश्रेणीना किरीटे मुकुटे रत्नानि मणयस्तेषामातप प्रकाश प्रत्यादिशन् निराकुर्वन् सन् श्रीकुन्तलेश्वर विक्रमाङ्कदेव प्रत्यवोचतोवाच । एतेन द्राविडेश्वरस्य स्वात्मनि गौरवविशेषो ध्वन्यते । वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौग' । इति लक्षणात् ।

## भाषा

परस्पर आलिङ्गन के पश्चात् आधे सिहासन पर बैठाने की कृपा से पूर्ण मनोरथ चोलराज वीरराजेन्द्र ने सभा मे अपने दाँतो के प्रकाश से अन्य राजाओ के मुकुटमणियो के प्रकाश को निस्तेज करते हुए, कुन्तलेश्वर विक्रमाङ्कदेव से कहा ।

**अङ्गानि चन्दनरसादपि शीतलानि**
**चन्द्रातपं वमति बाहुरयं यशोभिः ।**
**चालुक्यगोत्रतिलक क्व वसत्यसौ ते**
**दुर्वृत्तभूपपरितापगुरुः प्रतापः ॥८६॥**

## अन्वयः

अङ्गानि चन्दनरसात् अपि शीतलानि (सन्ति)। अय बाहुः यशोभिः चन्द्रातप वमति। चालुक्यगोत्रतिलक! ते दुर्वृत्तभूपपरिताप-गुरुः असौ प्रतापः क्व वसति ।

## व्याख्या

अङ्गानि ते शरीरावयवाश्चन्दनस्य श्रीखण्डस्य रसो द्रवस्तस्मादपि शीतलानि शीतानि सन्ति। अय प्रसिद्धो बाहुर्भुजो यशोभि कीर्तिभिश्चन्द्र-स्येन्दोरातप ज्योत्स्ना चन्द्रकिरणसमानशीतकान्ति वमति प्रकटयति। हे चालुक्यगोत्रतिलक! हे चालुक्यवशविभूषण! ते तव दुर्वृत्ताना दुश्चरित्राणां भूपाना राज्ञा परितापस्य सतापस्य गुरुराचार्यो महीयाँश्चाऽतिशयसताप-कारीत्यर्थ। अथवा परितापेन गुरु प्रबल प्रताप.। 'स प्रभाव प्रतापश्च यत्तेज कोशदण्डजम्' इत्यमर। क्व कुत्र वसति। तवाऽऽलिङ्गनेन तवाऽव-यवेषु सर्वत्र शैत्यमेवाऽनुभूतम्। तव शत्रुदाहकर तेजस्तव शरीरे कुत्र वसतीति तु न ज्ञायते इति भाव। अत्रैवविधशीतलाङ्गात्तादृशप्रतापोदयो विस्मयावह इति विषमालङ्कार ।

## भाषा

हे चालुक्य कुलभूषण! तुम्हारे शरीर के विभिन्न अवयव, चन्दन के रस से भी शीतल हैं। तुम्हारी भुजा (श्वेत) कीर्तियो के कारण से चादनी के

ऐसी ठडी कान्ति फैलाती है । तुम्हारा दुश्चरित राजाओ को विशेष तपाने वाला वह प्रताप तुम्हारे शरीर मे कहाँ रहता है ?

**धैर्यस्य धाम निधिरद्भुतचेष्टितानां**
**दृष्टान्तभूरनवधेः करुणारसस्य ।**
**त्वं वेधसा विरचितः सकलादिराज-**
**निर्माणसारपरमाणुसमुच्चयेन ॥८७॥**

**अन्वयः**

वेधसा सकलादिराजनिर्माणसारपरमाणुसमुच्चयेन त्व धैर्यस्य धाम, अद्भुतचेष्टिताना निधिः अनवधेः करुणारसस्य दृष्टान्तभूः विरचितः ।

**व्याख्या**

वेधसा ब्रह्मणा सकलास्समस्ता आदिराजानो मान्धातृदिलीपप्रभृतय आदिनृपतयस्तेषा निर्माणस्य रचनाया सारभूता श्रेष्ठाशा ये परमाणवस्सूक्ष्मतमभागास्तेषा समुच्चयेन समूहेन सर्वादिमान्धातृप्रभृतिनृपरचनासाराशरूपसूक्ष्मतमभागकदम्बेन त्व भवान् धैर्यस्य गाम्भीर्यस्य धाम कुलगृहमद्भुतान्याश्चर्योत्पादकानि चेष्टितानि व्यापारास्तेषा निधिराकरोऽनवधेर्निर्मर्यादस्य करुणारसस्य दयार्द्रभावस्य दृष्टान्तभूर्दृष्टान्तभूमिरुदाहरणमित्यर्थ । विरचितो निर्मित । अत्र राज्ञि धामनिध्यादेरभेदारोपान्मालारूपकालङ्कार ।

**भाषा**

ब्रह्मा ने समग्र प्राचीन मान्धाता दिलीप आदि राजाओ को वनाने के सारभूत परमाणुओ के सग्रह से गाम्भीर्य के घर, आश्चर्यजनककार्यों का खजाना और असीम दयार्द्रभाव के उदाहरण स्वरूप, आप की रचना की ।

**कन्या विभूषणमियं भुवनत्रयस्य**
**सिंहासनं विपुलमेतदयं ममात्मा ।**
**व्यस्तं समस्तमथवा तदिदं गृहाण**
**पुण्यैर्मम प्रणयमेतु यशःपताका ॥८८॥**

### अन्वयः

इयं भुवनत्रयस्य विभूषणं कन्या, एतत् विपुल सिहासनम्, अय मम आत्मा। तत् इदं व्यस्तम् अथवा समस्त गृहाण। मम पुण्यैः यशः-पताका प्रणयम् एतु।

### व्याख्या

इय पुरतो दृश्यमाना भुवनाना लोकाना त्रय तस्य त्रिभुवनस्य विभूषण-मलङ्कार कन्या ममात्मजा, एतदग्रे वर्तमान विपुल विशाल सिंहासन राज्या-धिष्ठातृसमुपवेशनस्थान, अय प्रत्यक्षदृश्यो मम मदीय आत्मा शरीरावच्छिन्न आत्मा। तदिद पूर्वोक्त वस्तुजात व्यस्तमेकैकमथवा पक्षान्तरे समस्तं सर्वं मिलित गृहाण स्ववशमानय। मम पुण्यैश्शुभकर्मजन्यादृष्टराशिभिर्यश पताका मम कीर्तिवैजयन्ती 'पताका वैजयन्ती स्यात्केतन ध्वजमस्त्रियाम्' इत्यमर.। प्रणयमेतु स्फुरतु।

### भाषा

तीनो लोको की विभूषणस्वरूप यह मेरी लडकी, यह विशाल राजसिंहासन और यह इस शरीर से आवृत मेरी आत्मा, इन सब वस्तुओ का एक एक करके अथवा इन सभी वस्तुओ का इकठ्ठा ही आप स्वीकार करे। मेरे पुण्यो से मेरी कीर्तिपताका प्रसन्नता पूर्वक फहराती रहे। अर्थात् मेरे पुण्यो से आपके सम्बन्ध से मेरा यश चिरस्थायी हो।

**कन्यान्तःपुरधाम्नि धैर्यनिधिना माधुर्यधुर्यैः पदै**
**रित्यादि द्रविडेश्वरेण निबिडप्रेम्णा मुहुर्व्याहृतः।**
**चोलीनां कुटिलासु कुन्तललतादोलासु लोलां दृशं**
**देवः सोऽथ विनोदयन्मुदमगाच्चालुक्यविद्याधरः ॥८६॥**

### अन्वयः

अथ कन्यान्तःपुरधाम्नि धैर्यनिधिना द्रविडेश्वरेण माधुर्यधुर्यैः पदैः इत्यादि निबिडप्रेम्णा मुहुः व्याहृतः सः चालुक्यविद्याधरः देवः चोलीनां कुटिलासु कुन्तललतादोलासु लोला दृशा विनोदयन् मुदम् अगात्।

## व्याख्या

अथाऽनन्तर कन्याया स्वात्मजाया अन्त पुरमवरोधन 'स्त्र्यगार भूभुजामन्त - पुर स्यादवरोधनम्' इत्यमर । एव धाम गृह तस्मिन् कन्यावरोधगृहे धैर्यस्य गाम्भीर्यस्य निधिराकरस्तेन महाधैर्यवता द्रविडेश्वरेण द्रविडाधिपेन वीरराजेन्द्रेण माधुर्याणा मधुरभावाना धुर्या धौरेया अग्रगण्या इत्यर्थ । 'धूर्वहे धुर्य धौरेय धुरीणा सधुरधरा' इत्यमर । तैर्विशेषमधुरै पदैश्शब्दैरित्यादि पूर्वोक्तमन्यच्च निबिडप्रेम्णा सान्द्रस्नेहेन मुहुर्वार वार व्याहृत कथित स प्रसिद्ध चालुक्यस्य चालुक्यवशस्य विद्याधर श्रेष्ठजनो देवो विक्रमाङ्कदेव 'नामैकदेशग्रहणे नामग्रहणमिति'। चोलीना चोलाङ्गनाना कुटिलासु वक्रासु कुन्तललतादोलासु केशवल्लीरूपान्दोलिकासु लोला चञ्चला दृश दृष्टि विनोदयन् व्यापारयन्मुदमानन्दमगात्प्राप । शार्दूलविक्रीडितच्छन्द । सूर्याश्वैर्यदि म सजौ सततगा शार्दूलविक्रीडितम् । रूपकमलङ्कार । 

## भाषा

इसके अनन्तर, कन्या के अन्त पुर मे, अत्यन्त धीर, द्रविड देश के राजा, वीरराजेन्द्र द्वारा, विशेष मधुर शब्दो मे बार २ घनिष्ट प्रेम से ऐसी २ बातो से सम्बोधित उस चालुक्यवश मे श्रेष्ठ, विक्रमाङ्कदेव ने चोलदेश की अङ्गनाओ के घुघराले केशलता रूपी झूलो पर अपनी चञ्चल नजर फेरते हुए, आनन्द प्राप्त किया । अर्थात् हवा से हिलने वाले घुघराले बालवाली अङ्गनाओ को देख कर उसे हर्ष हुआ ।

इति श्री त्रिभुवनमल्लदेव–विद्यापति–काश्मीरकभट्ट श्री बिल्हण विरचिते विक्रमाङ्कदेवचरिते महाकाव्ये पञ्चम सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाजबुधोत्तमात्समुदितः श्री विश्वनाथः सुधीः ।**
**चक्रे रामकुबेरपण्डितवरात्संप्राप्तसाहाय्यक-**
**टीकायुग्ममिदं रमाकरुणया सर्गे शुभे पञ्चमे ॥**

ॐ शान्ति शान्ति शान्ति ।



॥ श्रीः ॥

महाकवि श्री बिल्हण विरचितं

# विक्रमाङ्कदेवचरितम्

## षष्ठः सर्गः ।

**सह विभवभरेण तत्र पुत्रीं गुणनिधये नृपनन्दनाय दत्वा ।**
**कथमपि परिणेतुरभ्यनुज्ञामथ समवाप्य चचाल चोलराजः ॥१॥**

### अन्वयः

अथ चोलराजः तत्र गुणनिधये नृपनन्दनाय विभवभरेण सह पुत्रीं दत्वा कथमपि परिणेतुः अभ्यनुज्ञां समवाप्य चचाल ।

### व्याख्या

अथ विक्रमाङ्कदेवचोलराजयोस्समेलनानन्तरं चोलवंशस्य नृपो राजा वीर-राजेन्द्रस्तत्र तुङ्गभद्रातटे गुणानां शौर्यादिगुणानां निधिराकरस्तस्मै गुणाकराय नृपस्य राज्ञ आहवमल्लदेवस्य नन्दनाय पुत्राय विक्रमाङ्कदेवाय विभवस्य सम्पत्ते-र्भरस्समूहस्तेन समृद्धिराशिना सह साकं पुत्रीं स्वात्मजां दत्वा समर्प्य कथमपि केनाऽपि प्रकारेण परिणेतुर्विवाहकर्तुरभ्यनुज्ञामाज्ञां समवाप्य लब्ध्वा चचाल स्वराजधानीं प्रति प्रतस्थे । पुष्पिताग्रावृत्तम् । "अयुजि तयुगरेफतो यकारो युजि च न जौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ।

### भाषा

विक्रमाङ्कदेव और चोलराज से मिलाप होने के अनन्तर, चोलदेश के राजा ने तुङ्गभद्रा नदी के तट पर उस गुण की खान, राजपुत्र विक्रमाङ्कदेव को बहुत सी सम्पत्ति के साथ कन्या प्रदान कर, बड़ी कठिनता से विवाह करने वाले विक्रमाङ्कदेव की आज्ञा पाकर अपनी राजधानी की ओर प्रस्थान किया ।

**द्रविडनरपतेरदत्त वित्तं निरवधि कुन्तलनाथनन्दनोऽपि ।**
**यशसि रसिकतामुपागतानां तृणगणना गुणरागिणां धनेषु ॥२॥**

### अन्वयः

कुन्तलनाथनन्दनः अपि द्रविडनरपतेः निरवधि वित्तम् अदत्त । यशसि रसिकताम् उपागताना गुणरागिणां धनेषु तृणगणना ।

### व्याख्या

कुन्तलनाथस्याऽऽहवमल्लदेवस्य नन्दन पुत्रो विक्रमाङ्कदेवोऽपि द्रविडस्य द्रविडदेशस्य नरपते राज्ञश्चोलराजस्य नास्त्यवधिस्सीमा यस्य तन्निरवधि प्रभूत वित्त धनमदत्त दत्तवान् याचकेभ्य इत्यर्थ । यशसि कीर्तौ 'यश कीर्ति समज्ञा च' इत्यमर । रसिकतामानन्दानुभूतिमुपागताना प्राप्ताना गुणेषु सौजन्यादिगुणेषु रागिणोऽनुरागवन्तस्तेषा गुणस्नेहिना धनेषु वित्तेषु वित्तविषय इत्यर्थ । तृणस्य घासस्य 'शष्फ बालतृण घास' इत्यमर । इव गणना दृष्टिर्भवति । यशस्विना धन तृणवन्निर्मूल्यमिति भाव । पूर्वार्द्धस्योत्तरार्द्धेन समर्थनादर्थान्तरन्यासोऽलङ्कार ।

### भाषा

कुन्तलदेश के राजा आहवमल्लदेव के पुत्र विक्रमाङ्कदेव ने भी द्रविड राजा के अपरिमित वित्त को याचको को दे दिया । यश मे रसिकना रखने वाले गुणग्राही जन, धन को तृणवत् समझते है ।

**मुदितमनसि जातमानसिद्धौ गतवति तत्र गुणैकपक्षपाती ।**
**प्रतिपदमुदकण्ठत क्षितीन्दुः कुसुममृदूनि मनांसि निर्मलानाम् ॥३॥**

### अन्वयः

गुणैकपक्षपाती क्षितीन्दुः जातमानसिद्धौ मुदितमनसि तत्र गतवति (सति) प्रतिपदम् उदकण्ठत । निर्मलाना मनासि कुसुममृदूनि (भवन्ति)।

### व्याख्या

गुणेष्वेव सौजन्यादिगुणेष्वेवैको मुख्य पक्षपात स्नेहो यस्य स गुणैकानुरक्त क्षिते पृथ्वा इन्दुश्चन्द्रो विक्रमाङ्कदेवो (आल्हादकत्वात्) जाता सम्पन्ना मानस्याऽऽदरस्य सिद्धिर्निष्पत्तिर्यस्य स तस्मिन् मुदित हृष्ट मनश्चित्त यस्य स तस्मिन्

प्रहृष्टचेतसि तत्र द्रविडनृपतौ गतवति सति स्वनगर प्रति प्रस्थिते सति प्रतिपद प्रतिक्षणमुदकण्ठत समुत्सुको बभूव । तस्य स्मरणेन प्रसन्नो बभूवेत्यर्थ । निर्मलाना स्वच्छहृदयाणा मनासि चेतासि कुसुमवत्पुष्पवन्मृदूनि कोमलानि भवन्ति ।

### भाषा

केवल गुणो से ही स्नेह करने वाला, पृथ्वी भर के लोगो को सुख देने वाला विक्रमाङ्कदेव, अपने आदर की सिद्धि से प्रसन्न चित्त, द्रविड राजा के चले जाने पर, क्षण २ मे उसके लिये उत्कण्ठित होता था। स्वच्छ हृदय वाले मनुष्यो के मन, फूल के ऐसे कोमल होते हैं ।

**द्रविडपतिकथाद्भुत क्षणेषु क्षितिपति सूनुरसौ गुणानुरागी ।**
**पुलकपरिकरैः कपोलपालीं विपुलमतिः परिपूरयाञ्चकार ।।४।।**

### अन्वयः

विपुलमतिः गुणानुरागी असौ क्षितिपतिसूनुः द्रविडपतिकथाद्भुत-क्षणेषु पुलकपरिकरैः कपोलपालीं परिपूरयाञ्चकार ।

### व्याख्या

विपुला विशुद्धोदारेत्यर्थ । मतिर्बुद्धि 'बुद्धिर्मनीषा धिषणा धी प्रज्ञा शेमुषी मति' इत्यमर । यस्य स उदारप्रज्ञो गुणेषु सौजन्यादिगुणेष्वनुराग प्रेम यस्य स गुणस्नेह्यसौ प्रसिद्ध क्षितिपतेर्नृपस्याऽऽहवमल्लदेवस्य सूनु पुत्रो विक्रमाङ्कदेवो द्रविडपतेश्चोलराजस्य कथाना वार्तानामद्भुता आश्चर्यान्विता क्षणा अवसरास्तेषु चोलराजसम्बन्धिवृत्तान्तचर्चाकालेषु पुलकाना रोमाञ्चानां परिकरास्समूहास्तै रोमाञ्चप्रकरै कपोलपालीं गण्डस्थली परिपूरयाञ्चकार परिपूर्णाञ्चकार । तस्य चोलराजस्य स्मरणमात्रेण प्रेम्णा स रोमाञ्चितोऽभूदिति भाव ।

### भाषा

निर्मल बुद्धि वाले गुणग्राही राजा आहवमल्लदेव के पुत्र विक्रमाङ्कदेव के गाल, चोलराज को अद्भुत बातचीत के सिलसिले मे रोमाञ्चित हो उठते थे ।

**किमिति न गमनान्निवारितोऽसौ परिचयमेष्यति चक्षुषोः पुनः किम् ।**
**इति सुजनशिखामणिः कुमारः किमपि चिरं परिचिन्तयाञ्चकार ।।५।।**

**अन्वयः**

असौ गमनात् किम् इति न निवारितः। सुजनशिखामणिः किम् पुनः चक्षुषोः परिचयम् एष्यति इति कुमारः किमपि चिरं परिचिन्तयाञ्चकार।

**व्याख्या**

असौ द्रविडनरपतिर्गमनात्स्वनगरप्रयाणात् किमिति न कुतो न निवारित प्रतिषिद्ध । सुजनाना सज्जनाना शिखामणिश्शिरोरत्न श्रेष्ठ इत्यर्थ । द्रविडाधिराज किमिति प्रश्ने पुन भूयश्चक्षुषोर्नयनयो परिचय गोचरत्वमेष्यति समागमिष्यतीतीत्थ प्रकारेण कुमारो विक्रमाङ्कदेव किमपि विचित्रमवर्णनीय चिर बहुकाल परिचिन्तयाञ्चकार विचार कृतवान् ।

**भाषा**

मैंने द्रविडराजा को अपने घर जाने से क्यों नही रोका ? क्या वह सज्जन शिरोमणि फिर कभी दृष्टि-गोचर होगा ? वह राजकुमार विक्रमाङ्कदेव ऐसी २ चिरकाल तक चिन्ता किया करता था ।

**द्रविडनृपतिपुत्रिकां चकार त्रिभुवनदुर्लभसम्पदास्पदं सः।**
**प्रणयिषु शुभचेतसां प्रसादः प्रसरति सन्ततिमप्यनुग्रहीतुम् ॥६॥**

**अन्वयः**

सः द्रविडनृपतिपुत्रिका त्रिभुवनदुर्लभसम्पदास्पद चकार। प्रणयिषु शुभचेतसा प्रसादः सन्ततिम् अपि अनुग्रहीतु प्रसरति।

**व्याख्या**

स विक्रमाङ्कदेवो द्रविडनृपतेश्चोलाधीश्वरस्य पुत्रिकामात्मजा त्रिभुवनस्य त्रैलोक्यस्य दुर्लभा दुष्प्राप्या या सम्पत्सम्पत्तिस्तस्या आस्पद स्थान चकार निष्पादितवान् । विक्रमाङ्कदेवस्तत्कन्यायै प्रभूतसम्पत्ति ददावित्यर्थ । प्रणयिषु स्नेहाद्रिनम्रेषु शुभ कल्याणकारि चेतश्चित्त येषा ते तेषा महोपकारिणा महाजनाना प्रसाद प्रसन्नता 'प्रसादस्तु प्रसन्नता' इत्यमर । सन्तति सन्तानमपि कन्यापुत्रादीनपीत्यर्थ । अनुग्रहीतु कृपा प्रदर्शयितु प्रसरति प्रवर्तते । द्रविडराजप्रेम्णा तत्पुत्रीमप्यनुगण्हाति स्मेति भाव । पूर्वार्धस्योत्तरार्धेन समर्थनादर्थान्तरन्यासा लङ्कार ।

### भाषा

उसने द्रविडराज की लडकी को तीनो लोको मे दुर्लभ सम्पत्ति दी। अपने स्नेहियो के सम्बन्ध मे कल्याण करने की चित्तवृत्तिवालो की कृपा, उनके कन्या पुत्रादि पर भी हो जाती है।

**रणरभसविलासकौतुकेन स्थितिमथ बिभ्रदसौ यशोवतंसाम्।**
**विधिहतकदुराग्रहादकाण्डे गतमशृणोद्द्रविडेन्द्रमिन्द्रधाम्नि ॥७॥**

### अन्वयः

अथ रणरभसविलासकौतुकेन यशोवतंसां स्थिति बिभ्रत् असौ विधिहतकदुराग्रहात् अकाण्डे द्रविडेन्द्रम् इन्द्रधाम्नि गतम् अशृणोत्।

### व्याख्या

अथ किञ्चित्कालानन्तर रणो युद्ध तस्य रभसो हर्ष 'रभसो हर्षवेगयो' इति विश्व। तस्य विलास क्रीडा लीला तस्य कौतुक कुतूहल तेन युद्धजनितहर्षलीला-कुतूहलेन यश कीर्तिरवतसो भूषण यस्यास्सा ता कीर्तिभूषणा स्थितिमवस्था बिभ्रद्धारयन्नसौ विक्रमाङ्कदेवो विधिर्ब्रह्मा स एव हतको नीचस्तस्य दुराग्रहाद्-दुरभिनिवेशादकाण्डेऽनवसरे द्रविडेन्द्र चोलराजमिन्द्रधाम्नि स्वर्गे गत प्राप्त मृतमित्यर्थ। अशृणोदार्कार्णितवान्।

### भाषा

कुछ काल के अनन्तर, युद्ध जनित हर्ष की लीला के कुतूहल द्वारा यश से विभूषित अवस्था मे विद्यमान उस विक्रमाङ्कदेव ने क्रूर दैव के दुराग्रह से द्रविडदेस के राजा की असमय मे ही स्वर्ग मे जाने की बात सुनी।

**मृदुहृदयतया गुणानुरागादतिमहतः प्रणयाच्च राजपुत्रः।**
**हिमकरकरकाण्डपाण्डुगण्ड-स्थलगलदश्रजलश्चिरं ललाप ॥८॥**

### अन्वयः

राजपुत्रः मृदुहृदयतया गुणानुरागात् अतिमहतः प्रणयात् च हिमकर करकाण्डपाण्डुगण्डस्थलगलदश्रुजलः (सन्) चिर ललाप।

**व्याख्या**

राजपुत्रो नृपनन्दनो विक्रमाङ्कदेवो मृदु कोमल हृदय चित्त यस्य स मृदुहृदयस्तस्य भावो मृदुहृदयता तया कोमलचित्तत्वात् गुणेषु सौजन्यादिगुणेष्वनुराग प्रेम तस्मादगुणपक्षपातित्वादतिमहतोऽतिबृहत प्रणयाच्च स्नेहाच्च हिमाश्शीतला करा किरणा यस्य स हिमकरश्चन्द्रस्तस्य करा अशव 'किरणोस्त्रमयूखाशुगभस्तिघृणिरश्मय । भानु करो मरीचि स्त्री पुसयोर्दीधिति स्त्रियाम्' इत्यमर । तेषा काण्डानि समूहास्तद्वत्पाण्डु श्वेत गण्डस्थलं कपोलस्तस्माद्गलत्परिपतदश्रुजल बाष्पाम्भो यस्य स चन्द्रकिरणश्वेतकपोलगलद्बाष्पाम्बुस्सन् चिर बहुकाल ललाप विललाप विलाप चकारेत्यर्थ । अत्राऽनुप्रास शब्दालङ्कार । अत्र 'ललाप' इति क्रियापदे अवाचकत्व नाम दोष, उपसर्ग विनाऽर्थबोधकत्वाऽभावात् ।

**भाषा**

वह राजपुत्र, कोमल हृदय होने से, गुणो के अनुराग के कारण तथा अत्यधिक प्रेम से, चन्द्रमा की किरणो के समान सफेद पड गए हुए गालो पर से आसुओ को गिराता हुआ वहुत देर तक विलाप करता रहा ।

**द्रविडविषयराज्यविप्लवेन श्रवणपथातिथिना ततः सखेदः ।**
**अभिजनवति चोलराजपुत्रे श्रियमभिषेक्तुमसौ समुच्चचाल ॥६॥**

**अन्वयः**

ततः असौ श्रवणपथातिथिना द्रविडविषयराज्यविप्लवेन सखेदः (सन्) अभिजनवति चोलराजपुत्रे श्रियम् अभिषेक्तुं समुच्चचाल ।

**व्याख्या**

ततश्चोलराजविषयकशोकानन्तरमसौ विक्रमाङ्कदेव श्रवणयो कर्णयो पन्था मार्ग इति श्रवणपथ कर्णकुहरमार्गस्तस्याऽतिथिर्विषयस्तेन श्रुतेनेत्यर्थ । द्रविडविषयो द्रविडदेशस्तस्य राज्यं शासन तस्मिन् विप्लवो डिम्ब 'डिम्बे डमरविप्लवौ' इत्यमर । तेन, खेदेन दु खेन सहित सखेदो दु खाक्रान्तस्सन्नभिजनवति कुलीने 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमर । चोलराजपुत्रे वीरराजेन्द्रात्मजेऽधिराजराजेन्द्रनामके श्रिय राज्यलक्ष्मीमभिषेक्तु प्रतिष्ठापयितु समुच्चचाल प्रतस्थे ।

### भाषा

शोक मनाने के बाद, द्रविडदेश के राज्य मे विप्लव होने की खबर सुन कर, दु खित हो, वह विक्रमाङ्कदेव, कुलीन चोलराजा वीर राजेन्द्र के अधिराज-राजेन्द्र नामक पुत्र को राजगद्दी पर बैठाने के लिये चल पडा ।

**करटिशतविकीर्णकर्णताल-व्यजनसमीरणशीतलीकृतानि ।**
**अथ धरणिभुजां पिबन्यशांसि क्षितिपतिरादिपुरीमवाप काञ्चीम् ॥१०॥**

### अन्वयः

अथ क्षितिपतिः करटिशतविकीर्णकर्णतालव्यजनसमीरणशीतलीकृतानि धरणिभुजा यशांसि पिबन् आदिपुरीं काञ्चीम् अवाप ।

### व्याख्या

अथ चोलदेशम्प्रति प्रस्थानानन्तर क्षितिपति पृथिव्या अधिष्ठाता करटिना गजाना शत तेन विकीर्णानि विक्षिप्तानि कर्णा एव ताला तालवृक्षपर्णानि तान्येव व्यजनानि तालवृन्तानि तेषा समीरणेन पवनेन शीतलीकृतानि, अशीतलानि शीतलानि कृतानीति शीतलीकृतानि 'च्वि' प्रत्यय । विपक्षनृपाणा प्रतापजनितोष्माण निवार्य हिमीकृतानि धरणिभुजा पृथ्वीपालाना यशासि कीर्ती दुग्धमिव पिबन् गृह्णन्नादिपुरीं प्रथमनगरीं काञ्ची तन्नामचोलराजधानीमवाप सप्राप्त । यशस श्वैत्य प्रसिद्धमिति दुग्धरूपता व्यज्यते, एव शत्रुभूपाना यशोदुग्ध पिबन्निव तत्राऽऽजगामेति भाव ।

### भाषा

चोलदेश के प्रति प्रस्थान करने के अनन्तर, सैकडो हाथियो के हिलाए हुए कान रूपी ताल पत्र के पखो से उत्पन्न वायु से ठण्डे किए हुए विपक्षी राजाओ के यशो का पान करते हुए वह पृथ्वी का सरक्षक विक्रमाङ्कदेव प्राचीन नगरी काञ्ची मे पहुँच गया । अर्थात् हाथी की सेना से शत्रुओ को परास्त कर उनकी प्रताप की गर्मी शान्त होने से उनका शीतल दुग्ध के समान यश, अपने परिश्रम से लगी प्यास को मिटाने के लिए, पान करता हुआ काञ्ची नगरी मे पहुँचा ।

**समजनि कलमेखलाकलाप-ध्वनिजयडिण्डिमसज्जपुष्पचापम् ।**
**अथ चटुलकटाक्षबाणवर्ष-प्रगुणममुष्य पुरः पुरन्ध्रिचक्रम् ॥११॥**

अन्वयः

अथ अमुष्य पुरः पुरन्ध्रिचक्र कलमेखलाकलापध्वनिजयडिण्डिम-सज्जपुष्पचाप चटुलकटाक्षबाणवर्षप्रगुण समजनि ।

व्याख्या

अथ काञ्चीपुरीसमागमानन्तरममुष्य विक्रमाङ्कदेवस्य पुरोऽग्रे पुरन्ध्रीणा साध्वीना ललनाना 'पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता' इत्यमर । चक्र समूहो मेखलाना काञ्चीना कलापस्समूहस्तस्य ध्वनिस्स्वन इति मेखलाकलाप-ध्वनि कलो मधुरो यो मेखलाकलापध्वनि स एव जयडिण्डिमो विजयसूचक-वाद्यविशेषशब्दस्तेन सज्जस्सुसज्जित पुष्पचाप कुसुमायुध कामो येन तत्, चटुलाश्चञ्चला कटाक्षा एव बाणाश्शरास्तेषा वर्षं वृष्टिस्तेन प्रगुण प्रकृष्टगुण-युक्त समजन्यभूत् । तत्र नागरीणा काञ्चीशब्देन कटाक्षवीक्षणेन च काम-साम्राज्यमिव प्रदर्शितमिति भाव. ।

भाषा

विक्रमाङ्कदेव के काञ्चीनगरी मे पहुचने पर इसके सामने वहाँ की नागरिक ललनाए मानो सुन्दर करधनियो के शब्द रूप जयध्वनि के नगाडे के शब्द से कामदेव को उत्साहित करने वाली तथा चञ्चल कटाक्ष रूपी बाणो की वृष्टि करने वाली, हो गईं ।

**अधरहसितकिंशुका शुकाय क्रमुकदलं वदनस्थमर्पयन्ती ।**
**क्षितिपतितनयेऽत्र कापि नेत्र-प्रणयिनि चुम्बनचातुरीमुवाच ॥१२॥**

अन्वयः

अधरहसितकिंशुका का अपि वदनस्थ क्रमुकदल शुकाय अर्पयन्ती (सती) नेत्रप्रणयिनि अत्र क्षितिपतितनये चुम्बनचातुरीम् उवाच ।

व्याख्या

अधरेण अधरोष्ठेन रक्तवर्णत्वात् हसित अधरीकृत किशुको रक्तवर्णपला-शपुष्प यया सा स्वरक्तवर्णाधरेणाधरीकृतरक्तवर्णकिशुका रक्तवर्णाधरोष्ठेति

भाव । काऽपि नगररमणी वदने मुखे तिष्ठतीति त मुखान्तर्वर्तिन क्रमुकस्य पूगस्य दल खण्ड शुकाय कीराय मुखेनैवाऽर्पयन्ती ददती सती नेत्रयो कामिनीनयनयोः प्रणय स्नेहोस्त्यस्मिन्निति नेत्रप्रणयी तस्मिन्नेत्रप्रणयिनि दृष्टिगोचरेऽत्राऽस्मिन् क्षितिपते राज्ञ आहवमल्लदेवस्य तनये पुत्रे विक्रमाङ्कदेवे चुम्बनस्य वक्त्रसयोगस्य चातुरी वैदग्ध्य ता चुम्बनवैदग्ध्यमुवाच प्रकटयाम्बभूव ।

### भाषा

अपने लाल अधर पल्लव से पलास के लाल फूल की हसी उडाने वाली नागरी ललना, अपने मुख मे विद्यमान सुपाडी के टुकडे को अपने मुख से ही सुग्गे के मुख मे देती हुई मानो राजा आहवमल्लदेव के पुत्र विक्रमाङ्कदेव के प्रति चुम्बन करने के कौशल को प्रकट करती थी ।

**गृहशिखरमगम्यमध्यरोहद् द्रुतमवधीरितपातभीतिरन्या ।**
**मरणमपि तृणं समर्थयन्ते मनसिजपौरुषवासितास्तरुण्यः ॥१३॥**

### अन्वयः

अन्या अवधीरितपातभीतिः (सती) अगम्य गृहशिखरं द्रुतम् अध्यरोहत् । मनसिजपौरुषवासिताः तरुण्यः मरणम् अपि तृणं समर्थयन्ते ।

### व्याख्या

अन्याऽपरा रमण्यवधीरिता तिरस्कृता त्यक्तेत्यर्थ । पातस्य पतनस्य भीतिर्भय यया सा त्यक्तपतनभया सती गन्तु योग्य गम्य न गम्यमगम्यमारोढुमनर्हं गृहाणा गेहाना 'गृह गेहोऽध्यवसितम्' इत्यमर । शिखर शृङ्ग सर्वोच्चस्थानमित्यर्थ । द्रुत शीघ्रमध्यरोहदारुरोह । मनसिजस्य कामस्य पौरुषेण विक्रमेण वासिता युक्ता कामवासनाभिभूतास्तरुण्यो युवत्यो मरणमपि मृत्युमपि तृण तृणवत्तुच्छ समर्थयन्ति मन्यन्ते । अत्र पूर्वार्धस्योत्तरार्धेन समर्थनादर्थान्तरन्यासो नामालङ्कार ।

### भाषा

कोई नागरी इसको देखने के लिये, गिरने का भय छोड कर जल्दी से न चढे जाने योग्य घर के सबसे ऊँचे भाग पर चढ गई । कामदेव के पराक्रम से अभिभावित अर्थात् कामासक्त युवतियाँ, मौत को भी तृण के समान तुच्छ समझती है ।

**कलकलमपरा मुधा विधाय क्षितितिलकान्नयनान्तमाससाद ।**
**अवतरति मृगीदृशां तृतीयं मनसिजचक्षुरुपायदर्शनेषु ॥१४॥**

### अन्वयः

अपरा मुधा कलकल विधाय क्षितितिलकात् नयनान्तम् आससाद । मृगीदृशां तृतीय मनसिजचक्षुः उपायदर्शनेषु अवतरति ।

### व्याख्या

अपरा काचित् कामिनी मुधा व्यर्थमेव प्रयोजनमन्तरेणैवेत्यर्थ । कलकल कोलाहल 'कोलाहल कलकल' इत्यमर । विधाय कृत्वा क्षितितिलकाद्भूमिभूषणाद् विक्रमाङ्कदेवान्नयनयोर्नेत्रयोरन्तमपाङ्गभागमाससाद प्राप । कलकलमिषेण तस्य दृष्टिमाचकर्षेति भाव । मृगीणा हरिणीना दृशो नेत्राणीव दृशो यासा तास्तासा हरिणनयनाना तृतीय तृतीयसख्याक मनसिज काम एव चक्षुर्नयन कामनयनमुपायाना यत्किञ्चिद्व्याजरूपोपायाना दर्शनमवलोकन प्रयोग इत्यर्थ । तेषु स्वाभीष्टसिद्ध्युपायप्रयोगेष्ववतरति फलति । काम एव तरुणीना विभ्रमादिचमत्कृतानन्यसाधारणव्यवहारशिक्षक इति भाव । पूर्वार्धस्योत्तरार्धेन समर्थनादर्थान्तरन्यासोऽलङ्कार ।

### भाषा

किसी अन्य स्त्री ने, अकारण कोलाहल मचाकर, विक्रमाङ्कदेव का दृष्टिकोण अपनी ओर आकर्षित कर लिया । मृगनयनियो का कामरूपी तृतीय नेत्र, (ऐसे २) उपायो को सुझा देता है ।

**हृदि विहितपदेन शुद्धभासा कृतमधरं धरणीन्द्रसूनुनेव ।**
**निपतितमवधीर्य हारमन्या हरिणविलोलविलोचना जगाम ॥१५॥**

### अन्वयः

हरिणविलोलविलोचना अन्या शुद्धभासा हृदि विहितपदेन धरणीन्द्रसूनुना अधरं कृतम् इव निपतितं हारम् अवधीर्य जगाम ।

### व्याख्या

हरिणस्य मृगस्य इव विलोले चञ्चले विलोचने नेत्रे यस्या सा मृगचञ्चलनयनाऽन्या काचिल्ललना शुद्धा निर्मला भा कान्तिर्यस्य तेन निर्मलकान्तिमता 'स्यु.

प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तय ' इत्यमर । हृदि वक्ष स्थलेऽन्त करणे च विनिहित स्थापित पद स्थान येन स तेन कृतस्थानेन धरणीन्द्रस्य नृपतेराहवमल्ल-देवस्य सूनु पुत्रस्तेन विक्रमाङ्कदेवेनाऽधर निम्नस्थानस्थित गुणैर्न्यूनञ्च कृतमिव सम्पादितमिवाऽत एव निपतितमधोभ्रष्ट हार मुक्तामालामवधीर्य परित्यज्य जगाम गता । कुमार द्रष्टु गताऽन्या काऽपि स्त्री रभसात् निपतिता हृदिस्था मुक्तामाला परित्यज्य जगाम । यत हारस्य स्थाने ललनाहृदय शुद्धभासा कुमारेणऽऽश्रितत्त्वात्तस्य निम्नस्थानगतत्वात्पतनमुत्प्रेक्षितमिति भाव । श्लेषा-नुप्राणितोत्प्रेक्षा ।

### भाषा

मृग के समान चञ्चल नेत्र वाली कोई ललना, निर्मलकान्तिवाले और ललना के हृदय मे स्थान बनाने वाले राज पुत्र से, मानो नीचे खसकाए गये हुए अतएव वक्ष स्थलपर से गिरे हुए हार की परवाह न कर चली गई ।

**उरसि मनसिजावतंसलीला–समुचितकोमलपल्लवानुकाराम् ।**
**नखलिपिमपरा प्रकाशयन्ती सुरतविमर्दसहत्वमाचचक्षे ॥१६॥**

### अन्वयः

अपरा उरसि मनसिजावतसलीलासमुचितकोमलपल्लवानुकारा नखलिपि प्रकाशयन्ती सुरतविमर्दसहत्वम् आचचक्षे ।

### व्याख्या

अपराऽन्या कामिन्युरसि वक्ष स्थले मनसिजस्य कामस्य याऽवतसलीला भूषणरूपविलासस्तस्या समुचितो योग्य कोमलपल्लवो मृदुकिसलय 'पल्लवोऽस्त्री किसलयम्' इत्यमर । तस्याऽनुकारोऽनुकरण यस्या सा ता मन्मथभूषण विलासयोग्यमृदुकिसलयसदृशाकृतिमर्द्धवृत्ताकारामित्यर्थ । नखलिपि नखक्षत-परम्परा प्रकाशयन्ती प्रदर्शयन्ती सुरते निधुवनक्रीडाया यो विमर्द सघर्षस्त सहते इति सुरतविमर्दसहस्तस्य भावस्तत् सुरतक्रीडासघर्षक्षमत्वमाचचक्षे कथितवती ।

### भाषा

अन्य किसी नारी ने अपनी छाती पर कामदेव के भूषण की शोभा के योग्य कोमल पत्तो की आकृति के अर्धवृत्ताकार नखक्षतो को दिखाते हुए, अपनी सुरत कालीन झकझोर को सहने की योग्यता प्रकट की ।

**अभजत मणिकुण्डलं परस्याः श्रवणपरिच्युतमंसदेशमेत्य ।**
**गलविगलितपुष्पबाणचक्र-श्रियमसितोत्पलचारुलोचनायाः ॥१७॥**

अन्वयः

असितोत्पलचारुलोचनायाः परस्याः मणिकुण्डल श्रवणपरिच्युत (सन्) असदेशम् एत्य गलविगलितपुष्पबाणचक्रश्रियम् अभजत ।

व्याख्या

असित नीलमुत्पल कमल तद्वच्चारुणी सुन्दरे लोचने नेत्रे यस्या सा तस्या नीलकमलवत्सुन्दरनेत्राया परस्या अन्यस्या ललनाया मणिकुण्डल रत्नावतस श्रवणाभ्या कर्णाभ्या परिच्युत पतित सत् असदेश स्कन्धस्थलमेत्य सप्राप्य गले कण्ठदेशे विगलितास्सम्प्राप्ता पुष्पबाणा कुसुमसायकास्तेषा चक्र समूहस्तस्य श्रिय शोभामभजत धारयामास । मणिकुण्डलस्य पुष्पबाणेन साम्यादुपमा । मणिकुण्डलस्य वर्तुलाकारत्वात् कामस्य चक्रश्रियमभजतेत्यर्थ समीचीन । परन्तु कामस्य चक्रधारणमप्रसिद्धम् ।

भाषा

किसी नीले कमल के ऐसे सुन्दर नेत्रवाली नारी के कान मे का मणिकुण्डल गिर कर उसके गले पर आ पडने से वह गले पर पडे हुए कामदेव के फूल के बाण समूहो की शोभा को प्राप्त करता था । कान के अभूषण के गोल होने से कामदेव के चक्र की शोभा अर्थ ही ठीक है । परन्तु कामदेव का चक्र धारण अप्रसिद्ध है ।

**परिकलितचुलुक्यराजपुत्र-प्रथमविलोकनकौतुकत्वराणाम् ।**
**इति नगरकुरङ्गलोचनाना-मभवदनङ्गविलोभनो विलासः ॥१८॥**

अन्वयः

परिकलितचुलुक्यराजपुत्रप्रथमविलोकनकौतुकत्वराणा नगरकुरङ्गलोचनानाम् इति अनङ्गविलाभन. विलासः अभवत् ।

व्याख्या

परिकलितो विदित. कैश्चिच्चिह्नविशेषैर्विज्ञात इत्यर्थ । यश्चुलुक्यराजपुत्रो

विक्रमाङ्कदेवस्तस्य प्रथमविलोकनस्य सर्वप्रथमसदर्शनस्य यत्कौतुक कौतूहल तस्मिन् त्वरा सम्भ्रमो यासा तास्तासा नगरस्य काञ्चीपुर्या कुरङ्गलोचना मृगनयनास्तासा कामिनीनामिति पूर्वोक्तप्रकारोऽनङ्गस्य कामस्य विलोभनो विमोहनोऽनङ्गविलोभनो मदनमोहनो विलासो नानाविधकामसम्बन्धिचेष्टाविशेषोऽभवत् प्रादुर्बभूव ।

### भाषा

किसी प्रकार चिह्नादि से पहिचान मे आए हुए चुलुक्य वशीय राजकुमार विक्रमाङ्कदेव के पहिले पहिल दर्शन की उत्कण्ठा से त्वरा करने वाली नागरिक मृगनयनियो की पूर्वोक्त प्रकार की काम सम्बन्धि चेष्टाएँ हुईं ।

**[1]नरपतितनयः कयापि कोप-स्फुरितरदच्छदलेखयालुलोके ।**
**प्रकटितपटुपञ्चबाणलीला-कलकिलकिञ्चितमीक्षणाञ्चलेन ॥१६॥**

### अन्वयः

कोपस्फुरितरदच्छदलेखया कया अपि ईक्षणाञ्चलेन प्रकटितपटुपञ्चबाणलीलाकलकिलकिञ्चित नरपतितनयः आलुलोके ।

### व्याख्या

कोपेन क्रोधेन स्फुरितस्सचलित कम्पमानो वा यो रदच्छदोऽधरस्तस्य लेखा अधरदेश 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमर । यस्या सा तया क्रोधकम्पितसूक्ष्माधररेखया कयाऽपि नायिकया ईक्षणयोर्नेत्रयोरञ्चल प्रान्तभागस्तेन कटाक्षेण प्रकटिता प्रकाशिता पटुर्विविधवैदग्ध्यसमेता या पञ्चबाणस्य कामस्य लीला क्रीडा तया कल मधुर किलकिञ्चित कामजनितक्रोधाश्रुहर्षभीत्यादिमिश्रितभावविशेषो यस्मिन्कर्मणि तद्यथास्यात्तथा नरपतितनयो राजपुत्रो विक्रमाङ्कदेव आलुलोके सदृष्ट ।

### भाषा

क्रोध से फुरफुराने वाले ओठ से युक्त, किसी नारी ने कामदेव की चातुरी युक्त मनोहर लीला से आभ्यन्तरिक राग क्रोधादि भावो को प्रकट करते हुए, राजपुत्र विक्रमाङ्कदेव को कटाक्ष से देखा ।

---

[1] सन्दर्भदृष्ट्या श्लोकोऽय पूर्वश्लोकात्प्रागेव स्थानमपेक्षते ।

**कनकसदनवेदिकान्तराल-ग्रथितपदः क्षितिपालनन्दनोऽसौ ।**
**सुरशिखरितटीविटङ्कमध्य-प्रणयिनमुष्णकरं निराचकार ॥२०॥**

**अन्वयः**

कनकसदनवेदिकान्तरालग्रथितपदः असौ क्षितिपालनन्दनः सुरशिखरितटीविटङ्कमध्यप्रणयिनम् उष्णकर निराचकार ।

**व्याख्या**

कनकस्य सुवर्णस्य यत्सदन गृह तस्य वेदिका समुपवेशनाय परिष्कृता भूमि 'वेदि परिष्कृता भूमि' इत्यमर । तस्या अन्तराल मध्य 'अभ्यन्तर त्वन्तरालम्' इत्यमर । तस्मिन् ग्रथित विहित पद चरण येन स असावय क्षितिपालस्याऽऽहवमल्लदेवस्य नन्दन कुमारो विक्रमाङ्कदेव सुराणा देवाना शिखरी पर्वतस्सुवर्णाद्रि सुमेरुस्तस्य तटी प्रान्तभाग एव विटङ्कमुन्नतस्थान तस्य मध्य मध्यभागस्तस्य प्रणयी स्नेहवशवदस्तद्वर्तीत्यर्थ । तमुष्णकर सूर्य निराचकार तिरश्चकार । निजोग्रप्रतापेन स्वर्णवेदिविद्यमानत्वेनाऽनुपमशोभया तिरश्चकारेति भाव ।

**भाषा**

सोने के घर के चौतरे पर चरण रखने वाले राजा आहवमल्लदेव के पुत्र विक्रमाङ्कदेव ने (सोने के) सुमेरु पर्वत के प्रान्त भाग की उच्च भूमि के मध्य मे विराजित सूर्य को नीचा दिखाया । अर्थात् सूर्य के समान तेजस्वी विक्रमाङ्कदेव के सोने के बने घर की वेदिका पर विराजित होने से इसकी शोभा के सामने सुमेरु पर्वत के प्रान्तभाग मे विराजित सूर्य की शोभा फीकी पड गई ।

**कतिचिदपि दिनानि तत्र नीत्वा परिसरभूमिषु भूरिभिविलासैः ।**
**चरणतलनिविष्टदुष्टवर्गः पुरमवलोकयति स्म गाङ्गकुण्डम् ॥२१॥**

**अन्वयः**

चरणतलनिविष्टदुष्टवर्गः (असौ) तत्र परिसरभूमिषु भूरिभिः विलासैः कतिचित् अपि दिनानि नीत्वा गाङ्गकुण्ड पुरम् अवलोकयति स्म ।

**व्याख्या**

चरणतले पादतले निविष्टा दलिता दुष्टवर्गा शत्रुसमूहा येन स असौ

विक्रमाङ्कदेवस्तत्र काञ्चीनगरे परिसरभूमिषु नगरबहिर्भागेषु भूरिभिर्बहुविधैर्विलासैर्मनोविनोदकृत्यै कतिचिदपि कानिचिदपि दिनान्यहानि नीत्वा व्यतीत्य गाङ्गकुण्ड पुर राजेन्द्रचोलनिर्मापिता गाङ्गकुण्डचोलपुराख्या चोलदेशस्थैका राजधानीम् अवलोकयति स्म पश्यति स्म तत्र गतवानित्यर्थ ।

### भाषा

विपक्षी दुष्ट राजाओ को अपने पैर तले कुचलने वाले राजपुत्र विक्रमाङ्कदेव ने काञ्ची नगरी के आस पास के प्रदेशो के विहार मे कुछ दिन बिताकर राजेन्द्रचोल द्वारा बसाए हुए गाङ्गकुण्ड चोल पुर को देखा अर्थात् वहाँ गया ।

**श्लोकद्वयेन गाङ्गकुण्डचोलपुरं वर्णयति कविः—**

**द्रविडनरपतिप्रतापभीत्या किमपि गते पयसां निधौ परस्तात् ।**
**यदविहितविवाहमङ्गलाया बहिरिव निर्गतमादिधाम लक्ष्म्याः ॥२२॥**

### अन्वयः

यत् पयसां निधौ द्रविडनरपतिप्रतापभीत्या किमपि परस्तात् गते (सति) अविहितविवाहमङ्गलायाः लक्ष्म्याः आदिधाम बहिः निर्गतम् इव ।

### व्याख्या

यद्गाङ्गकुण्डचोलपुर पयसा जलाना निधावाकरे समुद्रे द्रविडस्य नरपतिर्नृपस्तस्य प्रताप प्रभावस्तस्माद्भीतिर्भय तया चोलदेशनृपभयेन किमपि किञ्चिदपि परस्तात् पृष्ठभागे गते प्राप्ते सति स्वस्थान विमुच्य किञ्चित्पृष्ठप्रदेशमपसृते सति न विहितमविहितमसम्पादित विवाहमङ्गल पाणिग्रहणोत्सवो यस्या सा तस्या अपरिणीताया लक्ष्म्या श्रिय आदिधाम प्रथमगृह बहिर्निर्गतमिव समुद्राद्बहिरागतमिव । गाङ्गकुण्डचोलपुरस्य लक्ष्मीप्रथमगृहत्वेनोत्प्रेक्षणादपरिमितसम्पत्तिशालित्वञ्च द्योत्यते । अत्रोत्प्रेक्षालङ्कार ।

### भाषा

जो गाङ्गकुण्डचोलपुर द्रविड़ देश के राजा के प्रताप के भय से (डरकर) समुद्रके कुछ पीछे सरक जाने से, अविवाहित अवस्था मे समुद्र मे लक्ष्मी के रहने का आदिनिवास स्थान ही मानो बाहर निकल आया था ।

**गगनमुपगतेन शोभते य-न्निरुपमकाञ्चनवप्रमण्डलेन ।**
**सुरपुरमिव हेमशैलमध्ये विबुधविभूतिभरात्कृतप्रवेशम् ॥२३॥**

### अन्वयः

यत् विबुधविभूतिभरात् गगनम् उपगतेन निरुपमकाञ्चनवप्रमण्डलेन हेमशैलमध्ये कृतप्रवेश सुरपुरम् इव शोभते ।

### व्याख्या

यद्गाङ्गकुण्डचोलपुर बिबुधाना देवाना पण्डिताना वा विभूतिभरादैश्वर्यातिशयाद्धेतोरन्यत्र भारात्—इद साधर्म्यनिष्पादकहेतुनिरूपक पदम् । गगनमाकाशमुपगतेन प्राप्तेन नास्ति उपमा सादृश्य यस्य तन्निरुपममद्वितीय यत्काञ्चनस्य सुवर्णस्य वप्रमण्डल प्राकारपरम्परा (छडदिवाली इति भाषायाम्) तेनाऽनुपमसुवर्णनिर्मितप्राकारपरम्पराहेतुना हेम्न सुवर्णस्य शैल पर्वत सुमेरुस्तस्य मध्येऽभ्यन्तरे कृतो विहित प्रवेशोऽभ्यन्तरस्थितिर्येन तद्विहितप्रवेश सुराणा देवाना पुर नगरममरावतीव शोभते विलसति । काञ्चनप्राकारान्तर्गतगाङ्गकुण्डचोलपुरस्योपरि सुमेरुपर्वतान्तर्गतसुरपुरत्वस्योत्प्रेक्षणादुत्प्रेक्षा ।

### भाषा

जो गाङ्गकुण्ड चोलपुर, विद्वानो की अधिक समृद्धि से और आकाश चुम्बि अनुपम सोने की चाहार दिवारी से मानो देवो की अधिक समृद्धि से (अर्थात् बोझे से स्वर्ग से नीचे आई हुई) ओर (ऊचे) सोने के पर्वत सुमेरु के बीच मे प्रविष्ट, अमरावती नगरी के समान शोभित होता था ।

**विघटितपरिपन्थिसैन्यसार्थः पदमधिरोप्य स तत्र चोलसूनुम् ।**
**नयनचुलुकलुण्ठ्यमानकान्तिर्द्रविडवधूभिरुवास मासमात्रम् ॥२४॥**

### अन्वयः

विघटितपरिपन्थिसैन्यसार्थः सः चोलसूनुं पदम् अधिरोप्य तत्र द्रविडवधूभिः नयनचुलुकलुण्ठ्यमानकान्तिः सन् मासमात्रम् उवास ।

### व्याख्या

विघटिता शकलीकृता परिपन्थिना शत्रूणा सैन्यसार्था सैनिकसमूहा येन

स शकलीकृतविपक्षिसैनिकसमूह स विक्रमाङ्कदेवश्चोलसूनु चोलदेशाधिराजपुत्र-मधिराजराजेन्द्रनामक पद राज्यसिहासनमधिरोप्य तत्र प्रतिष्ठाप्य तत्र गाङ्ग-कुण्डचोलपुरे द्रविडवधूभिर्द्रविडाङ्गनाभिर्नयनानि द्रविडाङ्गनानेत्राण्येव चुलुकान्य-ञ्जलय —विक्रमाङ्कदेवदर्शनकौतुकानन्दातिशयेन विकासितत्वाच्चुलुकत्वारोप । तैर्नयनचुलुकैर्लुण्ठ्यमाना ह्रियमाणा पीयमाना वा कान्ति शरीरलावण्यामृत यस्य स नेत्राञ्जलिपुटगृह्यमाणकान्ति सन् मासमात्रमेकमासपर्यन्तमुवास निवास विदधौ। यथात्युत्कटपिपासया बाध्यमाना जलपात्रादिकमनपेक्ष्याऽविलम्बं चुलुकेनैवाऽधिक जलमग्रे मिलिष्यति न वेति धिया परिपीय पूर्णां तृप्ति भजन्ते तथैव प्रमदा रामणीयक नृपरूपमग्रे दृष्टिगोचर भविष्यति न वेति धियाऽतिकौतू-हलेनाऽहमहमिकया स्वनयनैर्नृपवपुर्लावण्य चिर पश्यन्त्योऽपरिमिता मानसतृप्ति वहन्ति स्मेति भाव ।

### भाषा

प्रतिपक्षी राजाओ के सेनासमूहो को नष्ट करने वाले विक्रमाङ्कदेव ने चोलराज के राजकुमार अधिराज राजेन्द्र को राजसिहासन पर बैठाकर द्रविडदेश की ललनाओ को नेत्ररूपी अजुलियो से अपने रूपलावण्यामृत का पान कराते हुए केवल एकमास तक गाङ्गकुण्ड चोलपुर मे निवास किया। अर्थात् उसके अनुपम रूप से आकर्षित होकर आगे फिर ऐसा रूप देखने का अवसर आवेगा या नही इस भावना से द्रविडाङ्गनाएँ उसे आँखे गडा कर चिरकाल तक देखती रही।

**विघटनमटवीधनुर्धराणां विषमपथेषु विधाय लीलयैव।**
**पुनरपि स जगाम तुङ्गभद्रां विरचितवन्दनमालिकां तरङ्गैः ॥२५॥**

### अन्वयः

सः विषमपथेषु अटवीधनुर्धराणां लीलया एव विघटन विधाय तरङ्गैः विरचितवन्दनमालिका तुङ्गभद्रां पुनः अपि जगाम।

### व्याख्या

स विक्रमाङ्कदेवो विषमा दुर्गमा पन्थानो मार्गा इति विषमपथास्तेषु दुर्गम-मार्गेष्वटव्या वनस्य 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमर । धनुर्धरा धानुष्का भिल्लकिरातादयस्तेषा धनुर्विद्याविशारदाना वनेचराणा लीलयैव

क्रीडयैव विघटन विशृङ्खलन विधाय सम्पाद्य तरङ्गैर्वीचिभिर्विरचिता राज-कुमारस्य स्वागतसस्कारार्थं सम्यक् सघटिता (माङ्गलिकी) वन्दनमालिका तोरणस्रक् (बन्दनवार इति भाषाया प्रसिद्धा ।) यया सा ता तुङ्गभद्रा तन्नाम्नीं नदी पुनरपि मुहुर्जगाम ययौ । तरङ्गाणा वन्दनमालिकाभीरूपणाद्रूपकम् ।

**भाषा**

वह विक्रमाङ्कदेव, दुर्गम मार्गों मे आक्रमण करने वाले कोलभिल्लादि जगली धनुर्धारियो को सहज मे भगाकर, अपने स्वागत मे, लहरो से बन्दन वार बाधने वाली तुङ्गभद्रा नदी पर फिर से गया ।

**अथ कतिषुचिदेव दैवयोगात् परिगलितेषु दिनेषु चोलसूनोः ।**
**श्रियमहरत राजिगाभिधानः प्रकृतिविरोधहतस्य वेङ्गिनाथः ॥२६॥**

**अन्वयः**

अथ कतिषुचित् एव दिनेषु परिगलितेषु दैवयोगात् राजिगाभिधानः वेङ्गिनाथः प्रकृतिविरोधहतस्य चोलसूनोः श्रियम् अहरत ।

**व्याख्या**

अथाऽनन्तर कतिषुचिदेव कियत्स्वेव दिनेषु दिवसेषु परिगलितेषु व्यतीतेषु सत्सु दैवयोगाद्भाग्यवशात् राजिग इत्यभिधान नाम 'आख्याह्वे ह्यभिधानञ्च नामधेयञ्च नाम च' इत्यमर । यस्य स राजिगाख्यो वेङ्गिनाथो वेङ्गि-देशाधिपती राजेन्द्रचोल प्रकृतीना प्रजाना प्रकृते स्वभावस्य वा विरोधेन प्रातिकूल्येन वैरेण वा हतस्य मारितस्य चोलसूनोश्चोलराजपुत्रस्याऽधिराज-राजेन्द्रस्य श्रिय लक्ष्मीं राज्यमित्यर्थ । अहरत गहीतवान् ।

**भाषा**

इसके अनन्तर कुछ ही दिन बीनने पर राजिग उपनामक वेङ्गिदेश के राजा राजेन्द्र चोल ने प्रजा के विरोध से या स्वाभाविक वैर से चोल के राजपुत्र अधिराज राजेन्द्र को मारकर उसका राज्य छीन लिया ।

**कुटिलमतिरसौ विशङ्कमानः पुनरमुमेव पराभवप्रगल्भम् ।**
**प्रगुणमकृत पृष्ठकोपहेतोः प्रकृतिविरोधिनमस्य सोमदेवम् ॥२७॥**

**अन्वयः**

कुटिलमतिः असौ पराभवप्रगल्भम् अमुम् एव पुनः विशङ्कमानः (सन्) पृष्ठकोपहेतोः अस्य प्रकृतिविरोधिनं सोमदेव प्रगुणम् अकृत ।

**व्याख्या**

कुटिला कुटिलनीतियक्ता मतिर्बुद्धि 'बुद्धिर्मनीषा धिषणा धी प्रज्ञा शेमुषी मति' इत्यमर । यस्य स कुटिलमतिरसौ वेङ्गिनाथो राजिग पराभवे शत्रूणा पराजयकरणे प्रगल्भ निष्णातमम् विक्रमाङ्कदेवमेव पुन शश्वद्विशङ्कमान आतङ्कहेतु मन्यमान सन् पृष्ठेन पृष्ठभागेन कोप आक्रमणमेव हेतु कारण तस्माद्विक्रमाङ्कदेवस्य पृष्ठभागादाक्रमणार्थं छलेन विक्रमाङ्कदेव विजेतुमित्यर्थ । अस्य विक्रमाङ्कदेवस्य प्रकृत्या स्वभावेनैव विरोधिन प्रतिकूल सोमदेव विक्रमाङ्क-देवज्येष्ठभ्रातर प्रगुण समुद्यतमकृत कृतवान् ।

**भाषा**

कुटिलनीति मे कुशल राजिग-वेङ्गिनाथ-राजेन्द्र-चोल ने, शत्रुओ को परास्त करने मे कुशल विक्रमाङ्कदेव की फिर से काञ्ची मे आने की आशका से, विक्रमाङ्कदेव के स्वाभाविक विरोधी उसके बडे भाई सोमदेव को, विक्रमाङ्कदेव पर पीछे से आक्रमण करने के लिये तैयार कर लिया ।

**सुभटशतनिशातखड्गधारा-विहरणसव्रणपादपल्लवेव ।**
**अपि नयनिपुणेषु नो भरेण क्षिपति पदं किमुत प्रमादिषु श्रीः ॥२८॥**

**अन्वयः**

श्रीः सुभटशतनिशातखड्गधाराविहरणसव्रणपादपल्लवा इव नयनिपुणेषु अपि भरेण पदं नो क्षिपति प्रमादिषु किमुत ।

**व्याख्या**

श्री राज्यलक्ष्मी सुभटाना सुयोधाना शत सुभटशत तस्य निशातास्तीक्ष्णा खड्गाना करवालाना धारा अग्राणि तासु विहरणेन सविलाससचरणेन सव्रणौ सक्षतौ पादपल्लवौ चरणकिसलये यस्या सा इव नये नीतौ निपुणा प्रगल्भास्तेषु नीतिप्रगल्भेष्वपि भरेण शरीरभारेण सामस्त्येन सर्वतोभावेनेत्यर्थ । पद चरण नो क्षिपति न निदधाति । सक्षतपादपल्लवस्य व्यथाभयात् । दृश्यते च लोके

सव्रणचरणा भूमौ शरीरस्य सम्पूर्णभारेण सुतरा पद न निदधत इति । प्रमादिषु प्रमादप्रसक्तेष्वनवहितेषु जनेषु तु सुखेन पदनिक्षेपण किमुत वक्तव्यम् । अर्थात् प्रमादिष् नीतिरहितेषु तु लक्ष्म्या प्रेमप्रवणत्वमत्यन्तमसम्भाव्यमितिभाव । अत्र पादपल्लवे खड्गधारा-विरहण-जन्यव्रण-सहितत्वस्योत्कटैककोटिकसभावना-दुत्प्रेक्षालङ्कार ।

## भाषा

सैकडो योद्धाओ की तीखी खड्गधाराओ पर घूमने से मानो जिसके चरणो मे घाव हो गए है ऐसी लक्ष्मी, नीति युक्त कार्य करने वाले राजाओ के पास भी शरीर का पूर्ण बोझा देकर अर्थात् सर्वतो भावेन अपना पद नही रखती अर्थात् स्थान ग्रहण नही करती। अनीति युक्त कार्य करने वाले प्रमादियो के पास लक्ष्मी के निवास के सम्बन्ध मे कहना ही क्या है। अर्थात् प्रमादियो के पास तो लक्ष्मी आ ही नही सकती। जिसके पावो मे घाव रहता है वह स्वभाव से ही अपने चुटीले पाव पर शरीर का कुल बोझा देकर कभी नही चलता है। जख्मी पॉव वाली लक्ष्मी इसी से नीति निपुणो के पास भी अपने पाव पर शरीर का पूरा बोझा देकर नही रहती अर्थात् सर्वतो भावेन नही रहती।

**अवतरति मतिः कुपार्थिवानां सुकृतविपर्ययतः कुतोऽपि तादृक् ।**
**झटिति विघटते यया नृपश्रीस्तटगिरिसंघटितेव नौः पयोधेः ॥२६॥**

## अन्वयः

कुपार्थिवाना सुकृतविपर्ययतः कुतः अपि तादृक् मतिः अवतरति यया नृपश्रीः पयोधेः तटगिरिसघटिता नौः इव झटिति विघटते।

## व्याख्या

कुपार्थिवाना निन्द्यचरित्राणा नृपाणा सुकृतस्य पुण्यकर्मणो विपर्ययो दुष्कृतं तस्मात्पापादित्यर्थ । कुतोऽपि कस्मादपि वचोऽविषयात् तादृक् तादृशी विचित्रा मतिर्बुद्धिरवतरति सजायते यया दुर्बुद्धचा नृपश्री राजलक्ष्मी पयोधे समुद्रस्य तटे तीरे गिरि पर्वतस्तेन सघटिता सघट्टमासादिता नौरिव नौकेव झटिति द्राग् विघटते विपन्ना भवति समुद्रे मज्जति इति भाव । उपमालङ्कार ।

**भाषा**

दुश्चरित्र राजाओ के पाप से उनमे न जाने कहाँ से ऐसी बुद्धि अर्थात् कुबुद्धि आ जाती है जिससे राजलक्ष्मी, समुद्र के किनारे के पर्वतो से टकराई हुई नाव के समान शीघ्र नष्ट हो जाती है ।

**व्रतमिदमिह शस्त्रदेवतानां दृढमधुनापि कलौ निरङ्कुशेऽपि ।**
**अविनयपथवर्तिनं यदेताः प्रबलमपि प्रधनेषु वञ्चयन्ति ॥३०॥**

**अन्वयः**

इह निरङ्कुशे अपि कलौ शस्त्रदेवतानाम् इदं दृढं व्रत यत् एताः अधुना अपि अविनयपथवर्तिनं प्रबलम् अपि प्रधनेषु वञ्चयन्ति ।

**व्याख्या**

इहाऽस्मिन् जगति निरङ्कुशेऽपि निष्प्रतिबन्धेऽपि कलौ कलियुगे शस्त्राणामायुधाना देवतास्तदधिष्ठातृदेवतास्तेषामधुनाऽपि साम्प्रतमपीदमेतद् दृढ निश्चित व्रत नियमो यद्यस्मात्कारणादेता शस्त्राधिष्ठातृदेवता अविनयस्यौद्धत्यस्य पन्था मार्गोऽविनयपथस्तस्मिन् वर्तत इत्यविनयपथवर्ती त कुमार्गगामिन प्रबलमपि प्रकृष्टबलवन्त शूरमपि प्रधनेषु युद्धेषु 'युद्धमायोधन जन्य प्रधन प्रविदारणम्' इत्यमर । वञ्चयन्ति नाऽनुगृह्णन्ति तत्समीहित नोपनयन्ति । काव्य लिङ्गमलङ्कार ।

**भाषा**

इस जगत् मे इस निरङ्कुश कलियुग मे भी, शस्त्रो की अधिष्ठातृ देवताओ का सम्प्रति भी यह निश्चित नियम है कि वे अनीतिमार्गारूढ बलवान् से बलवान् को भी युद्धो मे धोखा देती है । अर्थात् उनका साथ नही देती ।

**इति मुषितधियः श्रिया प्रयान्त्या रभसवशादविचिन्त्य दग्धभूपाः ।**
**बलभरबहुमानतः पतङ्ग-व्रतमुपयान्ति परप्रतापदीपे ॥३१॥**

**अन्वयः**

इति प्रयान्त्या श्रिया मुषितधियः दग्धभूपाः रभसवशात् अविचिन्त्य बलभरबहुमानतः परप्रतापदीपे पतङ्गव्रतम् उपयान्ति ।

### व्याख्या

इति पूर्वोक्तापथगामित्वाद्धेतो प्रयान्त्या नृपमेक परित्यज्याऽन्यत्र गच्छन्त्या श्रिया राजलक्ष्म्या मुषिताऽपहृता धी सदसद्विवेकिनी बुद्धिर्येषा तेऽपहृतसन्मतयो दग्धभूपा दुष्टराजानो रभसवशादविमृश्यकारित्वादविचिन्त्याऽज्ञात्वैव बलस्य सैन्यस्य भरोऽतिशयस्तस्य बहुमानोऽतिदर्पस्तस्मात् स्वसैन्याधिक्यातिदर्पत परेषा शत्रूणा प्रतापस्तेज एव दीपस्तस्मिन पतङ्गाना शलभकीटाना व्रत गति शलभत्व-मित्यर्थ । उपयान्ति प्राप्नुवन्ति । शलभवत्परप्रतापदीपशिखाया भस्म-साद्भवन्तीति भाव । पतङ्गाना व्रतमिव व्रत प्राप्नुवन्तीत्यर्थपरामर्शात पदार्थ-निदर्शनालङ्कार ।

### भाषा

अनीतिमार्ग पर आरूढ होने मे, उन राजाओ को छोड कर अन्यत्र जाने वाली राजलक्ष्मी के द्वारा अपहृत सुबुद्धि वाले दुष्ट राजा लोग, बिना बिचारे शीघ्रता से कार्य करने के कारण, बडी पलटन होने के अधिक गर्व से अनजान मे ही शत्रु के प्रताप रूपी दीपक मे फतिङ्गो के समान जलकर भस्म हो जाते है ।

**सकलमपि विदन्ति हन्तशून्यं क्षितिपतयः प्रतिहारवारणाभिः ।**
**क्षणमपि परलोकचिन्तनाय प्रकृतिजडा यदमी न संरभन्ते ॥३२॥**

### अन्वयः

क्षितिपतयः प्रतिहारवारणाभिः सकलम् अपि शून्य विदन्ति हन्त । यत् प्रकृतिजडाः अमी परलोकचिन्तनाय क्षणम् अपि न संरभन्ते ।

### व्याख्या

क्षितिपतयो राजान प्रतिहारैर्द्वारपालैर्वारणा सर्वजनप्रवेशनिषेधकरणानि तैर्द्वारपालकृतसकललोकापसारणै सकलमपि सम्पूर्णमपि जगत् शून्य स्व विहाया-न्यनियन्तृरहित विदन्ति जानन्ति हन्तेति खेदे अथवा सर्वशून्यमिति बौद्धमत-मवलम्बते । यद्यस्मात्कारणात् प्रकृत्या स्वभावेन जडा मूर्खा अमी भूपा परलोकस्य मर्त्यलोक विहायाऽन्यलोकस्येहकृतकर्मफलभोगाश्रयभूतस्य जन्मान्तरस्य वा चिन्तनमस्तित्वविचारस्तस्मै परलोकचिन्तनाय क्षणमपि स्वल्पकालमपि न सरभन्ते न चेष्टा विदधति । बौद्धा अपि पुनर्जन्म नोररीकुर्वन्ति । पूर्ववाक्या-

र्थेऽपरवाक्यार्थस्य हेतुत्वप्रदर्शनात् काव्यलिङ्गमलङ्कार । अथवा पूर्वोत्तर वाक्यार्थयो परस्पर व्याप्त्याऽनुमानालङ्कार ।

### भाषा

दु ख की बात है कि ये दुष्ट राजा लोग द्वारपालो के रोकने से भीतर किसी का प्रवेश न होने के कारण भीतर एकान्त होने से सम्पूर्ण जगत् को शून्य अर्थात् अपने को छोड कर दूसरा कोई भी इस जगत् का नियन्ता नही है—ऐसा समझने लगते है । क्योकि ये स्वाभाविक मूर्ख राजागण इस लोक को छोड कर परलोक मे जाने पर उनकी क्या दशा होगी इसका क्षण भर भी विचार नही करते । अथवा 'सर्व शून्य' मानकर बौद्ध हो जाते है इसीलिये पुनर्जन्म नही मानते ।

**विदधति कुधियोऽत्र देवबुद्धिं स्फटिकशिलाघटनासु वर्तुलासु ।**
**इति मनसि निधाय दग्धभूपास्त्रिनयनलिङ्गमपि स्पृशंति मिथ्या ।।३३।।**

### अन्वयः

दग्धभूपाः, अत्र कुधियः वर्तुलासु स्फटिकशिलाघटनासु देवबुद्धि विदधति इति मनसि निधाय त्रिनयनलिङ्गम् अपि मिथ्या स्पृशन्ति ।

### व्याख्या

दग्धभूपा दुष्टनृपा, अत्राऽस्मिन् ससारे कुधियो निन्दितबुद्धयो मूर्खा इत्यर्थ । वर्तुलासु वर्तुलाकारासु स्फटिकस्य शिला पाषाणास्ताभिर्घटना निर्माण यासा तास्तासु स्फटिकनिर्मितशङ्करलिङ्गमूर्तिषु देवबुद्धि देवत्वज्ञान तदास्था वा विदधति कुर्वन्ति । जगति मूर्खा एव स्फटिकनिर्मितदेवमूर्तिषु देवबुद्धि धारयन्तीति भाव । इतीत्थ मनसि हृदये निधाय निश्चित्य त्रीणि नयनानि यस्य स त्रिनयनस्त्रिनेत्र शिवस्तस्य लिङ्ग लिङ्गरूपा मूर्ति मिथ्या मिथ्यात्वरूपेण स्पृशन्ति स्पर्शं कुर्वन्ति गृण्हन्तीत्यर्थ ।

### भाषा

इस ससार मे, मूर्ख लोग, स्फटिक की गोल शङ्कर की लिङ्ग मूर्तियो पर देवत्व बुद्धि रखते है, ऐसा मन मे निश्चय कर, दुष्ट राजा लोग शिव के ज्योतिर्लिङ्ग को भी मिथ्या समझते है ।

**अविरततरुणीसहस्रमध्य-स्थितिविगलत्पुरुषव्रता इवैते ।**
**प्रतिपदमतिकातराः क्षितीशाः परिकलयन्ति भयं समन्ततोऽपि ॥३४॥**

### अन्वयः

एते क्षितीशाः अविरततरुणीसहस्रमध्यस्थितिविगलत्पुरुषव्रताः इव प्रतिपदम् अतिकातराः (सन्तः) समन्ततः अपि भयं परिकलयन्ति ।

### व्याख्या

एते इमे दुष्टा क्षितीशा राजानोऽविरत सन्तत तरुणीना युवतीना सहस्र तस्य मध्ये या स्थितिर्निवासस्तया विगलत्परिपतत्पुरुषाणा नराणा व्रत धर्म पौरुषमित्यर्थ । येषा ते निरन्तरयुवतीसहस्रमध्यस्थित्या नश्यत्पौरुषा इव प्रतिपद प्रतिक्षणमतिकातरा अत्यन्तसभीतास्सन्त समन्ततोऽपि परितोऽपि भय भीति परिकलयन्ति परिपश्यन्ति विचारयन्तीत्यर्थ । अत्र तरुणीमध्यस्थितेर्नष्ट-पुरुषबले हेतुत्वेन सभावनादुत्प्रेक्षालङ्कार ।

### भाषा

सदैव हजारो युवतियो के बीच मे रहने से मानो जिनका पुरुषत्व ही नष्ट हो गया है, ऐसे ये दुष्ट राजा लोग, पद पद पर अत्यन्त कायर होकर, चारो ओर भय ही देखते है। अर्थात् उनको चारो ओर से भय की ही प्रतीति होती है।

**अभिसरणपरा सदा वराकी समरमहाध्वसु रक्तपङ्किलेषु ।**
**हृदि धरणिभुजामियं नृपश्रीर्निहितपदेव कलङ्कमातनोति ॥३५॥**

### अन्वयः

रक्तपङ्किलेषु समरमहाध्वसु सदा अभिसरणपरा इयं वराकी नृपश्रीः धरणिभुजा हृदि निहितपदा एव कलङ्कम् आतनोति ।

### व्याख्या

रक्तेन रुधिरेण पङ्किला कर्दमयुक्तास्तेषु समरा युद्धस्थलान्येव महाध्वानो विषममार्गास्तेषु सदा निरन्तरमभिसरण यान तस्मिन्पराऽऽसक्ता अभिसारिका वा रक्तपङ्किलयुद्धेषु सदा विहरमाणेत्यर्थ । इयमेषा वराकी असन्तुष्टा दुराचारिणी वा नृपश्री राजलक्ष्मी धरणिभुजा महीभुजा दुष्टाना राज्ञामित्यर्थः । हृदि

मनसि निहित स्थापित चरण यया सा निहितपदैव राज्ञा मनसि तस्या विचार-मात्रेणैवेति भाव । कलङ्क पङ्कचिह्न 'कलङ्काङ्कौ लाच्छनञ्च चिह्न लक्ष्म च लक्षणम्' इत्यमर । पक्षे चरित्रे लाच्छनमातनोति विस्तारयति । यथा कस्याश्चिद्धूलिधूसरितपदाया स्त्रिय पादस्य सयोगेन तत्स्थान मलिन भवति तथैव राजलक्ष्म्या मनसि विचारमात्रेणैव दुष्टाना राज्ञा हृदय कलुषित भवति किं पुनस्तल्लाभादिति भाव । अथवा शौर्यैकप्राप्याया राजलक्ष्म्या स्त्रैणनृप-मनसि तस्या सप्राप्तिविचारमात्रेणैव तेषा हृदय कलङ्कित भवतीति भाव । अथवा दुराचारिणीसम्बन्धान्नृपा अपि दुर्यशसो भवन्तीति भाव ।

### भाषा

खून के कीचड से भरे सग्राम रूपी विषम मार्गो पर घूमने मे आसक्त, असन्तुष्ट राजलक्ष्मी या अभिसारिका रूपी दुराचारिणी राजलक्ष्मी दुष्ट राजाओ के हृदय मे पैर रखते ही उसको कलङ्कित कर देती है । अर्थात् शौर्यमात्र से प्राप्त हो सकने वाली राजलक्ष्मी, स्त्रैण राजाओ के उसको प्राप्त करने की हार्दिक इच्छा ही से उनके हृदयो को कलुषित कर देती है । अथवा दुराचारिणी अभिसारिका रूपी राजलक्ष्मी के विचार से ही दुष्ट राजा कलङ्कित हो जाते है ।

**गुणिनमगुणिनं वितर्कयन्ती स्वजनममित्रमनाप्तमाप्तवर्गम् ।**
**वितरति मतिविप्लवं नृपाणामियमुपसर्पणमात्रकेण लक्ष्मीः ॥३६॥**

### अन्वयः

इय लक्ष्मीः उपसर्पणमात्रकेण गुणिनम् अगुणिनं स्वजनम् अमित्रम् आप्तवर्गम् अनाप्तं वितर्कयन्ती (सती) नृपाणा मतिविप्लव वितरति ।

### व्याख्या

इयमेषा लक्ष्मी राज्यश्री उपसर्पणमेव समीपगमनमेवेत्युपसर्पणमात्रमुप सर्पणमात्रमेवोपसर्पणमात्रक तेन सामीप्यप्राप्त्यैव गुणिन गुणवन्त पुरुषमगुणिनं गुणशून्य स्वजनमात्मीयजन मित्रमित्यर्थ । अमित्र शत्रुमाप्तवर्गमाप्ताना विश्वासपात्राणा वर्गं समूहमनाप्त सन्देहस्थान वितर्कयन्तीविचिन्तयन्ती (प्रयोज-कार्थे णिच् ।) नृपाणा राज्ञा मतिविप्लव बुद्धिविभ्रम वितरति प्रयच्छति । राजलक्ष्मीससर्गादेव नृपाणा मतिविभ्रमो भवतीति भाव ।

**भाषा**

यह राजलक्ष्मी पास मे आते ही राजाओ मे गुणी को गुणरहित, मित्र को शत्रु और विश्वासपात्रो को अविश्वासपात्र समझने का भाव उत्पन्न कर उनकी बुद्धि मे भ्रम उत्पन्न कर देती है।

**विधिलिखितमिदं कुटुम्बमध्ये नृपतिपदं समुपैति कश्चिदेव।**
**इति हृदि न विचारयन्ति भूपाः कुलमपि निर्दलयन्ति राज्यलुब्धाः ३७**

**अन्वयः**

भूपाः, इद विधिलिखित (यत्) कुटुम्बमध्ये कश्चित् एव नृपतिपद समुपैति, इति हृदि न विचारयन्ति (किन्तु) राज्यलुब्धाः (सन्तः) कुलम् अपि निर्दलयन्ति।

**व्याख्या**

भूपा राजान, इद वक्ष्यमाण वस्तु विधिना ब्रह्मणा लिखित लेखद्वारा सघटित, यतो लिखितमेव निश्चित भवति न तु भाषितम्। यत् कुटुम्बमध्ये कश्चिदेव भाग्यशाली जनो नृणा पतिर्नृपति स्वामी तस्य पद स्थान राज्यपदवी समुपैति सप्राप्नोतीति विषय हृदि मानसे न विचारयन्ति न परिशीलयन्ति किन्तु राज्ये राजपदे लुब्धा लोलुपास्सन्त कुलमपि स्ववशमपि निर्दलयन्ति विनाशयन्ति। स्वायोग्यतया स्वकीर्तिमन्तमपि वशमपकीर्त्या कलङ्कयन्तीति भाव ।

**भाषा**

राजा लोग यह नही विचार करते कि यह ब्रह्मा का लेख है कि कुल में (सब नही, किन्तु) कोई ही राजपद को प्राप्त करने योग्य होता है। किन्तु राज्य के लोभी बनकर ये राजा लोग अपने कुल को भी कलङ्कित कर डालते है।

**अनुचितममुना किमग्रजस्य व्यवसितमुन्नतचेतसा यदस्मिन्।**
**अपकरणधिया चकार सन्धिं कुलरिपुणा सह चोलराजिगेन ॥३८॥**

**अन्वयः**

उन्नतचेतसा अमुना अग्रजस्य अनुचित कि व्यवसित यत् (सः) अस्मिन् अपकरणधिया कुलरिपुणा चोलराजिगेन सह सन्धि चकार।

### व्याख्या

उन्नत समुदार चेतश्चित्त 'चित्तन्तु चेतो हृदय स्वान्त हृन्मानस मन.' इत्यमर । यस्य स उन्नतचेतास्तेनाऽमुना विक्रमाङ्कदेवेनाऽग्रजस्य ज्येष्ठ-भ्रातु सोमदेवस्य किमनुचित प्रतिकूल व्यवसित कृत यद्यस्मात्कारणादस्मि-न्विक्रमाङ्कदेवेऽपकरणस्याऽपकारस्य धीर्बुद्धिस्तया कुलरिपुणा वशपरम्परागत-शत्रुणा चोलराजिगेन वेङ्गिचोलदेशाधिपतिराजेन्द्रेण सह साक सन्धि गुप्त-मैत्री चकार सम्पादितवान् ।

### भाषा

उदारचित्त विक्रमाङ्क देव ने अपने वडे भाई सोमदेव का क्या बिगाडा था जो इसने, विक्रमाङ्क देव का अपकार करने की इच्छा से चालुक्य वश के शत्रु वेङ्गिचोलदेशाधिपति राजेन्द्र से सन्धि कर ली ।

**अथ नृपतनये कृतप्रयाणे गलितनयस्य वधाय राजिगस्य ।**
**त्वरिततरमुपागतोऽस्य पृष्ठे सह सकलेन बलेन सोमदेवः ॥३६॥**

### अन्वयः

अथ नृपतनये गलितनयस्य राजिगस्य वधाय कृतप्रयाणे (सति) सोमदेवः सकलेन बलेन सह अस्य पृष्ठे त्वरिततरम् उपागतः ।

### व्याख्या

अथाऽनन्तर नृपयाऽऽहवमल्लदेवस्य तनये पुत्रे विक्रमाङ्कदेवे गलित औचित्य-मार्गात्परिभ्रष्टो नयो नीतिमार्गो यस्य स तस्य राजिगस्य वेङ्गि-राजेन्द्रस्य वधाय नाशाय कृत विहित प्रयाण प्रस्थान येन स तस्मिन्, प्रस्थिते सति सोमदेवो ज्येष्ठभ्राता सकलेन सम्पूर्णेन बलेन सैन्येन 'अनीकिनी बल सैन्य चक्र चानीक-मस्त्रियाम्' इत्यमर । सह साकमस्य विक्रमाङ्कदेवस्य पृष्ठे पृष्ठभागे त्वरिततर द्रुततरमुपागतस्सप्राप्त. ।

### भाषा

बाद मे, राजपुत्र विक्रमाङ्क देव के, अनुचितनीति मार्ग पर आरूढ वेङ्गि-राजेन्द्र का वध करने के लिये रवाने होने पर, सोमदेव अपनी सब पलटनो के साथ इसके पीछे जल्दी से आ गया ।

**अथ षड्भिः पद्यैः सोमदेवहस्तिनो वर्णयति कविः—**

**अनुसरदसितातपत्रमैत्रीं मधुकरमण्डलमाससाद येषाम् ।**
**अतिविपुलकपोलदानपङ्क-प्रभवसरोरुहिणीदलानुकारम् ॥४०॥**

### अन्वयः

असितातपत्रमैत्रीम् अनुसरत् मधुकरमण्डल येषाम् अतिविपुलकपोल-दानपङ्कप्रभवसरोरुहिणीदलानुकारम् आससाद ।

### व्याख्या

असितस्य कृष्णवर्णस्याऽऽतपत्रस्य छत्रस्य मैत्री सादृश्य तामनुसरत्सधारयन्म-धुकराणा भ्रमराणा मण्डल समूहो, येषा सोमदेव गजानामतिविपुलेष्वत्यन्त-प्रशस्तेष कपोलेषु गण्डस्थलेषु दान मद एव पङ्क कर्दम स एव प्रभव उत्पत्तिस्थान यासा तासा सरोरुहिणीना कमलिनीना दलाना पत्राणा 'पत्र पलाश छदन दल पर्ण छद पुमान्' इत्यमर । अनुकार साम्यमाससाद भेजेऽनुप्रापेत्यर्थ ।

### भाषा

काले रग के छत्र के समान कृष्णवर्ण भौरो के समूह, सोमदेव के हाथियो के अति विशाल गण्डस्थलो पर के मद रूपी कीचड मे उत्पन्न नीले रग की कमलिनी के पत्तो की समानता प्राप्त कर रहे थे । अर्थात् नील कमलिनी के पत्तो के ऐमे शोभित होते थे ।

**अगणितसृणिभिः प्रधावितैर्यैः कुलगिरयः परिघट्टितास्तटेषु ।**
**मुमुचुरिव मुखैरजस्रमस्रं विगलितधातुतरङ्गिणीमिषेण ॥४१॥**

### अन्वयः

अगणितसृणिभिः प्रधावितैः यैः तटेषु परिघट्टिताः कुलगिरयः मुखैः विगलितधातुतरङ्गिणीमिषेण अजस्रम् अस्र मुमुचुः इव ।

### व्याख्या

अगणिता उपेक्षिता सृणयोऽङ्कुशा यैस्ते तैरङ्कुशनिक्षेपाऽनियन्त्रितै प्रधावितैस्तीक्ष्णवेगेन सचलद्भिर्यैर्गजैस्तटेषु प्रान्तभागेषु परिघट्टिता सघट्ट प्रापिताः कुलगिरय कुलपर्वता 'महेन्द्रो मलय सह्य शक्तिमानक्षपर्वत । विन्ध्यश्च

पारियात्रश्च सप्तैते कुलपर्वता'। मुखैरुर्ध्वभागैर्विगलिता स्रवन्ती धातुतरङ्गिणी गैरिकादिधातुनदी तस्या मिषेण व्याजेनाऽजस्र निरन्तरमस्र रुधिर 'रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितम्' इत्यमर । मुमुचुरिव सतत्यजुरिव ववमुरिवेत्यर्थ । गजसघट्टनात्ताडिता कुलपर्वता उपरिष्टात्पतद्गैरिकादिरक्तधातुनदीमिषेण मुखैरस्र निरन्तर ववमुरिवेति भाव । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

अङ्कुश की परवाह न कर, वेग से दौडने वाले इन हाथियो से, तट भाग मे टक्कर खाए हुए, अत एव चुटीले महेन्द्रादि कुलपर्वत, ऊपर से बहने वाली लाल रग की गेरू आदि धातुओ की नदी के बहाने से मानो मुखो से लगातार खून की कय कर रहे थे ।

**निजदशनयुगैकबद्धवासां श्रियमिव कर्तुमुपोढकौतुका ये ।**
**स्मरणशरणपङ्कजानि चक्रुः सततममर्षपुरःसराः सरांसि ॥४२॥**

**अन्वयः**

श्रिय निजदशनयुगैकबद्धवासां कर्तुम् इव उपोढकौतुकाः अमर्षपुरस्सराः ये सरासि सततं स्मरणशरणपङ्कजानि चक्रुः ।

**व्याख्या**

श्रिय लक्ष्मी निज स्वीय यद्दशनयोर्दन्तयोर्युग युगलमेवैक केवल तस्मिन् बद्धो दृढतया कृतो वास सस्थितिर्यया सा ता कर्तुमिव विधातुमिवोपोढ सजात कौतुक कुतूहल येषा ते 'कौतूहल कौतुकञ्च कुतुकञ्च कुतूहलम्' इत्यमर । अमर्ष क्रोध पुरस्सरो मुख्यो येषा ते ये सोमदेवनृपस्य गजा सरासि तडागान् सतत निरन्तर स्मरण स्मृतिरेव शरण रक्षास्थान येषा तानि स्मृतिशरणानि स्मृतिगोचराणि न तु लोके प्रत्यक्षविषयाणि पङ्कजानि कमलानि येषु तानि स्मृतिगोचरकमलानि पद्मरहितानीत्यर्थ । चक्रुर्विदधु । हस्तिना दन्तेषु श्रिय स्थान प्रसिद्धम् । तदुत्पत्तिमुत्प्रेक्षते कवि । यत्सरोवरगतलक्ष्मी-निवासस्थानकमलसमूहविनाशेन स्वदन्तेषु स्थिर लक्ष्मीनिवासस्थान ते चक्रुरिति भाव.।

**भाषा**

मानो लक्ष्मी को केवल अपने दोनो दातो की ही निवासिनी बनाने के ध्येय से अत्यन्त उत्सुक तथा क्रोध से भरे सोमदेव के हाथियो ने तलावो को स्मृतिमात्र

मे आने योग्य कमल वाले बनादिया अर्थात् लक्ष्मी के निवास स्थान कमलो को नष्ट कर दिया जिससे उनके दातो मे ही लक्ष्मी वास करे ।

**श्रवणमधुरविस्फुरद्ध्वनीनां व्यधुरुपकारधियेव षट्पदानाम् ।**
**मदसलिलमुदारसौरभं ये विटपिविधूननपातिभिः प्रसूनैः ॥४३॥**

### अन्वयः

ये श्रवणमधुरविस्फुरद्ध्वनीना षट्पदानाम् उपकारधिया इव विटपिविधूननपातिभिः प्रसूनैः मदसलिलम् उदारसौरभ व्यधुः ।

### व्याख्या

ये सोमदेवगजा श्रवणयो कर्णयोर्मधुर सुश्राव्य कोमल इत्यर्थ । विस्फुरद्विलसद् ध्वनि शब्दो येषा ते तेषा श्रवणमधुरविलसच्छब्दाना षट्पदाना भ्रमराणा 'षट्पदभ्रमरालय' इत्यमर । उपकारधिया हितसम्पादनबुद्ध्येव विटपिना वृक्षाणा विधूननेनाऽऽन्दोलनेन पातिभिरध पतनशीलै प्रसूनै पुष्पैर्मदसलिल मदजलमुदारोऽधिक सौरभ सुगन्धो यस्मिंस्तद्वयधु सचक्रु । कर्णमधुरशब्देनोपकृता गजा स्वमद पुष्परसेनाऽधिक सुस्वादु विधाय भ्रमरान् प्रत्युपकुर्वन्ति स्मेति कविरुत्प्रेक्षते । गज-भ्रमरयो परस्परमादानप्रदानाभ्या परिवृत्तिर्नामालङ्कार ।

### भाषा

इन सोमदेव के हाथियो ने कान मे आनन्द देने वाली गुजार करने वाले भौरो पर मानो उपकार करने की बुद्धि से वृक्षो को झकझोरने से गिरे हुए फूलो से अपने मद जल को अधिक सुगन्धित बना दिया । अर्थात् भ्रमरो के शब्द द्वारा आनन्द देने से उपकृत होकर उनके लिये अपने मद जल को फूलो से अधिक सुगन्धित बनाकर उनका प्रत्युपकार किया ।

**निजतनुभरगौरवाद्गलन्तीं क्षितिमिव ये दधति स्म शैलतुङ्गाः ।**
**मदमुकुलितलोचनाश्चलन्तः किमपि करैः सविलासमुन्नमद्भिः ॥४४॥**

### अन्वयः

शैलतुङ्गाः मदमुकुलितलोचनाः सविलासं चलन्तः ये उन्नमद्भिः करैः निजतनुभरगौरवात् गलन्तीं क्षिति किमपि दधति स्म इव ।

**व्याख्या**

शैलवत्पर्वतवत्तुङ्गा उन्नता पर्वतवद्विशालोच्चशरीरा मदेन दानेन मुकुलितानि निमीलितानि लोचनानि नयनानि येषा ते सविलास सलील चलन्तो मन्दविक्षेप कुर्वन्तो ये सोमदेवगजा उन्नमद्भिरूर्ध्वं क्रियमाणै करै शुण्डादण्डैर्निजा स्वकीयास्तनवो देहास्तेषा भरस्य भारस्य गौरवात स्थूलत्वेन गुरुत्वाद्गलन्तीमधो विशन्तीं क्षितिं भूमिं किमपि किञ्चिदपि दधति स्मेवोपरि गृह्णन्ति स्मेव ।

**भाषा**

पर्वत के ऐसे ऊँचे, मद से अधखुली आखवाले व मस्ती से झूम झूम कर धीरे धीरे चलने वाले सोमदेव के हाथी, अपने शरीर के बोझे से नीचे धँसने वाली पृथ्वी को मानो अपनी सूँड ऊपर उठा कर कुछ उभार रहे थे ।

**रणजलधिविलोडनप्रचण्डा गिरय इव द्विरदेश्वरास्तदीयाः ।**
**दधुरतिमहतीमतीतसंख्याः श्रियमधिरोहितयोधमण्डलास्ते ॥४५॥**

**अन्वयः**

अतीतसख्याः अधिरोहितयोधमण्डलाः रणजलधिविलोडनप्रचण्डाः गिरयः इव ते तदीयाः द्विरदेश्वराः अतिमहतीं श्रियं दधुः ।

**व्याख्या**

अतीतसख्या सख्यामतिक्रम्य वर्तन्त इत्यतीतसख्या गणनारहिता अधिरोहितानि स्वपृष्ठोपरि स्थापितानि योधाना सुभटाना मण्डलानि समूहा यैस्ते रणो युद्धमेव जलधिस्समुद्रस्तस्य विलोडनेऽवगाहने मन्थने प्रचण्डा निष्णाता गिरय इव पर्वता इव विशाला इत्यर्थ । ते प्रसिद्धास्तस्य सोमदेवस्येमे इति तदीया द्विरदेश्वरा गजेन्द्रा 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप' इत्यमर । अतिमहतीमत्यधिका श्रिय शोभा दधु धारयामासु । गिरिपक्षेऽअसख्याका योधमण्डलयुक्ता, जलधी रण इव तद्विलोडने मन्दराचलवत्प्रचण्डा गिरय इवेति दिक् ।

**भाषा**

असख्य, योधाओ को अपनी पीठ पर धारण करने वाले पक्ष मे अपने शिखरो पर रखने वाले, रणरूपी समुद्र को मन्थन करने मे प्रवीण, पक्ष मे समुद्र कोरण

मन्दराचल के समान मन्थन करने वाले पर्वतो के समान सोमदेव के गजेन्द्र अत्यन्त शोभा को प्राप्त हो रहे थे ।

इति सम्बन्धकुलकम्—कुलकमित्यर्थं ।

**अथ सोमदेवसेनाश्वान्पञ्चभिः श्लोकैर्वर्णयति कविः—**

**कुलिशकठिनलोहबन्धयोगान्निजगृहकुट्टिमवद्विलङ्घ्यते स्म ।**
**विशिखशकलकण्टकावतीर्णा रणखुरली खुरमण्डलैर्यदीयैः ॥४६॥**

**अन्वयः**

यदीयैः खुरमण्डलैः कुलिशकठिनलोहबन्धयोगात् विशिखशकलकण्टकावकीर्णा रणखुरली निजगृहकुट्टिमवत् विलङ्घ्यते स्म ।

**व्याख्या**

येषामश्वानामिमे इति यदीयास्तै खुरमण्डलै शफसमूहै 'शफ क्लीबे खुर पुमान्' इत्यमर । कुलिशवद्वज्रवत्कठिनाना कठोराणा लोहबन्धाना खुरेषु कीलितलोहाना "नाल" इति भाषाया प्रसिद्धाना, योगात्सम्बन्धाद्विशिखाना बाणाना शकलानि खण्डान्येव कण्टकास्तैरवकीर्णा व्याप्ता रणखुरली युद्धभूमिर्निजानि स्वकीयानि गृहाणि गेहा 'गृह गेहोदवसितम्' इत्यमर । तेषा कुट्टिमा निबद्धा भूस्तद्वत् 'कुट्टिमोऽस्त्री निबद्धा भू' इत्यमर । विलङ्घ्यते स्माऽतिक्राम्यते स्म ।

**भाषा**

जिन घोडो के खुरो से, वज्र के समान कडी नॉल बधी होने के कारण, बाणो के टुकडे रूपी काटो से आच्छादित युद्धभूमी, घुडसाल की फरशबन्दी के समान लाघी जाती थी अर्थात् घोडे, खुरो मे कडी नाल जडी होने के कारण आराम से घुडसाल की पक्की सतह पर चलन के समान बाणो के टुकडे रूपी काटो से आच्छादित रणभूमि पर भी आराम से चलते थे ।

**व्यजनचटुलवालधिप्रपञ्च-प्रचुरसमीरणपुञ्जमध्यवर्ती ।**
**त्वरितगमनलङ्घितोऽपि येषां मरुदविभाव्यतया न लज्जते स्म ॥४७॥**

**अन्वयः**

व्यजनचटुलवालधिप्रपञ्चप्रचुरसमीरणपुञ्जमध्यवर्ती मरुत् येषां त्वरित-गमनलङ्घितः अपि अविभाव्यतया न लज्जते स्म ।

**व्याख्या**

व्यजनानि तालवृन्तानीव चटुलाश्चपला वालधय पुच्छकेशपुञ्जाः 'पुच्छोऽस्त्री लूमलागूले वालहस्तश्च वालधि' इत्यमर । तेषा प्रपञ्चा विस्तारास्तेभ्य प्रचुरा बहुला समीरणा वायवस्तेषा पुञ्जस्य समूहस्य मध्ये वर्तत इति व्यजनचटुलवालधिप्रपञ्चप्रचुर-समीरणपुञ्जमध्यवर्ती मरुद्वायुर्येषा-मश्वाना त्वरितगमनेन शीघ्रगतिविशेषेण लङ्घितोऽप्यतिक्रान्तोऽप्यविभाव्य-तयाऽलक्ष्यतया न लज्जते स्म न त्रपते स्म । मरुद्गतिस्तु प्रसिद्धैव । परमश्वाना गतिस्तस्मादधिकेति लज्जास्थानम् । किन्तु मरुतो व्यजनचटुल-वालधिप्रपञ्चप्रचुरसमीरणपुञ्जवर्तित्वादविभाव्यतया को मा पश्यतीति भावेन लज्जा न सजातेति भाव । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

ताड के पखो के समान चचल पूँछो के हिलने से उत्पन्न अधिक हवाओ के समूह के मध्य मे विद्यमान पवन, घोडो से तीव्रगति मे पराजित होने पर भी अदृश्य होने से लज्जित न हुआ । अर्थात् घोडो से गति मे हरा दिये जाने पर भी अन्य वायुओ के मध्य मे रहने से मुझे कौन पहचान सकेगा इस भावना से मरुत् लज्जित न हुआ ।

**प्रतिफलननिभात्सहस्रभासा मणिमयपल्ययनप्रतिष्ठितेन ।**
**निजरथवहनार्थमर्थिता ये स्वयमधिरुह्य परीक्षिता इवासन् ॥४८॥**

**अन्वयः**

ये प्रतिफलननिभात् मणिमयपल्ययनप्रतिष्ठितेन सहस्रभासा निजवाह-नार्थम् अर्थिताः (सन्तः) स्वयम् अधिरुह्य परीक्षिताः इव आसन् ।

**व्याख्या**

येऽश्वा प्रतिफलनस्य प्रतिबिम्बस्य निभात् व्याजात् 'निभ व्याजसदृक्षयो' इति कोश । मणीना विकार इति मणिमय तादृश पल्ययन पर्याण (काठीति

भाषायाम्) तस्मिन् प्रतिष्ठितेन समुपविष्टेन मणिमयपल्ययनप्रतिबिम्बितेनेत्यर्थ । सहस्र भासो मयूखा यस्य तेन सहस्रभानुना सूर्येण तेषामश्वाना सर्वश्रेष्ठत्वान्निजवहनार्थं स्ववाहनकल्पनार्थमर्थिता अपेक्षिता सन्त स्वय साक्षात्स्वयमेव तानधिरुह्याऽश्वोपरि समुपविश्य परीक्षितास्तीव्रतमा गतिरस्ति न वेति निरीक्षिता इवाऽऽसन् । सूर्याश्वतोऽपि तेषामश्वाना श्रेष्ठत्वमिति भाव । सापन्हवोत्प्रेक्षालङ्कार ।

## भाषा

इन घोडो की रत्न जडित काठियो पर सूर्य के प्रतिविम्ब पडने के मिष से (अपने घोडो से अच्छे समझ) सूर्य द्वारा अपना वाहन बनाने के लिये मागे हुए इन घोडो पर मानो स्वय सूर्य ने सवारी कर उनकी परीक्षा की हो ।

**जवसमुचितधावनानुरूपा किमिति कृता पृथुला न नाथ पृथ्वी ।**
**नभसि खुरपुटैरिति स्फुरद्भिर्विधिमिव ये स्म मुहुः प्रतिक्षिपन्ति ४६**

## अन्वयः

(हे) नाथ ! पृथ्वी जवसमुचितधावनानुरूपा पृथुला किमिति न कृता इति नभसि स्फुरद्भिः खुरपुटैः ये विधि मुहुः प्रतिक्षिपन्ति स्म इव ।

## व्याख्या

हे नाथ ! हे स्वामिन् ब्रह्मन् । पृथ्वी मेदिनी जवस्य वेगस्य समुचित योग्य धावन तीव्रगमन तस्याऽनुरूपाऽनुकूला पृथुला विस्तृता महतीत्यर्थ 'विशङ्कट पृथुबृहद्विशाल पृथुल महत्' इत्यमर । किमिति कस्माद्धेतोर्न कृता न विहिता । इति हेतोरीदृशमनौचित्य मनसि परिज्ञाय नभसि व्योम्नि स्फुरद्भिरितस्तत समुच्छलद्भि खुरपुटै शफसपुटै येऽश्वा विधि ब्रह्माण मुहुर्भूय प्रतिक्षिपन्ति स्मेव समुपालभन्ते स्मेव । खे खुरपुटस्फुरणे ब्रह्मण उपालम्भस्याहार्यसभावनादुत्प्रेक्षालङ्कार ।

## भाषा

हे ब्रह्मा जी । आपने इस पृथ्वी को वेग के अनुसार दौड लगाने योग्य विस्तृत क्यो नही बनाया । इसीलिए मानो वे घोडे आकाश मे ऊपर दिखाई देने वाले अपने खुरपुटो से ब्रह्मा को उलाहना दे रहे थे या ब्रह्मा की लिहाडी ले रहे थे ।

**प्रतिदिशमधिरोहिताश्ववाराः परिचितकाञ्चनचित्रवर्मबन्धाः ।**
**अगणितकृतपङ्क्तयो हयास्ते कमिव न चक्रुरुपक्रमं तदीयाः ॥५०॥**

**अन्वयः**

अधिरोहिताश्ववाराः परिचितकाञ्चनचित्रवर्मबन्धाः अगणितकृत-पङ्क्तयः ते तदीयाः हयाः प्रतिदिश कम् इव उपक्रम न चक्रुः ।

**व्याख्या**

अधिरोहितास्स्वपृष्ठोपरि समुपवेशिता अश्ववारा सादिन 'अश्वारोहास्तु सादिन' इत्यमर । यैस्ते परिचितानि गात्रेषु शोभार्थं निर्मितानि काञ्चनस्य सुवर्णस्य चित्रा विचित्रा वर्मबन्धा कवचानि येषा तेऽगणिता सख्यामतिक्रान्ता कृता बद्धा पङ्क्तय श्रेणयो येषा ते तथोक्तास्ते प्रसिद्धास्तदीयास्सोमदेव-सम्बन्धिनो हया अश्वा प्रतिदिश दिशि दिशि कमिवोपक्रम समुद्योग न चक्रु न विदधु सर्वमेवोपक्रम चक्रुरिति भाव । अनेन तेषामश्वानामतिसाहसकर्मकारित्वं सूचितम् ।

**भाषा**

घोडसवारो को अपने पीठ पर बैठाए हुए, अपनी शोभा और रक्षा के लिये सोने के विचित्र कवचो को धारण करने वाले, असख्य कतारे बनाए हुए उन प्रसिद्ध सोमदेव के घोडो ने प्रत्येक दिशा मे कौनसा साहसयुक्त कार्य नही किया ।

**इति पञ्चभिः कुलकम् ।**

**असितविलसितेन तद्बलानामसिलतिकानिवहेन निर्मलेन ।**
**गगनगिरितटी नवेन्द्रनील-द्रुतिशतनिर्झरधारिणीव रेजे ॥५१॥**

**अन्वयः**

गगनगिरितटी तद्बलानाम् असितविलसितेन निर्मलेन असिलतिका-निवहेन नवेन्द्रनीलद्रुतिशतनिर्झरधारिणी इव रेजे ।

**व्याख्या**

गगनमाकाशमेव गिरि पर्वतस्तस्य तटी प्रान्तभाग (कर्त्री) तस्य सोमदेवस्य बलानि सैन्यानि 'अनीकिनी बल सैन्य चक्र चानीकमस्त्रियाम्' इत्यमर । तेषा

सोमदेवसैन्याना असित कृष्ण विलसित चेष्टित स्वरूप वा यस्य स तेन श्याम-वर्णेन निर्मलेन विशदेनाऽसय खड्गा एव लतिका लतास्तासा निवहेन समूहेन हेतुना नवो नवीनो य इन्द्रनीलो मरकतमणिस्तस्य द्रुतीना द्रवीभूतपदार्थाना शतानि तेषा निर्झरान् वारिप्रवाहान् 'वारिप्रवाहो निर्झरो झर' इत्यमर । धारयतीति नवेन्द्रनीलद्रुतिशतनिर्झरधारिणीव नवीनमरकतमणिद्रवीभूतपदार्थ-शतप्रवाहधारिणीव रेजे शुशुभे। खडगलतानिवहे कृष्णत्वसाम्यादिन्द्रनीलद्रव-शतनिझरत्वस्य सम्भावनाद्रुत्प्रेक्षालङ्कार ।

### भाषा

आकाशरूपी पर्वत का प्रान्तभाग, सोमदेव की सेना के कृष्णवर्ण निर्मल तलवार रूपी लताओ के समूह से मानो नये मरकत मणी (पन्ने) के पानी के सैकडो झरनो को धारण करता हुआ शोभित होता था ।

**क्व नु न विलसति स्म कुन्तमाला कलितशिखण्डिशिखण्डमण्डनश्रीः।**
**क्षणमविरहिता विपक्षसेना–भटशिरसामिव मण्डलैस्तदीया ।।५२।।**

### अन्वयः

कलितशिखण्डिशिखण्डमण्डनश्रीः तदीया कुन्तलमाला विपक्षसेना-भटशिरसा मण्डलैः क्षणम् अविरहिता इव क्व नु न विलसति स्म ।

### व्याख्या

कलिता धारिता शिखण्डिना मयूराणा शिखण्ड पिच्छमेव मण्डन भूषण, तस्य श्री शोभा यया सा तदीया सोमदेवसैन्यसम्बन्धिनी कुन्तमाला प्रासपङ्क्ति 'प्रासस्तु कुन्त' इत्यमर । विपक्षाणा शत्रूणा सेना सैन्य तासा भटा योद्धार-स्तेषा शिरासि मूर्धानस्तेषा मण्डलैस्समूहै क्षणमीषत्कालायाऽविरहितेव युक्तेव क्व नु कस्मिन्समराङ्गणप्रदेशे न विलसति स्म न प्रस्फुरति स्म। सर्वत्र विलसति स्मेति भाव । मयरपिच्छशोभितास्तदीयसेनाकुन्ता क्षण शत्रुमस्तक-धारिण इव सर्वत्र दृश्यन्ते स्मेत्यर्थ ।

### भाषा

मोरपख की सजावट से सजाया हुआ सोमदेव के भालो का समूह, थोडी देर के लिये, शत्रु की सेना के योद्धाओ के मस्तक समूहो से युक्त होने के समान, कहाँ नही दिखाई देता था अर्थात् सर्वत्र दिखाई देता था ।

**बहुभिरभिहितैः किमद्भुतैर्वा भयजननं भुवनैकमल्लसैन्यम् ।**
**रणरसचलितं विलोक्य केषामलभत चेतसि नान्तरं विकल्पः ॥५३॥**

### अन्वयः

बहुभिः अद्भुतैः अभिहितैः किं वा । भयजननं भुवनैकमल्लसैन्यं रणरसचलितं विलोक्य केषां चेतसि विकल्पः अन्तरं न अलभत ।

### व्याख्या

बहुभिरनेकैरद्भुतैराश्चर्यकारिभिरभिहितैः कथितैर्वर्णनैरित्यर्थः । किं वा किम्फलं न किमपीत्यर्थः । भयस्य त्रासस्य जननमुत्पत्तिर्यस्मात्तत् भयोत्पादकं भुवने जगत्येकोऽद्वितीयो मल्लो वीरस्सोमदेवस्तस्य सैन्यं बलं रणस्य युद्धस्य रसेनोत्साहेन चलितं समापतन्तं विलोक्य दृष्ट्वा केषां नृपाणां चेतसि हृदये विकल्पः संशयोऽन्तरमवकाशः 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः । नाऽलभत न प्राप । राजानोऽपि तद्बलं वीक्ष्य विजये संशय-युक्ता अभूवन्निति भावः ।

### भाषा

बहुत सी आश्चर्य जनक बातें कहने से क्या लाभ ? भयजनक, जगत् के अद्वितीय वीर सोमदेव की सेना को, युद्ध के उत्साह से आई हुई देखकर किन राजाओं के हृदय में सन्देह को अवकाश नहीं मिलता था अर्थात् सभी राजा इसकी पलटन देखकर विजय के विषय में सन्दिग्ध हो जाते थे ।

**द्रविडबलभरे क्रमादवाप्ते निकटमुदारभुजस्य राजसूनोः ।**
**अपि नृपतिरसौ समीपमागादपकरणावसरं चिरादवाप्य ॥५४॥**

### अन्वयः

द्रविडबलभरे उदारभुजस्य राजसूनोः क्रमात् निकटं अवाप्ते (सति) असौ नृपतिः अपि अपकरणावसरं चिरात् अवाप्य समीपम् आगात् ।

### व्याख्या

द्रविडबलानि द्रविडदेशाधिपतेः । चोलराजराजिगसैन्यानि तेषां भरस्समूहः 'नित्यानवरताजस्रमप्यथातिशयो भरः' इत्यमरः । तस्मिन् द्रविडराजसैन्य

समूह उदारौ महाशक्तिमन्तौ भुजौ बाहू यस्य तस्य राजसूनो राजपुत्रस्य विक्रमाङ्कदेवस्य क्रमात् क्रमशो निकट समीपमवाप्ते प्राप्ते सत्यसौ प्रसिद्धो नृपतिर्भूपतिस्सोमदेवोऽप्यपकरणस्य वैरनिर्यातनस्याऽवसर समुचितसमय चिराद्ब-हुकालानन्तरमवाप्याऽधिगत्य समीप विक्रमाङ्कदेवसमीपमागादाजगाम ।

### भाषा

धीरे २, द्रविडदेश के राजा चोलराज राजिग की भारी पलटन के, महा-शक्तिशाली भुजावाले राजपुत्र विक्रमाङ्कदेव के पास आने पर, राजा सोमदेव भी चिरकाल के बाद बैर निकालने का अवसर प्राप्त कर, उसके (विक्रमाङ्क देव के) समीप आ गया ।

**ग्रहकलितमिवाग्रजं विलोक्य प्रहरणसम्मुखमश्रुपूर्णनेत्रः ।**
**किमपि किमपि विक्रमाङ्कदेवश्चिरमनुचिन्त्य निवेदयाञ्चकार ॥५५॥**

### अन्वयः

विक्रमाङ्कदेवः प्रहरणसम्मुखम् अग्रज ग्रहकलितम् इव विलोक्य अश्रु-पूर्णनेत्रः (सन्) किमपि चिरम् अनुचिन्त्य किमपि निवेदयाञ्चकार ।

### व्याख्या

विक्रमाङ्कदेव प्रहरणाय शस्त्रै प्रहार कर्तुं सम्मुख समक्षमागतमग्रज ज्जेष्ठभ्रातर सोमदेव ग्रहै शनैश्चरादिपापग्रहै कलित ग्रस्तमिव विलोक्य दृष्ट्वाऽश्रुभिर्बाष्पै पूर्णे व्याप्ते नेत्रे नयने यस्य स बाष्पाम्बुपूरितनयनस्सन् किमपि वस्तु चिर बहुकालमनुचिन्त्य विचार्य किमपि वस्तु निवेदयाञ्चकार कथितवान् शनैरुवाचेत्यर्थ ।

### भाषा

विक्रमाङ्कदेव ने प्रहार करने के लिये उद्यत, दुष्टग्रहो से गृहीत होने के समान, अपने बडे भाई सोमदेव को देखकर आँखो मे आँसु भरकर बहुत देर तक कुछ सोच कर कुछ कहना प्रारम्भ किया ।

**अहह महदनर्थबीजमेतद् विधिहतकेन विरोधसारिणीभिः ।**
**अविनयरसपूरपूरिताभिर्विहितमकीर्तिफलप्रदानसज्जम् ॥५६॥**

### अन्वयः

विधिहतकेन अविनयरसपूरपूरिताभिः विरोधसारिणीभिः अहह ! एतत् अकीर्त्तिफलप्रदानसज्ज महत् अनर्थबीज विहितम् ।

### व्याख्या

विधिर्ब्रह्मैव भाग्यमेव वा हतको नीचस्तेन विधिहतकेन दुर्दैवेन 'दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधि' इत्यमर । अविनयो दुराचार एव रसो जल तस्य पूरेण प्रवाहेण पूरिता परिपूर्णास्ताभिर्दुराचारपूरपरिपूर्णाभिर्विरोधो वैरमेव सारिणी जलप्रणालिकाऽल्पनद्यो वा ताभिरहहेतिखेदे ! एतद्भ्रातृयुद्धमकीर्ति-रयश एव फल परिणामस्तस्य प्रदाने समुत्पादने सज्ज समुद्यतमकीर्तिफलप्रदान-समुद्यत महत् विशिष्टमनर्थस्याऽनुचितकार्यस्य बीज कारण विहित सम्पादितम् ।

### भाषा

अरे रे ! दुर्भाग्य ने, दुराचार रूपी जल की बाढ से भरे वैर रूपी नालो (की सहायता) से, यह, अपयश रूपी फल को पेदा करने मे सन्नद्ध, एक विशिष्ट अनुचित कार्य (रूपी वृक्ष) के बीज को बो दिया है। अर्थात् बडे दु ख की बात है कि दुर्दैव से यह भाइयो का परस्पर युद्ध होकर जगत् मे अपकीर्ति फैल जाएगी ।

**इह निहतनयः समागतो यत् सममुना परिपन्थिनाग्रजो मे ।**
**समरशिरसि सञ्चरन्पृषत्कैः कथमपरामृशता मया निवार्यः ॥५७॥**

### अन्वयः

यत् निहतनयः मे अग्रजः अमुना परिपन्थिना सम इह समागतः (तत्) समरशिरसि सञ्चरन् (अय) पृषत्कैः अपरामृशता मया कथं निवार्यः ।

### व्याख्या

यद्यस्मात्कारणान्निहतो न्याययुक्तधर्ममार्गात्परिच्युतो नयो राजनीतिर्यस्य स. परिभ्रष्टनीतिमार्गो मे ममाऽग्रजो ज्येष्ठभ्राता सोमदेवोऽमुनाऽनेन परिपन्थिना शत्रुणा 'अभिघाति-परारातिप्रत्यर्थिपरिपन्थिन' इत्यमर । द्रविडाधिपति-राजिगेन सम सह 'साक सत्रा सम सह' इत्यमर । इहाऽस्मिन्प्रदेशे सग्रामभूमौ

समागत प्राप्त । तत्तस्मात्कारणात् समरस्य रणस्य शिरस्यग्रे सञ्चरन्निर्भय परिभ्रमन्नय सोमदेव पृषत्कैर्बाणैरपरामृशता स्पर्शमकुर्वता मया विक्रमाङ्कदेवेन कथ केन प्रकारेण निवार्यो दूरीकरणीय । युद्धाय कृतनिश्चयोऽय सोमदेवो मत्कृतबाणप्रहारमन्तरा समराङ्गण विहाय कथ गमिष्यतीति भाव ।

### भाषा

चूँकि नीतिमार्ग से च्युत मेरा बडा भाई सोमदेव मेरे इस शत्रु द्रविडाधिपति राजिग के साथ यहाँ आया है इसलिए युद्ध मे आए हुए अपने बडे भाई को मैं किस प्रकार बिना बाणो से आघात पहुँचाए दूर करूँ ?

**पितुरपि परिपन्थिनीं विधाय श्रियमहमत्र निवेशयाम्बभूव ।**
**सपदि कथमिमं कदर्थयामि व्यथयति मामहहा महाननर्थः ॥५८॥**

### अन्वय.

अहं श्रिय पितुः अपि परिपन्थिनीं विधाय अत्र निबेशयाम्बभूव (अह) इम सपदि कथं कदर्थयामि । अहहा ! महान् अनर्थः मा व्यथयति ।

### व्याख्या

अह विक्रमाङ्कदेव श्रिय राज्यलक्ष्मी पितुराहवमल्लदेवस्याऽपि परिपन्थिनी विरुद्धा पित्राऽप्यननुमोदितामित्यर्थ । विधाय रचयित्वाऽत्र सोमदेवे निवेशयाम्बभूव स्थापयाञ्चकार । अह सपदि सद्य इम सोमदेव कथ कस्मात्कदर्थयामि पीडयामि अहहेति खेदे । महाननर्थो भाविमहदनिष्ट मा व्यथयति मे मनसि विपुलाधि जनयति ।

### भाषा

मैंने ही अपने पिता आहवमल्लदेव की इच्छा के विरुद्ध, इसको राज्यलक्ष्मी दिलाई । अब मैं तुरन्त ही अपने बडे भाई सोमदेव को (जिसको मैं ने ही राजगद्दी दिलाई है) कैसे कुचलूँ । अरे रे ! बडा भारी (भावी) अनर्थ मुझे पीडित कर रहा है ।

**अपसरणमितः करोमि किंस्वित् प्रसरति गोत्रवधाय नैष बाहुः ।**
**परमयमयशांसि दुष्टलोकः किमपि निपात्य मयि प्रमोदमेति ॥५९॥**

**अन्वयः**

किस्वित् इतः अपसरण करोमि । एष बाहुः गोत्रवधाय न प्रसरति । परम् अयं दुष्टलोकः अयशांसि मयि निपात्य किम् अपि प्रमोदम् एति ।

**व्याख्या**

किस्विदथवा किमितोऽस्माद्रणाङ्गणादपसरण पलायन करोमि । एष मे बाहुर्भुजो गोत्रस्य मत्कुलोत्पन्नस्य ज्येष्ठभ्रातुस्सोमदेवस्य वधाय नाशाय न प्रसरति व्यापार न कुरुते । पर किन्त्वय दुष्टलोको दुर्जनसमूहोऽयशास्यप-कीर्तीर्मयि विक्रमाङ्कदेवे निपात्य निक्षिप्य किमप्यनिर्वचनीय प्रमोदमानन्दमेति । सज्जनास्तुभ्रातु सरक्षणार्थं रण विहाय गत इति यथार्थं कथयिष्यन्ति परन्तु दुर्जना भीत्यैवाऽय पलायित इति मनसि निर्धार्याऽपयश प्रसार्य प्रमोदमुद्वहिष्य-न्तीति भाव ।

**भाषा**

अथवा क्या मैं रणभूमि से भाग चलूँ ? यह मेरी भुजा अपने कुल के प्राणी का नाश करने मे अग्रसर नही होती है । परन्तु दुष्ट लोग भय से रण छोडकर भाग गया—ऐसा मेरा अपयश फैलाकर आनन्द करेगे ।

**इति गिरमभिधाय निष्कलङ्कां विशदमनाः शनकैर्यशोधनोऽसौ ।**
**अनुनयवचनानि तस्य पार्श्वे कति न विसर्जयति स्म राजपुत्रः ॥६०॥**

**अन्वयः**

विशदमनाः यशोधनः असो राजपुत्रः इति निष्कलङ्कां गिर शनकैः अभिधाय कति अनुनयवचनानि तस्य पार्श्वे न विसर्जयति स्म ।

**व्याख्या**

विशद निर्मल मनश्चित्त यस्य स निर्मलचित्तो यश एव कीर्तिरेव धन वित्त यस्य स कीर्तिवित्तोऽसौ राजपुत्रो विक्रमाङ्कदेव इति पूर्वोक्ता निष्कलङ्कां काल्ष्यरहिता गिर वाणी शनकै शनैरभिधाय व्याहृत्य कति कियन्त्यनुनयस्य प्रार्थनाया वचनान्युक्तीस्तस्य सोमदेवस्य पार्श्वे सन्निधौ न विसर्जयतिस्म न प्रेषयतिस्म । किन्तु दूतद्वारा बहुतर प्रार्थनमकरोदिति भाव ।

**भाषा**

निर्मलचित्त, यशोधन इस राजपुत्र ने पूर्वोक्त कालुष्य रहित बाते धीरे से कह कर कितने प्रार्थना के सन्देश सोमदेव के पास नही भेजे। अर्थात् बहुत से प्रार्थना के सदेसे युद्ध मे सम्मिलित न होने के लिये भेजे।

**स तु शपथशतैः प्रपद्य सर्वं वितथवचाः कुलपांसनत्वमाप्तः।**
**क्षणमनुगुणमैक्षत प्रहर्तुं मलिनधियां धिगनार्जवं चरित्रम् ॥६१॥**

**अन्वयः**

वितथवचाः कुलपासनत्वम् आप्तः सः तु शपथशतैः सर्वं प्रपद्य प्रहर्तुं अनुगुण क्षणम् ऐक्षत। मलिनधिया चरित्र अनार्जव धिक्।

**व्याख्या**

वितथ मिथ्या वचो वचन यस्य स मिथ्याभाषी कुलस्य गोत्रस्य पासन-कलङ्कस्तस्य भाव कुलपासनत्वमाप्तो वशकलङ्कत्वमुपागत स तु सोमदेवस्तु शपथाना शतानि तैरसख्यशपथग्रहणै सर्व विक्रमाङ्कदेवप्रार्थित प्रपद्य तथेत्यङ्गी-कृत्य विक्रमाङ्कदेव प्रहर्तुं मारयितुमनुगुणमनुकूल क्षणमवसरमैक्षत दृष्टवान् प्रतीक्षते स्मेत्यर्थ। मलिना मलीमसा 'मलीमस तु मलिन कच्चर मलदूषितम्' इत्यमर। धीर्बुद्धिर्येषा ते तेषा मलीमसबुद्धिमता चरित्र वृत्तमनार्जव कुटिल कौटिल्यपूर्णमित्यर्थ। इति धिक्। अत्राऽर्थान्तरन्यासालङ्कार।

**भाषा**

मिथ्याभाषी, कुलाङ्गारता को प्राप्त यह सोमदेव तो विक्रमाङ्कदेव की प्रार्थनाओ को, सैकडो कसमे खा, स्वीकार कर, उसको मार डालने के लिए अनुकूल मौका खोजता था। मलिन बुद्धि वालो के चरित्र को धिक्कार है जो कि सर्वदा कौटिल्यपूर्ण होता है।

**किमिदमुपनतं यशोविरोधि त्रिदिवगतः किमु वक्ष्यते पिता मे।**
**इति मनसि निधाय जातनिद्रं नृपतनयं शशिमौलिरादिदेश ॥६२॥**

**अन्वयः**

शशिमौलिः 'यशोविरोधि इदं किम् उपनतं, त्रिविगतः मे पिता किमु वक्ष्यते' इति मनसि निधाय जातनिद्रं नृपतनयम् आदिदेश।

**व्याख्या**

शशोऽस्यास्तीति शशी चन्द्रो मौलौ शिरसि यस्य स शशिमौलि शङ्करो, यशस कीर्तेर्विरोधि विपरीतमयशस्करमित्यर्थ । इद सोमदेवप्रेरितसमररूपकार्यं किमुपनत कथ प्राप्तम् । त्रिदिव स्वर्ग 'स्वरव्यय स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमर । गत प्राप्त इति त्रिदिवगत स्वर्गतो मे मम विक्रमाङ्कदेवस्य पिताऽऽहवमल्लदेव किमु वक्ष्यते कि कथयिष्यति । इति सर्व मनसि हृदये निधाय सस्थाप्य जातनिद्र जाता समागता निद्रा स्वापो यस्य स त सुप्त नृपतनय राजकुमार विक्रमाङ्कदेवमादिदेशाऽऽज्ञप्तवान् ।

**भाषा**

अपयश पैदा करने वाला यह मौका कैसे आ गया ? स्वर्गवासी मेरे पिता आहवमल्लदेव मुझे क्या कहेगे ? ऐसी बाते मन मे रख कर, सोए हुए उस राजकुमार को चन्द्रशेखर महादेव ने (स्वप्न मे) आज्ञा दी ।

**त्वमिह महति वत्स देवकार्ये ननु गुणवानवतारितो मयैव ।**
**तरलयति मुधा विकल्पदोला किमिति मनस्तव शुद्धधैर्यधाम्नः ॥६३॥**

**अन्वयः**

हे वत्स ! मया एव इह महति देवकार्ये गुणवान् त्वं अवतारितः ननु । विकल्पदोला शुद्धधैर्यधाम्नः तव मनः किम् इति मुधा तरलयति ।

**व्याख्या**

हे वत्स ! हे प्रिय बालक ! मयैव शिवेनैवेत्यर्थ । इहाऽस्मिन् जगति महति विशाले देवकार्ये सुरकार्यार्थ गुणवान् दयादाक्षिण्यशौर्यादिगुणशाली त्व विक्रमाङ्कदेवोऽवतारित समुत्पादितो ननु निश्चयेन । विकल्प सन्देह एवोभय-पक्षस्य समबलत्वेनाऽऽश्रयणाद्दोला प्रेखा 'दोला प्रेखादिका स्त्रियाम्' इत्यमर । शुद्धस्य चाञ्चल्यरहितस्य धैर्यस्य धीरताया धाम स्थान तस्य तव मनश्चित्त किमिति कथ मुधा व्यर्थं तरलयति चञ्चलयति । सशय विहाय समरोद्यतो भवेति भाव ।

**भाषा**

हे प्रिय बालक ! इस ससार मे देवताओ के बड़े महत्वयुक्त कार्य करने के लिये दया दाक्षिण्य शौर्य आदि गुणो से युक्त तुझ (विक्रमाङ्कदेव) को निश्चय-

पूर्वक मैंने ही उत्पन्न कराया है। सदेह रूपी हिडोला, निर्दोष धैर्य के आश्रय स्थान, तुम्हारे मन को व्यर्थ ही क्यो चलायमान कर रहा है। अर्थात् सन्देह छोड कर युद्ध करो।

**सपदि न शुभमस्ति भोगहेतोस्तिलपरिमाणमपि त्वदग्रजस्य।**
**इह हि विहितभूरिदुष्कृतानां विगलति पुण्यचयः पुरातनोऽपि ॥६४॥**

**अन्वयः**

सपदि त्वदग्रजस्य भोगहेतोः तिलपरिमाणम् अपि शुभ न अस्ति। हि इह विहितभूरिदुष्कृताना पुरातनः अपि पुण्यचयः विगलति।

**व्याख्या**

सपदि झटिति 'स्राक् झटित्यञ्जसान्हाय द्राङमक्षु सपदि द्रुते' 'सद्य सपदि तत्क्षणे' इत्यमर। त्वदग्रजस्य तव ज्येष्ठभ्रातुस्सोमदेवस्य भोगहेतो सुख-भोगार्थ तिलपरिमाणमप्यल्पमात्रमपि शुभ पुण्यकर्म नाऽस्ति न विद्यते नाऽवशिष्ट भविष्यतीति भाव। हि यस्मात्कारणादिहाऽस्मिञ्जगति विहितानि कृतानि भूरीणि बहुनि दुष्कृतानि कुकर्माणि यैस्ते तेषा कृतपापाना पुरातनोऽपि प्राचीनोऽपि पूर्वसञ्चित इत्यर्थ। पुण्यचय सुकृतसमुदायो विगलति नश्यति समाप्ति-मेतीत्यर्थ.।

**भाषा**

जल्दी ही तुम्हारे बडे भाई सोमदेव की सुखानुभूति के लिय रत्तीभर भी पुण्यकर्म (अवशिष्ट) न रहेगा। क्योकि इस ससार मे अत्यधिक पाप करने वालो का प्राचीन सञ्चित पुण्य भी क्षीण हो जाता है।

**भव भुवनमहोत्सवे तदत्र प्रगुणधनुः परिपन्थिनां प्रमाथे।**
**स्मरसि न किमिति स्थितिस्तवैषा ननु भुवि धर्मविरोधिनां वधाय ॥६५॥**

**अन्वयः**

तत् अत्र भुवनमहोत्सवे परिपन्थिनां प्रमाथे प्रगुणधनुः भव। भुवि एषा तव स्थितिः धर्मविरोधिनां वधाय ननु, इति किं न स्मरसि।

### व्याख्या

तत्तस्मात्कारणादत्राऽस्मिन् भुवनाना जगता 'विष्टप भुवन जगत्' इत्यमर । महोत्सवो हर्षो यस्मात्स तस्मिन् भुवनमहोत्सवे युद्ध इत्यर्थ । परिपन्थिना शत्रूणा प्रमाथे मन्थने विनाशायेत्यर्थ । प्रगुण सज्ज धनुश्चापो यस्य स सज्जधनुर्भव सपद्यस्व । भुवि पृथिव्यामेषा तव ते स्थितिस्तावकीनाऽवस्थान धर्मस्य सुकृतस्य विरोधिन प्रतिकूलास्तेषा पापात्मना वधाय ननु निश्चयेन तेषा विनाशायैवेति किं न, कथ न स्मरसि स्मरणगोचर करोषि ।

### भाषा

इसलिये पृथ्वी को हर्षित करने वाले इस युद्ध मे शत्रुओ का नाश करने के लिये धनुष तान कर तयार हो जाओ । इस पृथ्वी पर तुम्हारी स्थिति निश्चय पूर्वक पापियो के नाश के लिये ही है यह बात तुम्हे क्यो स्मरण नही है ।

**गिरमिति स निशम्य विश्वभर्तुर्गिरितनयादयितस्य मुक्तनिद्रः ।**
**वचनमिदमलङ्घ्यमिन्दुमौलेरिति रणकर्मणि निश्चयं चकार ॥६६॥**

### अन्वयः

सः विश्वभर्तुः गिरितनयादयितस्य इति गिरं निशम्य मुक्तनिद्रः (सन्) इन्दुमौलेः इद वचनम् अलङ्घ्यम् इति रणकर्मणि निश्चय चकार ।

### व्याख्या

स विक्रमाङ्कदेवो विश्वस्य सकलससारस्य भर्ता पालकस्तस्य गिरेर्हिमाद्रेस्तनयाया कन्याया पार्वत्या दयित पतिस्तस्य शिवस्येति पूर्वोक्ता गिर वाणीं निशम्य श्रुत्वा मुक्ता त्यक्ता निद्रा स्वापो येन स जागृतस्सन्निन्दुश्चन्द्रो मौलौ मस्तके यस्य स तस्य चन्द्रशेखरस्य शङ्करस्येद स्वप्नोक्त वचन वचोऽलङ्घ्यमनतिक्रमणीयमिति हेतो रणकर्मणि युद्धकार्ये योद्धुमित्यर्थ । निश्चय व्यवसायात्मिका बुद्धि चकार कृतवान् ।

### भाषा

विक्रमाङ्कदेव ने समस्त ससार का भरण पोषण करने वाले पार्वती के पति महादेव की ऐसी वाणी सुन, जागकर, चन्द्रशेखर शङ्कर की यह वाणी (आज्ञा) अलङ्घनीय है, इस हेतु से युद्ध करने की ठान ली ।

**प्रसरदुभयतः प्रहारसज्जं बलयुगलं तदवेक्ष्य वीक्षते स्म ।**
**समुचितसमरोपभोगलोभात् प्रतिकलमुत्पुलकं भुजद्वयं सः ॥६७॥**

**अन्वयः**

सः उभयतः प्रसरत् प्रहारसज्जं तत् बलयुगलम् अवेक्ष्य समुचित-समरोपभोगलोभात् उत्पुलक भुजद्वयं प्रतिकलम् वीक्षते स्म ।

**अन्वयः**

स विक्रमाङ्कदेव उभयतोऽग्रत पृष्ठतश्च प्रसरद्विस्तारमाप्नुवत्प्रहारे प्रहार-करणे सज्ज तत्पर तदद्भुत बलयुगल सेनाद्वयमवेक्ष्य विलोक्य समुचितो योग्य-स्समरो युद्ध तस्योपभोगस्याऽऽस्वादरय लोभादिच्छात उद्गत समुत्पन्न पुलको रोमाञ्चो यस्मिँस्तद्भुजद्वय बाहुयुगल प्रतिकल प्रतिक्षण वीक्षते स्म दृष्टवान् ।

**भाषा**

वह विक्रमाङ्कदेव, आगे और पीछे दोनो ओर मे, विस्तृत तथा प्रहार करने मे तत्पर, उन आश्चर्य जनक दोनो सेनाओ को देखकर, अपनी वीरता के अनुरूप युद्ध का आस्वादन करने के लोभ से, रोमाञ्च से युक्त अपनी दोनो भुजाओ को क्षण क्षण मे अर्थात् बार २ देखता था ।

**मदकरटिनमुत्कटप्रतापः प्रकटितवीरमृदङ्गधीरनादः ।**
**मथनगिरिमिवाधिरुह्य वेगात् प्रतिबलवारिधिलोडनं चकार ॥६८॥**

**अन्वयः**

उत्कटप्रतापः प्रकटितवीरमृदङ्गधीरनादः (सः) मदकरटिन मथनगिरिम् इव अधिरुह्य वेगात् प्रतिबलवारिधिलोडन चकार ।

**व्याख्या**

उत्कट उत्कृष्ट प्रताप प्रभावो यस्य स उत्कृष्टप्रभाव प्रकटित प्रकाशितो वीराणा शक्तिशालिना मृदङ्गानामिव धीरो गम्भीरो नादो ध्वनिर्यस्य स मदकरटिन मदान्धगज मथनगिरिमिव मन्दराचलमिवाऽधिरुह्य तदुपरि स्थित्वा वेगाज्जवात् प्रतिबलमेव शत्रुसैन्यमेव वारिधि समुद्रस्तस्य लोडन मथन चकार विदधे विनाश चकारेत्यर्थ । उपमारूपकयो सङ्करालङ्कार ।

**भाषा**

उत्कृष्ट प्रभाव वाले, मृदङ्ग के ऐसे बीरो के गम्भीर शब्दो को प्रकट करन वाले विक्रमाङ्कदेव ने मन्दराचल के समान मदोन्मत्त हाथी पर सवार होकर वेग से शत्रु सेना रूपी समुद्र को मथ डाला। अर्थात् शत्रु की सेना को नष्ट कर दिया।

**अहमहमिकया प्रधाविताभ्यां मिलितममुष्य बलं तयोर्बलाभ्याम्।**
**सलिलमभिमुखं सहाम्बुराशेस्तदनु महानदयोरिवोदकाभ्याम् ॥६९॥**

**अन्वयः**

तदनु अमुष्य बलम् अहमहमिकया अभिमुखं प्रधाविताभ्यां तयोः बलाभ्या सह अम्बुराशेः सलिलम् अभिमुख प्रधाविताभ्या महानदयोः उदकाभ्या सह इव मिलितम्।

**व्याख्या**

तदनु शत्रुसेनासम्मर्दनानन्तरममुष्याऽस्य विक्रमाङ्कदेवस्य बल सैन्यमहमहमिकया परस्पराहङ्कारेण 'अहमहमिका तु सा स्यात्परस्पर यो भवत्यहङ्कार' इत्यमर। अभिमुख सम्मुख प्रधाविताभ्या द्रततरमाक्रममाणाभ्या तयोस्सोमदेवराजिगयो बलाभ्या सेनाभ्या सहाऽम्बूना जलाना राशि समुद्रस्तस्य समुद्रस्य सलिल जलमभिमुख प्रधाविताभ्या वेगेन सम्मुख प्रवहद्भ्या महानदयोर्विशालनदयोरुदकाभ्या जलाभ्या सहेव मिलित सङ्गतम्। अत्र पूर्णोपमालङ्कार।

**भाषा**

शत्रु की सेना को कुचलने के बाद, इस विक्रमाङ्कदेव की सेना, परस्पर अहङ्कार से सामने दौड पडी हुई सोमदेव और राजिग की सेनाओ के साथ, समुद्र का जल, सामने से बह कर आते हुए दो विशाल नदो के जलो के समान, मिल गई अर्थात् जिस प्रकार ममुद्र मे दो तरफ से आने वाले दो महानद मिल जाते हैं उसी प्रकार दोनो ओर से आने वाली दो सेनाए विक्रमाङ्कदेव की सेना से गुथ गई।

**मुखमसितपताकया पतन्त्या ध्वजगरुडः परिचुम्बितं दधानः।**
**वदनपरिगृहीतपन्नगस्य व्यतनुत सत्यगरुत्मतः प्रतिष्ठाम् ॥७०॥**

**अन्वयः**

आपतन्त्या असितपताकया परिचुम्बित मुख दधानः ध्वजगरुडः वदन-परिगृहीतपन्नगस्य सत्यगरुत्मतः प्रतिष्ठा व्यतनुत ।

**व्याख्या**

आपतन्त्या सम्मुखमागच्छन्त्याऽसितपताकया कृष्णवर्णध्वजेन परिचुम्बित सयुक्त मुखमग्रभाग दधानो धारयन् ध्वजगरुड केतुचिह्नभूतोगरुडो वदने मुखे परिगृहीत सधारित पन्नगस्सर्पो येन स तस्य मुखधृतसर्पस्य सत्यगरुत्मतो वास्तविकगरुडस्य 'गरुत्मान् गरुडस्ताक्ष्यो वैनतेय खगेश्वर' इत्यमर । प्रतिष्ठा स्थिति साम्यमित्यर्थ । व्यतनुत प्राप्तवान् विस्तारितवानित्यर्थ । कृष्णत्व-साम्यादसितपताकाया सर्पत्वकल्पना । उपमालङ्कारो, निदर्शना वा ।

**भाषा**

सामने से आने वाली सेना के काले झण्डे के, गरुड के चिह्न वाले झण्डे के अग्रभाग मे मिलने से वह झण्डे मे का गरुड, मुख मे सर्प को पकडे हुए सच्चे गरुड की शोभा को प्रकट करता था। अर्थात् काला झण्डा मानो काला साँप ही था ।

**प्रकटितपटुमौक्तिकावतंम-द्विरदशिरःस्थलसङ्गति प्रपद्य ।**
**अलभत परमार्थसिंहलीलां करिवरकेतुपरिच्युतो मृगेन्द्रः ॥७१॥**

**अन्वयः**

करिवरकेतुपरिच्युत. मृगेन्द्रः प्रकटितपटुमौक्तिकावतसद्विरदशिरःस्थल-सङ्गति प्रपद्य परमार्थसिंहलीलाम् अलभत ।

**व्याख्या**

करिवरस्य हस्तिश्रेष्ठस्य केतुर्ध्वजस्तस्मात्परिच्युत परिभ्रष्टो मृगेन्द्र पताका-सलग्नश्चिह्नभूत सिंह प्रकटितानि प्रकाशितानि पटूनि स्थूलान्युज्वलानि च मौक्तिकानि गजमुक्ताफलान्येवाऽवतसा शिरोभूषणानि येषा ते द्विरदा गजास्तेषा शिर स्थलानि शिरासि तैस्सह सङ्गति समागम प्रपद्य प्राप्य परमार्थो वास्तविकश्चाऽसौ सिंहश्च परमार्थसिंहस्तस्य लीला विलासमलभत प्राप । गजमौक्तिकाभूषणेषु प्रतिबिम्बरूपेण पतितो ध्वजमृगेन्द्र परमार्थसिंहलीला

प्रकटयाञ्चकारेति भाव । यतो मृगेन्द्रा पूर्वं गजशिरास्येव विदारयन्तीति प्रसिद्धि । निदर्शनालङ्कार ।

### भाषा

श्रेष्ठ हाथी की, सिह के चिन्ह से अङ्कित ध्वजा मे से नीचे आ पडा हुआ सिह, प्रत्यक्ष दिखाई पडने वाले बडे बडे चमकदार गजमौक्तिक रूपी शिर के आभूषणो से युक्त हाथियो के मस्तको का समागम प्राप्त कर अथवा शिरोभूषण रूप हाथियो के मस्तको पर के गजमौक्तिको के आभूषणो मे प्रतिबिम्बित होकर सच्चे सिह की लीला को अर्थात् हाथी के गण्डस्थल पर सवार होकर उसी को पहिले विदारण करने की शोभा को प्राप्त हुआ ।

**कथमपि विनिपत्य सञ्चरन्तः क्षतजतरङ्गवतीषु चिन्हमत्स्याः ।**
**सुरयुवतिविलोचनानि संख्ये विदधुरकृत्रिममत्स्यशङ्कितानि ॥७२॥**

### अन्वयः

संख्ये क्षतजतरङ्गवतीषु कथम् अपि विनिपत्य सञ्चरन्तः चिन्हमत्स्याः सुरयुवतिविलोचनानि अकृत्रिममत्स्यशङ्कितानि विदधुः ।

### व्याख्या

सख्ये समरे 'मृधमास्कन्दन सख्य समीक साम्परायिकम् । अस्त्रिया समरानीकरणा कलहविग्रहौ' इत्यमर । क्षतजस्य रुधिरस्य तरङ्गवतीषु नदीषु रुधिरनदीषु कथमपि केनाऽपि प्रकारेण विनिपत्य पतित्वा सञ्चरन्त परिभ्रमन्तो वहन्त इत्यर्थ । चिन्हमत्स्या पताकासलग्नचिन्हभूतमीना सुराणा देवाना युवतयो नार्यस्तासा विलोचनानि नयनान्यकृत्रिममत्स्यैर्यथार्थमीनै शङ्कितानि तदभिन्नत्वेन सम्भावितानि विदधुश्चक्रु । अत्र भ्रान्तिमानलङ्कार ।

### भाषा

युद्ध मे खून की नदियो मे किसी प्रकार गिर कर बहने वाली पताका मे की चिन्ह भूत मछलिया ने (युद्ध मे वीरो को ले जाने के लिय आई हुई) देवो की नारियो के नेत्रो को सच्ची मछलियो के होने की शङ्का उत्पन्न कराई ।

**रुधिरपटलकर्दमेन दूरं रणभुवि दुर्गमतामुपागतायाम् ।**
**गमनमनिमिषप्रियाजनस्य प्रियमकरोदवलम्बनानपेक्षम् ॥७३॥**

**अन्वयः**

( सः ) रुधिरपटलकर्दमेन रणभुवि दूरं दुर्गमताम् उपागतायाम् (सत्याम्) अनिमिषप्रियाजनस्य अवलम्बनानपेक्षं गमनं प्रियम् अकरोत् ।

**व्याख्या**

(स विक्रमाङ्कदेव ) रुधिरस्य शोणितस्य पटलं समूहस्तस्य कर्दमः पङ्कस्तेन रणभुवि युद्धभूमौ दूरमत्यन्तं दुर्गमतां दुःखेन गन्तुं शक्यतामुपागतायां प्राप्तायां सत्यां न निमिषन्तीत्यनिमिषा देवास्तेषां प्रियाजनस्याऽङ्गनाजनस्य नास्त्यपेक्षा यस्मिंस्तदनपेक्षमवलम्बनस्याऽऽश्रयरूपसाहाय्यस्य पृथिव्यादेरित्यर्थः । अनपेक्षमित्यवलम्बनानपेक्षं गमनं निराश्रयां गगनगतिं प्रियमभीष्टमकरोत् कृतवान् । रणस्य दुर्गमत्वाद्देवाङ्गनानां निराश्रया गगनगतिः समरावलोकने तासामिष्टसाधिकाऽभूदिति भावः ।

**भाषा**

खून के आधिक्य से कीचड़ होजाने से युद्ध भूमि के दुर्गम होजाने पर, देवाङ्गनाओं की आश्रयरहित आकाशगति को उसने उनके लिये अभीष्टसाधक बना दिया । अर्थात् उनको युद्ध देखने में कोई रुकावट न पड़ी ।

**प्रहतिनिवहमूर्छितोऽधिरोहः स्वकरटिकर्णपुटानिलैः प्रबुध्य ।**
**अपरसुभटपातिते प्रहर्तर्यनुशयमापदलब्धवैरशुद्धिः ॥७४॥**

**अन्वयः**

प्रहतिनिवहमूर्छितः अधिरोहः स्वकरटिकर्णपुटानिलैः प्रबुध्य प्रहर्तरि अपरसुभटपातिते (सति) अलब्धवैरशुद्धिः ( सन् ) अनुशयम् आपत् ।

**व्याख्या**

प्रहतीनां प्रहरणानां निवहस्समूहस्तेन मूर्छितो विगतचेतनोऽधिरोहो गजारोही योद्धा स्वस्याऽऽत्मनो करटी गजस्तस्य कर्णपुटौ श्रोत्रपुटौ तयोरनिला वायवस्तैः प्रबुध्य संज्ञां प्राप्य प्रहर्तरि स्वस्योपरिप्रहारकर्तरि भटेऽपरोऽन्यः सुभटो योद्धा तेन पातिते प्रहारेण भूमौ निपातिते सति हते सतीत्यर्थः । अलब्धाऽप्राप्ता वैरस्य शत्रुभावस्य शुद्धिर्निष्क्रमो येन स स्वप्रहर्तारं स्वयमेव यन्न भूमावपातयदिति हेतोरनुशयं पश्चात्तापमापत्प्राप्त । मयैव करणीयमन्येन कृतमिति सन्तप्तमना अभूदिति भावः ।

**भाषा**

शस्त्रो की मार से बेहोश हाथी सवार, अपने हाथी के कानो की हवा से होश मे आकर अपने को मारने वाले को दूसरे ने मारकर गिराया हुआ देख कर बदला न ले सकने के कारण पश्चात्ताप करने लगा।

**नयनगतमरातिवीरचूडा-मणिदलनप्रभवं परागमेकः।**
**करिदशनविदारितात्मवक्षः-स्थलरुधिराञ्जलिभिर्निराचकार ॥७५॥**

**अन्वय.**

एकः नयनगतम् अरातिवीरचूडामणिदलनप्रभव पराग करिदशन-विदारितात्मवक्षःस्थलरुधिराञ्जलिभिः निराचकार।

**व्याख्या**

एक कश्चिद्भटो नयनयोर्नेत्रयोर्गत प्राप्तमरातय शत्रवो वीराश्शूरा इत्यरा-तिवीरास्तेषा चूडामणयोऽलङ्कारभूता शिरोमणयस्तेषा दलन चूर्णनमेव प्रभव उत्पत्तिस्थान यस्य स त पराग धूलि करिणा हस्तिना दशनैर्दन्तैर्विदारित भिन्न-मात्मनस्स्वस्य वक्ष स्थल तस्य रुधिरस्य शोणितस्याऽञ्जलयस्तैर्निराचकार दूरीकृतवान्। येन वीरेण कस्यचिद्भटस्य चूडामणि खण्डितस्तस्य केनाऽपि करिणा वक्ष स्थल विदारितमिति तुमुल युद्ध समजनीति भाव। अतिश-योक्त्यलङ्कार।

**भाषा**

किसी योद्धा ने अपने आख मे पडी, विपक्षी वीरो के शिरोमणियो को चूर २ कर देने से उत्पन्न धूलि को हाथी के दातो से चीरी हुई अपनी छाती से निकलने वाले खूनो की अजुलियो से धो डाला। अर्थात् आख मे पडी धूल को पानी न होने से खून से ही धोकर मफा कर दिया तात्पर्य यह कि घोर सग्राम होने लगा।

**महति समरसङ्कटे भटोऽन्यः प्रतिभटनिर्दलनात्समाप्तशस्त्रः।**
**अगणितमरणः प्रविश्य वेगादरिकरतः करवालमाचकर्ष ॥७६॥**

**अन्वयः**

महति समरसङ्कटे प्रतिभटनिर्दलनात् समाप्तशस्त्रः अन्यः भटः अगणितमरणः (सन्) वेगात् प्रविश्य अरिकरतः करवालम् आचकर्ष।

### व्याख्या

महति विशाले समरसङ्कटे तुमुले रणे प्रवृत्ते सति युद्धसम्बाधेन प्रतिभटानां विपक्षयोद्धृणा निर्दलनान्निःशेषेण खण्डनात् नाशादित्यर्थ । समाप्त निरन्तर-युद्धकरणान्नष्ट भ्रष्टञ्च शस्त्रमायुध यस्य स अन्य कश्चिद्भटस्सुयोद्धाऽगणि-तमकिञ्चित्करत्वेनाऽवबुद्ध मरण प्राणनाशो येन स एवम्भूत सन् वेगाज्जवा-त्प्रविश्य शत्रुसैन्यसमूह प्रसभ समाक्रम्याऽरिकरतो वैरिणो हस्तात्करवाल खड्गमाचकर्षाऽऽकृष्टवान् ।

### भाषा

घोर सग्राम होने पर विपक्षी शत्रुओ का दलन करन के कारण जिसके शस्त्र समाप्त हो चुके है ऐसा एक वीर, मरने की कुछ भी परवाह न कर वेग से शत्रुओ के बीच मे घुस कर उनके हाथ से तलवार छीनने लगा ।

**असुभिरपि यियासुभिः प्रविश्य प्रतिभटमूर्धनि कोऽपि दत्तपादः ।**
**फलममनुत जन्मनोऽपि लब्धं यशसि रतिर्महतां न देहपिण्डे ॥७७॥**

### अन्वयः

कः अपि असुभिः यियासुभिः अपि (सद्भिः) प्रविश्य प्रतिभटमूर्धनि दत्तपादः (सन्) जन्मनः फलम् अपि लब्धम् अमनुत । महता रतिः यशसि (भवति) न देहपिण्डे ।

### व्याख्या

कोऽप्यन्य कश्चिद्भटोऽसुभि प्राणैः 'पुसि भूम्न्यसव प्राणा' इत्यमर । यियासुभिरपि गन्तुमिच्छुभिरपि सद्भिरासन्नमरणोऽपीत्यर्थ । प्रविश्य मध्येरण हठात्प्रवेश लब्ध्वा प्रतिभटस्य विपक्षवीरस्य मूर्धनि शिरसि दत्तस्स्थापित पादश्चरण येन स सन् जन्मन स्वजनुष 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमर । फलमपि प्रयोजनमपि लब्ध प्राप्तममनुत कृतवान मन्यते स्म । वीराणा निहतशत्रौ पादाघातो महान्पुरुषार्थ इति भाव । महता महामहिम-शालिना रति प्रीतिर्यशसि कीर्तौ भवति न तु देहपिण्डे शरीरे । अत्रार्थान्तर-न्यासालङ्कार ।

**भाषा**

किसी वीर ने मरणासन्न अवस्था मे भी युद्ध मे घुसकर विपक्षी वीर के मस्तक पर लात देकर अपने जीवन का फल भी प्राप्त भया समझा। बडे लोगो का प्रेम यश मे होता है शरीर मे नही।

**विघटितकवचश्चचार कश्चित् प्रतिभटमुज्झितकङ्कटं विलोक्य।**
**विमलविजयलालसाः खलानामवसरमल्पमपि प्रतिक्षिपन्ति ॥७८॥**

**अन्वयः**

**कश्चित् उज्झितकङ्कट प्रतिभट विलोक्य विघटितकवचः सन् चचार। विमलविजयलालसाः खलानाम् अल्पम् अपि अवसर प्रतिक्षिपन्ति।**

**व्याख्या**

कश्चित्सुभट उज्झित परित्यक्त कङ्कट कवचो 'उरच्छद कङ्कटको जगर कवचोऽस्त्रियाम्' इत्यमर । येन स त प्रतिभट विपक्षवीर विलोक्य दृष्ट्वा, मल्लयुद्धाय सन्नद्ध त्यक्तकवच प्रतिभट विलोक्येत्यर्थ । विघटित स्वशरीरात्पृथक् कृत कवचो येन स, प्रतिभटेन साक मल्लयुद्धाय कवच देहात्पृथक्कृत्य रणेऽवतीर्णस्सन्नित्यर्थ । चचार बभ्राम। विमला शुद्धा विजयस्य लालसाऽतिप्रीतिर्येषा ते वीरा खलाना नीचाना निन्दकानामित्यर्थ । अल्पमपि क्षुद्रमप्यवसर समय प्रतिक्षिपन्ति दूरीकुर्वन्ति । विमलविजयलालसास्तथा व्यवहरन्ति यथा खला स्वल्पमपि निन्दावसर न प्राप्नुवन्तीतिभाव ।

**भाषा**

कवच को उतार कर रख देने वाले ओर मल्लयुद्ध को तयार विपक्षी योद्धा को देखकर कोई वीर अपना कवच उतार कर मल्लयुद्ध के लिये तयार होकर टहलने लगा। विशुद्ध विजय से प्रेम रखने वाले वीर खलो को निन्दा करने का थोडा भी अवसर नही देते।

**रुधिरभृतकपालपङ्क्तिमध्ये मदकरटी विनिपत्य कर्णतालैः।**
**शिशिरमिव चकार पानपात्र-प्रणयिनमासवमागतस्य मृत्योः ॥७९॥**

**अन्वयः**

मदकरटी रुधिरभृतकपालपङ्क्तिमध्ये विनिपत्य आगतस्य मृत्योः पानपात्रप्रणयिनम् आसव कर्णतालैः शिशिरम् इव चकार ।

**व्याख्या**

मदकरटी मदान्धगजो रुधिरेण शोणितेन भृतानि परिपूरितानि कपालानि शिरोऽस्थीनि तेषा पङ्क्ति श्रेणी तस्या मध्ये विनिपत्य शस्त्रप्रहारेण भग्नस्सन्नध पतित्वाऽऽगतस्य गजार्थं समुपयातस्य मृत्योर्यमस्य पानपात्रे चषके प्रणयिन स्थित-मासव मद्य कर्णतालै श्रोत्ररूपतालवृन्तैस्तज्जनितपवनैरित्यर्थ । शिशिरमिव शीतलमिव चकार कृतवान् । उत्प्रेक्षालङ्कार ।

**भाषा**

कोई मदान्वहाथी खून से भरी गण्डस्थल की हड्डियो की कतार के बीच मे, चोट खा जाने से गिरकर, उसको लेने को आए हुए यमराज के कटोरो मे के मद्य को मानो अपने कानरूपी ताड के पखो से हवा कर ठण्डा कर रहा था ।

**उपरि निपतितः कपालशुक्तेः श्रवणपुटः करिणः कृपाणलूनः ।**
**समरभुवि कृतान्तपानलीलाचषकपिधानविलासमाससाद ॥८०॥**

**अन्वयः**

समरभुवि कपालशुक्तेः उपरि निपतितः कृपाणलूनः करिणः श्रवणपुटः कृतान्तपानलीलाचषकपिधानविलासम् आससाद ।

**व्याख्या**

समरभुवि युद्धभूमौ कपालशुक्ते शिरोऽस्थिरूपशुक्तेरुपरि निपतित सप्राप्त कृपाणेन खड्गेन लूनश्छिन्न करिणो कस्यचिद्गजस्य श्रवणपुट कर्णपुट कृतान्तस्य यमस्य 'कृतान्तो यमुनाभ्राता शमनो यमराड्यम' इत्यमर । पानस्य मद्यपानस्य लीलाचषक प्रियपात्र तस्य पिधानमाच्छादन तस्य विलास शोभा-माससाद प्राप । निदर्शनालङ्कार ।

**भाषा**

समराङ्गण मे गण्डस्थल की हड्डी रूपी सीपपर, तलवार से कटकर गिरा

हुआ हाथी का कान, यमराज के मद्यपान के प्रिय प्याले पर ढक्कन की शोभा को प्राप्त हो रहा था।

**अनियतविजयश्रियि प्रवृत्ते चिरमिति तत्र महाहवप्रबन्धे।**
**प्रतिसुभटकपालपाटनाय द्विरदमुदञ्चयति स्म राजसूनुः ॥८१॥**

**अन्वयः**

तत्र अनियतविजयश्रियि इति महाहवप्रबन्धे चिर प्रवृत्ते (सति) राजसूनुः प्रतिसुभटकपालपाटनाय द्विरदम् उदञ्चयति स्म।

**व्याख्या**

तत्र तस्मिन्ननियताऽनिश्चिता विजयस्य श्रीर्जयलक्ष्मीर्यस्मिँन्स तस्मिन्नितीत्थ महाहवप्रबन्धे तुमुलसग्रामे चिर बहुकालपर्यन्त प्रवृत्ते सञ्चलिते सति राजसूनु-राहवमल्लदेवपुत्रो विक्रमाङ्कदेव प्रतिसुभटाना विपक्षयोधाना कपालानि शिराँसि तेषा पाटनाय विदारणाय द्विरद स्वगजमुदञ्चयतिस्म प्रवर्त्तयति स्म।

**भाषा**

उस अनिश्चित विजयश्री वाले, इस प्रकार घनघोर युद्ध के चिरकाल तक होते रहने पर राजपुत्र विक्रमाङ्कदेव ने विपक्षी योद्धाओ के मस्तको को काटने के उद्देश्य से अपने हाथी को आगे बढाया।

**क्षणमुदचलदुच्चलत्पताके द्रविडबले क्षणमग्रजस्य सैन्ये।**
**रणभुवि स चचार यत्र यत्र न्यपिबदरातियशांसि तत्र तत्र ॥८२॥**

**अन्वयः**

सः उच्चलत्पताके द्रविडबले क्षणम् उदचलत्। (उच्चलत्पताके) अग्रजस्य सैन्ये क्षणम् उदचलत्। (सः) यत्र यत्र रणभूवि चचार तत्र तत्र अरातियशांसि न्यपिबत्।

**व्याख्या**

स विक्रमाङ्कदेव उच्चलन्त्यूर्ध्वं स्फुरन्ती पताका ध्वजो यस्मिँन्स तस्मिन्नुच्च-लत्पताके द्रविडबले चोलदेशाधिपतिराजिगसैन्ये क्षण क्षणमात्रमुदचलदुच्चचाल।

उच्चलत्पताकेऽग्रजस्य ज्येष्ठभ्रातु सोमदेवस्य सैन्ये बले क्षणमुदचलत्। स विक्रमाङ्कदेवो यत्र यत्र यस्मिन् यस्मिन् स्थाने रणभुवि युद्धभूमौ चचार जगाम तत्र तत्र तस्मिन तस्मिँस्थानेऽरातीना शत्रूणा यशासि कीर्तीर्न्यपिबत्पपौ। यत्र सग्रामे स गतस्तत्रैव शत्रून् पराजितवानित्यर्थ ।

### भाषा

वह विक्रमाङ्कदेव झण्डे को फहराने वाले चोल देश के राजा राजिग की सेना मे और अपने बडे भाई सोमदेव की सेना मे थोडी २ देर के लिये गया। जहाँ २ युद्धभूमि मे वह गया वहाँ २ उसने शत्रुओ के यश को पी लिया अर्थात् उनको हराकर निस्तेज कर दिया।

**पददलितबृहत्कपालजाले करटिनि तस्य दुरापभाजनानाम् ।**
**सुभटरुधिरसोधुपानकेलिर्व्यघटत तत्र पिशाचसुन्दरीणाम् ॥८३॥**

### अन्वयः

तत्र तस्य करटिनि पददलितबृहत्कपालजाले (सति) दुरापभाजनाना पिचाशसुन्दरीणा सुभटरुधिरसीधुपानकेलिः व्यघटत ।

### व्याख्या

तत्र युद्धे तस्य विक्रमाङ्कदेवस्य करटिनि गजे पदैश्चरणैर्दलितानि खण्डितानि बृहन्ति विशालानि बहूनीत्यर्थ । कपालाना कर्पराणा जालानि समूहा येन स तस्मिन्नेव भूते सति दुरापानि दुर्लभानि भाजनानि चषकापरपर्यायमद्यपात्राणि यासा तास्तासा पिशाचाना सुन्दर्यस्तासा पिशाचिनीना सुभटाना सुयोधाना रुधिरस्य शोणितस्य शोणितरूपस्येत्यर्थ । सीधोर्मद्यस्य पानकेलि पानक्रीडा व्यघटत भङ्गमाप खण्डिता बभूवेत्यर्थ । हस्तिना कपालेषु चूर्णितेषु पात्राभावात् पिशाचिनीना रुधिररूपमद्यपानक्रीडा समाप्तेति भाव ।

### भाषा

युद्ध मे विक्रमाङ्कदेव के हाथी के पाव तले बहुत सी खोपडियो के चूर २ हो जाने पर, पानपात्रो को न प्राप्त करने वाली पिशाचिनियो की, योद्धाओ के रुधिर रूपी शराब को पीने की क्रीडा बन्द हो गई।

**ध्रुवमरिषु पदं व्यधत्त लक्ष्मीः सुरभिकुशेशयकोशकेलिसक्ता ।**
**नृपसुतकरवाललेखया यन्मधुकरमालिकयेव चुम्ब्यते स्म ॥८४॥**

**अन्वयः**

सुरभिकुशेशयकोशकेलिसक्ता लक्ष्मीः ध्रुवम् अरिषु पद व्यधत्त । यत् मधुकरमालिकया इव नृपसुतकरवाललेखया चुम्ब्यते स्म ।

**व्याख्या**

सुरभि सुगन्धि 'सुरभिर्घ्राणतर्पण' इत्यमर । य कुशेशयस्य कमलस्य 'सहस्रपत्र कमल शतपत्र कुशेशयम्' इत्यमर । कोश कुड्मल 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययो' इत्यमर । तस्मिन्या केलि क्रीडा तत्र सक्ता सलग्ना लक्ष्मी राज्यलक्ष्मी, कमल लक्ष्म्या निवासस्थानमिति हेतोस्तत्र सक्तेत्यर्थ । ध्रुव निश्चयेनाऽरिषु शत्रुषु शत्रुशिर स्वित्यर्थ । पद स्थान चरण वा व्यधत्त कृतवती । यद्यस्मात्कारणान्मधुकराणा भ्रमराणा मालिका समूहस्तया भ्रमरश्रेण्येव नृपसुतो विक्रमाङ्कदेवस्तस्य करवाललेखा कृष्णवर्णा खड्गरेखा तया चुम्ब्यते स्म प्रेम्णा परिचुम्बिता बभूव । यतो मधुकरमालिकेव कृष्णवर्णा खड्गरेखा शत्रुशिर सु पतति तस्मात् कुशेशयसक्ता लक्ष्मीरवश्यमेव शत्रुशिर सु पद व्यधत्त । कमलाभावे मधुकरमालागमनासम्भवादिति भाव । अत्रोत्प्रेक्षालङ्कार ।

**भाषा**

सुगन्धयुक्त कमल की कली मे क्रीडा करने मे आसक्त लक्ष्मी अवश्यमेव शत्रुओ के मस्तको पर जा बैठी थी । क्योकि भ्रमर श्रेणी के समान काले रग की विक्रमाङ्कदेव के तलवार की धार शत्रुओ के शिरो मे विद्यमान लक्ष्मी का चुम्बन करती थी । अर्थात् शत्रुओ की गर्दन काटती थी ।

**अनुकृतसमवर्तिपानलीला-चषककरालकपालशुक्तिमध्ये ।**
**करिदशनपरम्परा निपत्य श्रियमतनोदुपदंशमूलकानाम् ॥८५॥**

**अन्वयः**

करिदशनपरम्परा अनुकृतसमवर्तिपानलीला-चषककरालकपालशुक्ति-मध्ये निपत्य [१]उपदशमूलकाना श्रियम् अतनोत् ।

---

[१] यथा वेणीसहारनाटके तृतीयाङ्के—"रुधिर प्रिय ! गृहाणैतत् हस्तिशिर कपालसचितमग्रमासोपदश पिब नवशोणितासवम् ।"

### व्याख्या

करीणा गजाना दशनानि दन्तास्तेषा परम्परा श्रेणिरनुकृतोऽनुहृत समवर्तिनो यमस्य 'धर्मराज पितृपति समवर्ती परेतराट्' इत्यमर । पानलीलाचषको सुरापानपात्र 'चषकोऽस्त्री पानपात्रम्' इत्यमर । यैस्तानि करालानि भयङ्कराणि कपालानि शिरोऽस्थीनि 'स्यात्कर्पट कपालोऽस्त्री' इत्यमर । तान्येव शुक्तयस्तासा मध्य तस्मिन्निपत्य पतन विधायोपदशमूलकाना मद्यपानान्तराले चर्व्यमाणमूलकाना ('मूली' इति भाषाया प्रसिद्ध ।) श्रिय शोभामतनोद्विस्तारयामास । मूलकश्रीसमश्रीविस्ताररूपार्थस्य प्रतीत्या पदार्थनिदर्शनालङ्कार ।

### भाषा

हाथियो के दातो की कतार, यमराज के शराब पीने के प्याले का अनुकरण करने वाली, भयङ्कर माथे की हडडियाँ रूपी सीपो मे गिर कर शराब पीते समय बीच २ मे चबाई जाने वाली मूलियो की शोभा दे रही थी ।

**वशमवनिपतिद्वयं नयन्ती चटुलपृषत्ककटाक्षमालिकाभिः ।**
**क्षितिपतितनयेन वीरलक्ष्मीः सुचिरमनर्त्यत सङ्गराग्ररङ्गे ॥८६॥**

### अन्वयः

सङ्गराग्ररङ्गे क्षितिपतितनयेन चटुलपृषत्ककटाक्षमालिकाभिः अवनिपतिद्वय वश नयन्ती वीरलक्ष्मीः सुचिरम् अनर्त्यत ।

### व्याख्या

सङ्गरस्य सग्रामस्य 'प्रतिज्ञाजि सविदापत्सु सङ्गर' इत्यमर । अग्रमेव रङ्गो नाट्यशाला रङ्गमञ्च इत्यर्थ । तस्मिन् क्षितिपतेराहवमल्लदेवस्य तनयेन पुत्रेण विक्रमाङ्कदेवेन चटुलाश्चञ्चला पृषत्का बाणा 'पृषत्कबाणविशिखा अजिह्मगखगाशुगा' इत्यमर । एव कटाक्षा नेत्रप्रान्तदर्शनानि 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने' इत्यमर । तेषा मालिका पङ्क्तयस्ताभिरवने पृथिव्या पति स्वामीत्यवनीपति तयोर्द्वय युगल राजिग सोमदेवञ्च वश स्वाधीनताया नयन्ती प्रापयन्ती वीरलक्ष्मीर्युद्धवीराणा राजलक्ष्मी सुचिर बहुकालमनर्त्यत नर्तनाय प्रवर्तिता। रङ्गमञ्चाधिकारिणा रङ्गमञ्चे सचञ्चलकटाक्षा नर्तकीव विक्रमाङ्कदेवेन समराङ्गणे सचञ्चलबाणवर्षं वीरलक्ष्मीरनर्त्यतेति भाव ।

### भाषा

युद्ध के अग्रभाग रूपी रङ्गमञ्च पर राजपुत्र विक्रमाङ्कदेव ने चञ्चल बाण रूपी कटाक्षो की पङक्तियो से दोनो राजाओ को अर्थात् राजिग तथा सोमदेव को वश मे लाने वाली वीरश्री को चिरकाल तक नचाया। अर्थात् दोनो राजाओ को बाण मार कर अपनी वीरता से अपने काबू मे लाते हुए चिरकाल तक घोर सग्राम किया।

**कुलिशनिशितकङ्कपत्रभिन्ना-स्त्रिभुवनभीमभुजस्य राजसूनोः।**
**प्रतिभटकरटिस्थिताः प्रवीराः प्रणतिपरा इव सम्मुखा निपेतुः ॥८७॥**

### अन्वयः

त्रिभुवनभीमभुजस्य राजसूनोः कुलिशनिशितकङ्कपत्रभिन्नाः प्रतिभट-करटिस्थिताः प्रवीराः प्रणतिपराः इव सम्मुखाः निपेतुः।

### व्याख्या

त्रयाणा भुवनाना समाहारस्त्रिभुवन लोकत्रय तस्मिन् भीमो भयङ्करो 'भयङ्कर प्रतिभय घोर भीम भयानकम्' इत्यमर। भुजो बाहुर्यस्य स तस्य राजसूनो राजपुत्रस्य विक्रमाङ्कदेवस्य कुलिशवद्वज्रवन्निशित तीक्ष्ण कङ्कपत्र बाणविशेषस्तेन भिन्ना विदारिता प्रतिभटाना शत्रुपक्षीययोधाना करटिनो गजास्तेषु स्थिता समारूढा प्रवीरा प्रकृष्टवीरा प्रणतिपरा इव प्रणामप्रवणा इव प्रणमन्त इवेत्यर्थ.। सम्मुखा अभिमुखा पुरतो निपेतुर्भूमौ निपतितवन्तः। गजोपरिस्थिता. प्रवीरा अस्य बाणै क्षतास्तस्य पुरतो निपेतुरिति भाव। उत्प्रेक्षालङ्कार।

### भाषा

तीनो लोको मे भयङ्कर भुजावाले अर्थात् भुजशक्ति वाले उस राजकुमार विक्रमाङ्कदेव के वज्र के समान तीखे २ कङ्कपत्रो से घायल शत्रुपक्षीय योधाओ के हाथियो पर बैठे हुए प्रधान वीरगण मानो विक्रमाङ्कदेव को प्रणाम करते हुए उसके सामने (हाथियो पर से) गिरने लगे।

**द्विरदपतिरमुष्य शत्रुसेना-भटमुखपद्मविमर्दकेलिकालः।**
**झटिति रणसरश्चकार लक्ष्मी-करधृतविभ्रमपुण्डरीकशेषम् ॥८८॥**

**अन्वयः**

**अमुष्य शत्रुसेनाभटमुखपद्मविमर्दकेलिकालः द्विरदपतिः रणसरः झटिति लक्ष्मीकरधृतविभ्रमपुण्डरीकशेष चकार।**

**व्याख्या**

अमुष्याऽस्य विक्रमाङ्कदेवस्य शत्रूणामरीणा सेना चमूस्तस्या ये भटा योधास्तेषा मुखान्याननान्येव पद्मानि कमलानि तेषा विमर्दश्चूर्णनमेव केलि क्रीडा तदर्थं कालो यमो विनाशकारित्वात्। 'कालो दण्डधर श्राद्धदेवो वैवस्वतोऽन्तक.' इत्यमर। द्विरदपतिर्गजनाथो रण एव सग्राम एव सरस्तडागस्तत् रणसरो युद्धतडागो झटिति शीघ्र लक्ष्म्या श्रिय करेण हस्तेन धृत धारित विभ्रमपुण्डरीक विलाससिताम्भोज 'पुण्डरीक सिताम्भोजम्' इत्यमर। एव शेषोऽवशिष्टाशो यस्य तच्चकार निष्पादितवान्। रूपकालङ्कार।

**भाषा**

शत्रु सेना के योद्धाओ के मुख कमलो को चूर २ कर देने की क्रीडा मे यमस्वरूप, विक्रमाङ्कदेव के श्रेष्ठ हाथी ने रणरूपी तालाव को जल्दी से महालक्ष्मी के हाथ मे विद्यमान विलास का श्वेतकमल मात्र ही शेष रह गया हो, ऐसा कर दिया। अर्थात् लक्ष्मी के हाथ के कमल को छोड कर शत्रु के मुख रूपी सब कमलो का रणरूपी सरोवर मे नष्ट कर दिया।

**धृतसुभटकरङ्कमङ्कवर्ति-द्विरदघटाविकटास्थिचक्रवालम्।**
**रणमनणु कृतान्तभुक्तशेष-प्रणयि बभूव शिवासहस्रभोग्यम् ॥८९॥**

**अन्वयः**

**धृतसुभटकरङ्कम् अङ्कवर्तिद्विरदघटाविकटास्थिचक्रवाल कृतान्तभुक्तशेषप्रणयि शिवासहस्रभोग्यम् अनणु रण बभूव।**

**व्याख्या**

धृता गृहीता सुभटाना सुयोधाना करङ्का अस्थिपञ्जरा येन तत्। अङ्के क्रोडे वर्त्तीनि गतानि द्विरदाना गजाना विकटानि भयङ्कराण्यस्थिचक्रवालान्यस्थिसमूहा यस्य तत्, कृतान्तस्य यमस्य भुक्त भोजन तस्य शेषस्तस्य प्रणयि स्थान शेषयुक्तमित्यर्थ। तद्यमराजभक्षितमासशिष्टयुक्तमिति भाव.। शिवाना शृगालीना सहस्र तेन भोग्य भोगयोग्य रण युद्धमनणु बहुल बभूव जातम्।

### भाषा

बडे बडे योद्धाओ के अस्थिपञ्जरो को धारण करने वाला, ( गोद में ) पास ही मे हाथियो के समूह की भयङ्कर हड्डियो के ढेर को रखने वाला, यमराज के खाने से बचे हुए मास वाला और हजारो शृगालियो के उपभोग के योग्य, एक बहुत बडा युद्ध हुआ।

**किमपरमुपरि प्रतापभाजां विहितपदः स बभञ्ज राजयुग्मम् ।**
**द्रविडपतिरगात्क्वचित्पलाय्य न्यविशत बन्धनधाम्नि सोमदेवः ॥९०॥**

### अन्वयः

किम् अपरम् । प्रतापभाजाम् उपरि विहितपदः सः राजयुग्मं बभञ्ज । द्रविडपतिः पलाय्य क्वचित् गतः । सोमदेवः बन्धनधाम्नि न्यविशत ।

### व्याख्या

किमपरमन्यत्किं वक्तव्यम् । प्रताप प्रभाव भजन्ति सेवन्ते ते प्रतापभाजस्तेषा प्रभावशालिनामुपरि मस्तके विहित स्थापित पद चरण येन स स्थापित चरण स विक्रमाङ्कदेवो राज्ञोर्द्रविडपतिराजिगसोमदेवयोर्युग्म युगल बभञ्ज सम्मर्दितवान । द्रविडपती राजिग पलाय्य द्रुतगत्या क्वचिदज्ञातस्थान गतो जगाम । सोमदेवो बन्धनस्य धाम स्थान तस्मिन् कारागारे न्यविशत निविष्टवान् ।

### भाषा

अब और दूसरा क्या कहना है ? प्रतापियो के मस्तक पर चरण रखने वाले विक्रमाङ्कदेव ने राजिग और सोमदेव, इन दोनो राजाओ को कुचल डाला। द्रविड देश का राजा राजिग भागकर कही अज्ञात स्थान मे चला गया। सोमदेव कैद खाने मे बन्द हो गया।

**उभयनरपतिप्रतापलक्ष्म्यौ विलुलुठतुश्चरणद्वये तदीये ।**
**त्रिभुवनमहनीयबाहुवीर्यद्रविणविभूतिमतां किमस्त्यसाध्यम् ॥९१॥**

### अन्वयः

उभयनरपतिप्रतापलक्ष्म्यौ तदीये चरणद्वये विलुलुठतुः । त्रिभुवनमहनीयबाहुवीर्यद्रविणविभूतिमतां किम् असाध्यम् (अस्ति) ।

### व्याख्या

उभयनरपत्यो सोमदेवराजिगयो प्रतापलक्ष्म्यौ प्रभावराजलक्ष्म्यौ राजिग-सोमदेवोभयनरदेवयो· प्रभावसम्पत्ती तस्येद तदीय तस्मिन् विक्रमाङ्कदेवसम्बन्धिनि चरणद्वये पादयुग्मे विलुलुठतुर्विलोठन चक्रतु । त्रयाणा भुवनाना समाहारस्त्रिभुवन तस्मिल्लोकत्रये महनीय पूजनीय प्रशसनीयमित्यर्थ । बाह्वो-र्भुजयोर्वीर्यं बल द्रविण धन विभूतिरैश्वर्यञ्चाऽस्ति येषु ते तेषामसाधारण-पुरुषाणा कृते किमसाध्यमप्राप्यमस्ति न किमपीत्यर्थ । अत्रार्थान्तरन्या सालङ्कार· ।

### भाषा

दोनो ही राजाओ के प्रताप और राजलक्ष्मी विक्रमाङ्कदेव के चरणो पर लोटने लगी । तीनो लोको मे पूजनीय बाहुबल, धन और ऐश्वर्य से युक्त असाधारण पुरुषो के लिये कौन कार्य असाध्य है अर्थात् कोई भी कार्य असाध्य नही है ।

**विहितसमरदेवतासपर्यः परिकरितः क्षितिपालयुग्मलक्ष्म्या ।**
**अथ शिथिलितकङ्कटस्तटान्त-स्थितकटकां स जगाम तुङ्गभद्राम् ॥९२॥**

### अन्वयः

अथ विहितसमरदेवतासपर्यः क्षितिपालयुग्मलक्ष्म्या परिकरितः शिथि-लितकङ्कटः सः तटान्तस्थितकटका तुङ्गभद्रां जगाम ।

### व्याख्या

अथ राजद्वयविजयानन्तर विहिता कृता समरदेवताया. सग्रामाधिष्ठातृ-देवताया सपर्या पूजा 'पूजा नमस्यापचिति सपर्या चार्हणा समा' इत्यमर । येन स, क्षितिपालयो राज्ञो सोमदेवराजिगयोर्युग्म युगल तस्य लक्ष्मी राजलक्ष्मीस्तया परिकरित परिवेष्टितस्समालिङ्गित इत्यर्थ । शिथिलित श्लथीकृत कङ्कट कवचो येन स त्यक्तकवच इत्यर्थ । स विक्रमाङ्कदेवस्तटान्ते तीरप्रान्ते स्थित प्राप्त कटक सैन्य यस्या सा ता तुङ्गभद्रा तन्नाम्नी नदीं जगाम ययौ ।

### भाषा

दोनो राजाओ को परास्त करने के अनन्तर सग्राम की देवता का पूजन करने वाला, दोनो राजाओ की राजलक्ष्मी से आलिङ्गित अर्थात् राजलक्ष्मी को

प्राप्त करने वाला और युद्ध समाप्त हो जाने से आवश्यकता न रहने के कारण कवच को ढीला करने वाला विक्रमाङ्कदेव, तट पर विद्यमान सेना वाली तुङ्गभद्रा नदी पर गया।

**वितरितुमिदमग्रजस्य सर्वं पुनरुपजातमतिः स राजपुत्रः।**
**तुहिनकिरणखण्डमण्डनेन स्फुरदशरीरगिरा रुषा न्यषेधि ॥९३॥**

**अन्वयः**

**अग्रजस्य इदं सर्वं पुनः वितरितुम् उपजातमतिः सः राजपुत्रः तुहिनकिरणखण्डमण्डनेन रुषा स्फुरदशरीरगिरा न्यषेधि।**

**व्याख्या**

अग्रजस्य ज्येष्टभ्रात्रे सोमदेवाय 'अग्रजस्येत्यत्र सम्बन्धसामान्ये षष्ठी। इदं सर्वं राज्यादिक पुनर्वितरितु समर्पयितुमुपजाता समुत्पन्ना मतिर्बुद्धिर्यस्य स उपजातमति स राजपुत्रो नृपसुतो विक्रमाङ्कदेवस्तुहिनकिरण शीतमयूखश्चन्द्रो मण्डन शिरोभूषण यस्य स तेन शङ्करेण रुषा क्रोधेन स्फुरन्ती प्रकटिताऽशरीरा देहरहिता गीर्वाणी 'गीर्वाग्वाणी सरस्वती' इत्यमर। तयाऽऽकाशवाण्या न्यषेधि निवारित।

**भाषा**

अपने बडे भाई सोमदेव को उसका राज्य आदि फिर से लौटा देने की उत्पन्न भई हुई बुद्धि वाले विक्रमाङ्कदेव को चन्द्रमा के खण्ड को अपने मस्तक पर आभूषण के रूप मे धारण करने वाले भगवान् शकर ने क्रोधपूर्वक आकाशवाणी द्वारा मने किया।

**अथ विक्रमाङ्कदेवस्य राज्याभिषेकं कुलकेन वर्णयति कविः—**

**मुखपरिचितराजहंसभङ्ग्या सरसिरुहेष्विव पूरयत्सु शङ्खान्।**
**सरिति घटिकयेव शोधयन्त्यां प्रतिफलितार्कमिषेण लग्नवेलाम् ॥९४॥**

**अन्वयः**

मुखपरिचितराजहंसभङ्ग्या सरसिरुहेषु शङ्खान् पूरयत्सु इव, सरिति प्रतिफलितार्कमिषेण घटिकया लग्नवेला शोधयन्त्याम् इव (विक्रमादित्यदेवोऽभिषेकमलभतेति ९८ सख्याकश्लोकेन सम्बन्धः।)

**व्याख्या**

मुखे आननेऽग्रभागे वा परिचिता स्नेहमापन्ना स्थिता राजहसा मरालराजा. 'राजहसास्तु ते चञ्चुचरणैर्लोहितैस्सिता' इत्यमर । तेषा भङ्ग्या व्याजेन सरसीरुहेषु कमलेषु 'पङ्केरुह तामरस सारस सरसीरुहम्' इत्यमर । शङ्खान् कम्बून् पूरयत्सु सत्सु ध्वनयत्सु सत्स्विव, सरति नद्या प्रतिफलितो जले प्रतिबिम्बितोऽर्क सूर्यस्तस्य मिषेण व्याजेन घटिकया समयसूचकघटीयन्त्रेण लग्नवेलामभिषेकस्य शुभमुहूर्त शोधयन्त्यामिव विचारयन्त्या सत्यामिव (विक्रमादित्यदेवोऽभिषेकमलभतेत्यनेन सम्बन्ध ।) सापन्हवोत्प्रेक्षालङ्कार ।

**भाषा**

कमलो के मुख पर या अग्रभागो मे प्रेमपूर्वक बैठे हुए राजहसो के मिष से मानो कमलो के शखो को बजाते रहने पर ओर नदी के जल मे प्रतिबिम्बित सूर्य बिम्ब के मिष से मानो नदी के, घटिका देखकर शुभमुहूर्त का विचार करते रहने पर (विक्रमाङ्कदेव का राज्याभिषेक हुआ ।)

**अतिशिशिरतया मरुत्सु भक्त्या कुलसरितामिव वारि धारयत्सु ।**
**नभसि विकरतीव गाङ्गमम्भः पवनसमाहृतशीकरच्छलेन ॥९५॥**

**अन्वयः**

मरुत्सु अतिशिशिरतया भक्त्या कुलसरिता वारि धारयत्सु (सत्सु) इव, नभसि पवनसमाहृतशीकरच्छलेन गाङ्गम् अम्भः विकरति (सति) इव (विक्रमादित्यदेवोऽभिषेकमलभतेत्यन्वयः)

**व्याख्या**

मरुत्सु वायुष्वतिशिशिरतयाऽतिशैत्येन भक्त्या पूज्यत्वप्रयुक्तानुरागेण कुलसरिता गङ्गादिपवित्रनदीना वारि जल धारयत्सु वहत्सु सत्स्विव, नभस्याकाशे पवनेन वायुना समाहृता समानीता शीकरा अम्बुकणा 'शीकरोऽम्बुकणा स्मृता' इत्यमर । तेषा छलेन व्याजेन गङ्गाया इद गाङ्गमाकाशगङ्गासम्बन्ध्यम्भो जल विकिरति विक्षिपति सतीव (विक्रमादित्यदेवोऽभिषेकमलभतेति) ।

**भाषा**

वायुओ के अत्यन्त ठडे होने से मानो उनके द्वारा भक्तिपूर्वक गङ्गादि कुल नदियो से (अभिषेक के लिए) लाए गए पवित्र जलो को धारण करते रहने

पर, और आकाश के वायुओ द्वारा लाए हुए जल कणो के मिष से मानो आकाशगङ्गा के जल को छिडकते रहने पर (विक्रमाङ्कदेव का राज्याभिषेक हुआ ।)

**अतिविशदतया दिशां मुखेषु स्मितमिव केतकमित्रमुद्वहत्सु ।**
**निखिलभुवनमानसेषु हर्ष-प्रसरवशेन नितान्तमुत्सुकेषु ॥९६॥**

**अन्वयः**

दिशा मुखेषु अतिविशदतया केतकमित्र स्मितम् उद्वहत्सु ( सत्सु ) इव निखिलभुवनमानसेषु हर्षप्रसरवशेन नितान्तम् उत्सुकेषु ( सत्सु ) (विक्रमादित्यदेवोऽभिषेकमलभतेत्यन्वयः । )

**व्याख्या**

दिशा ककुभा 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । मुखेष्वाननेष्वग्रभागेषु वाऽतिविशदतयाऽतिनैर्मल्येन केतक्या पुष्प केतक तस्य मित्र शुक्लत्वात्केतकीपुष्पसदृश स्मितमीषद्धास्यमुद्वहत्सु धारयत्सु सत्स्विव, दिक्षु नैर्मल्य प्राप्तास्वित्यर्थ । निखिलभुवनाना सकललोकस्थितजनाना मानसानि मनासि तेषु सकललोकगतजनमन सु हर्षस्याऽऽनन्दस्य प्रसरो विस्तारस्तस्य वशेन कारणेन नितान्तमत्यन्तमुत्सुकेषु समुत्कण्ठितेषु सत्सु ( विक्रमादित्यदेवोऽभिषेकमलभतेति । )

**भाषा**

दिशाओ के अत्यन्त निर्मल होने से मानो श्वेत केवडे के फूलो के समान उनके मुस्कराते रहने पर और समस्त लोको के मनुष्यो के मनो मे आनन्द का सचार होने के कारण उनके उत्कण्ठित हो उठने पर (विक्रमाङ्कदेव का राज्याभिषेक हुआ । )

**वरकरिषु गभीरदुन्दुभीनां ध्वनिमिव संजनयत्सु गर्जितेन ।**
**दिशि दिशि तुरगेषु सान्द्रशङ्ख-स्वनकमनीयसहर्षहेषितेषु ॥९७॥**

**अन्वयः**

वरकरिषु गर्जितेन गभीरदुन्दुभीना ध्वनि संजनयत्सु (सत्सु) इव,

दिशि दिशि तुरगेषु सान्द्रशङ्खस्वनकमनीयसहर्षहेषितेषु (सत्सु) (विक्रमादित्यदेवोऽभिषेकमलभतेत्यन्वयः । )

### व्याख्या

वरकरिषु श्रेष्ठगजेषु गर्जितेन बृंहितेन गभीरदुन्दुभीना गम्भीरभेरीणा 'भेरी स्त्री दुन्दुभि पुमान्' इत्यमर । ध्वनि शब्द सजनयत्सु सत्स्विव, दिशि दिशि प्रतिदिश तुरगेषु घोटकेषु सान्द्रा घना गम्भीरा वा शङ्खाना कम्बूना स्वना शब्दा इव कमनीयानि मनोज्ञानि सहर्षाणि प्रमोदसहितानानि हेषितानि तुरगरवा येषा ते तेषु गम्भीरकम्बुशब्दमनोज्ञसप्रमोदहेषितेषु सत्सु (विक्रमादित्यदेवोऽभिषेकमलभतेति ।

### भाषा

श्रेष्ठ हाथियो की गर्जना से मानो उनके भेरीनाद करते रहने पर और चारो ओर घोडो के, गम्भीर शङ्खो की ध्वनि के समान कर्णप्रिय सहर्ष हिनहिनाते रहने पर (विक्रमाङ्कदेव का राज्याभिषेक हुआ ।)

**अथ सुरपथवल्गद्दिव्यभेरीनिनादं**<br>
**प्रशमितपरितापं भर्तृलाभात्पृथिव्याः ।**<br>
**अलभत चिरचिन्ताचान्तचालुक्यलक्ष्मी–**<br>
**क्लमसुषमभिषेकं विक्रमादित्यदेवः ॥६८॥**

### अन्वयः

अथ विक्रमादित्यदेवः पृथिव्याः भर्तृलाभात् प्रशमितपरिताप सुरपथवल्गद्दिव्यभेरीनिनादं चिरचिन्ताचान्तचालुक्यलक्ष्मीक्लमसुषम् अभिषेकम् अलभत ।

### व्याख्या

अथ समरविजयानन्तर विक्रमादित्यदेवो विक्रमाङ्कदेवो राजकुमार पृथिव्या. क्षमाया भर्तृलाभात् सुस्वामिप्राप्त्या प्रशमित शान्ति प्रापित परितापस्सन्तापो दुःख वा येन स त दूरीकृतदुःख, सुरपथे गगने वलगन् समुत्कर्ष प्राप्नुवन्दिव्याया स्वर्गीयाया भेर्या निनाद शब्दो यस्मिन् स त गगनप्रसरत्स्वर्गीयभेरीनिस्वन, चिराच्चिरकालादारभ्य चिराय वा व्याप्ता चिन्ता स्वस्वामिपराजयजन्यशोको-

ऽथवा सुस्वामिप्राप्त्यर्थचिन्ता तयाऽऽचान्ता परिपूर्णा चालुक्यलक्ष्मीश्चालुक्य-राजवशश्रीस्तस्या क्लम ग्लानिं मुष्णातीति चिरचिन्ताचान्तचालुक्यलक्ष्मीक्लममुट् तमभिषेक राज्याभिषेकमलभत प्राप्तवान् ।

## भाषा

युद्ध मे विजय प्राप्त होने के अनन्तर राजकुमार विक्रमाङ्कदेव ने, पृथिवी को अच्छा स्वामी मिल जाने से, अपने स्वामिओ के पराजय के सम्पूर्ण दु खो को दूर कर देने वाले, आकाश मे गुंजने वाले स्वर्गीय भेरी की ध्वनि से युक्त, और चिरकाल तक अच्छे स्वामी (राजा) को प्राप्त करने की चिन्ता मे डूबी हुई चालुक्य वशीय राजाओ की राज्यलक्ष्मी के मनोमालिन्य को दूर कर देनेवाले, राज्याभिषेक को प्राप्त किया ।

इति पञ्चभिः श्लोकैः कुलकम् ।

**श्रीचालुक्यनरेन्द्रसूनुरनुजं तत्रैव पुण्ये दिने**
**कारुण्यातिशयादसूत्रयदसौ पात्रं महत्याः श्रियः ।**
**दासी यद्भवनेषु विक्रमधनक्रीता ननु श्रीरियं**
**तेषामाश्रितपोषणाय गहनं किं नाम पृथ्वीभुजाम् ॥६६॥**

## अन्वयः

असौ श्रीचालुक्यनरेन्द्रसूनुः तत्र पुण्ये दिने एव कारुण्यातिशयात् अनुज महत्याः श्रियः पात्रम् असूत्रयत् । यद्भवनेषु विक्रमधनक्रीता इयं श्रीः दासी ननु, तेषा पृथ्वीभुजाम् आश्रितपोषणाय कि नाम गहनम् (अस्ति) ।

## व्याख्या

असौ श्रिया विराजितस्य चालुक्यनरेन्द्रस्याऽऽहवमल्लदेवस्य सूनु पुत्रो विक्रमाङ्कदेवस्तत्र तस्मिन् पुण्ये पावने सुन्दरे वा 'पुण्य तु चार्वपि' इत्यमर । दिने राज्याभिषेकदिवस एव कारुण्यस्य दयाया अतिशय आधिक्य तस्मादत्यधिक-दयालुत्वादनुज स्वकनिष्ठभ्रातर सिंहदेव महत्या विशालाया श्रियो लक्ष्म्या पात्र भाजनमसूत्रयत् कृतवान् । तस्मै वनवासिमण्डलाधीश्वर चकारेति भाव । येषा राज्ञा भवनेषु सदनेषु विक्रमधनेन पराक्रमरूपद्रव्येण क्रीता, मूल्येन स्वायत्ती-

**कृतेय श्री राज्यलक्ष्मीर्दासी सेविका ननु निश्चयेन, तेषा पृथ्वीभुजा भूभुजामा-श्रितानामवलम्बितानामाश्रय विधाय वसता सिंहदेव-महाकविप्रभृतीना पोषणाय भरणाय किं नाम गहन कठिनम्। तेषा भरणपोषणेष्वेतादृशाना महाप्रतापिना राज्ञा किमपि काठिन्य नास्तीति भाव ।**

## भाषा

इस श्रीमान् आहवमल्लदेव के पुत्र विक्रमाङ्कदेव ने उसी शोभन दिन ही अत्यन्त दयालुता के कारण अपने छोटे भाई सिहदेव को विशाल सम्पत्ति का भाजन बनाया। अर्थात् उसे वनवासिमण्डल का राजा बना दिया। जिन राजाओ के घरो मे पराक्रम रूप धन मे खरीदी हुई यह लक्ष्मी निश्चय पूर्वक दासी बन कर रहती है उन राजाओ को अपने आश्रितो का (सोमदेव तथा अन्य महाकवि गुणी आदि का) पालन पोषण करना क्या कठिन है।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट-महाकवि-बिह्लणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये षष्ठ सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाजबुधोत्तमात्समुदितः श्रीविश्वनाथः सुधीः।**
**चक्रे रामकुबेर—पण्डितवरात्सम्प्राप्तसाहाय्यक—**
**टीकायुग्ममिदं रमाकरुणया सर्गेऽत्र षष्ठे नवम्॥**

ॐ शान्ति शान्ति शान्ति ।

॥ श्री ॥

महाकवि श्री बिल्हण-विरचितं

# विक्रमाङ्कदेवचरितम्

## सप्तमः सर्गः ।

**स सर्वमावर्ज्य रिपुप्रमाथी मनोरथानामथ पूरणेन ।**
**परिभ्रमन्युद्धकुतूहलेन दिग्दन्तिशेषाः ककुभश्चकार ॥१॥**

### अन्वयः

अथ रिपुप्रमाथी सः मनोरथानां पूरणेन सर्वम् आवर्ज्य युद्धकुतूहलेन परिभ्रमन् ( सन् ) ककुभः दिग्दन्तिशेषाः चकार ।

### व्याख्या

अथ विक्रमाङ्कदेवस्य राज्याभिषेकानन्तर रिपूणा शत्रूणा प्रमाथी मर्दक स विक्रमाङ्कदेवो मनोरथानामभिलाषाणा पूरणेन सफलीकरणेन सर्वं जनसमूहमावर्ज्य वशीकृत्य युद्धस्य समरस्य कुतूहलमुत्कण्ठा तेन परिभ्रमन् परितो विचरन् ककुभो दिश 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता'। दिशा दन्तिनो दिग्दन्तिनो दिग्गजा एव शेषा अवशिष्टा यासु ताश्चकार सम्पादितवान् । सकलगजाहरणाद्दिग्गजा एवाऽवशिष्टा आसन्निति भाव । सर्गेऽस्मिन्निन्द्रवज्राच्छन्द. 'स्यादिन्द्रवज्रा यदितौ जगौग' इति लक्षणात् ।

### भाषा

( विक्रमाङ्कदेव के ) राज्याभिषेक के अनन्तर, शत्रु का मर्दन करने वाले विक्रमाङ्कदेव ने मनोरथो को पूर्ण कर, सब जनो को अपने अनुकूल बना कर, युद्ध की उत्कण्ठा से चारो ओर घूमते हुए दिशाओ को, दिग्गज ही अवशिष्ट है जिनमे ऐसा बना दिया । अर्थात् चारो दिशाओ के हाथियो को अपने स्वाधीन कर लेने से केवल दिग्गज (दिशाओ के हाथी) ही अवशिष्ट रह गये ।

**गते समाप्तिं नरनाथचक्रे निचोलकारासितचापदण्डः ।**
**निर्वाप्य चोलस्य पुनः प्रतापं क्रमेण कल्याणमसौ विवेश ॥२॥**

### अन्वयः

असौ चोलस्य प्रताप निर्वाप्य नरनाथचक्रे क्रमेण समाप्ति गते (सति) निचोलकारासितचापदण्डः (सन्) पुनः कल्याण विवेश ।

### व्याख्या

असौ विक्रमाङ्कदेवो चोलस्य चोलदेशाधिपस्य प्रताप प्रभाव निर्वाप्य शान्ति नीत्वा नराणा मनुष्याणा नाथा स्वामिनस्तेषा चक्र समूहस्तस्मिन् राजसमूहे क्रमेण शनै. समाप्ति गते पराजय प्राप्ते सति निचोल आवरकम् ("खोल" इति भाषायां प्रसिद्ध ।) एव कारा गुप्तिगृह 'कारास्याद्बन्धनालये' इत्यमर । तस्यामासितो निवेशितश्चापदण्डो धनुर्दण्डो येन स । एवम्भूतस्सन् पुनर्मुहु कल्याण कल्याणकटकपुर विवेश प्रविष्टवान् समाजगामेत्यर्थ । अत्र रूपकालङ्कार ।

### भाषा

विक्रमाङ्कदेव ने, चोल देश के राजा के प्रताप को ठडा कर अर्थात् उसे हराकर, सम्पूर्ण राजाओ को क्रम से पराजित कर देने पर, अपने धनुष्य को खोल मे रखकर फिर से कल्याण कटक पुर मे प्रवेश किया ।

**अत्रान्तरे मन्मथबालमित्रं लतावधूविभ्रमसूत्रकारः ।**
**स्थानोपदेशी पिकपञ्चमस्य शृङ्गारबन्धुर्मधुराविरासीत् ॥३॥**

### अन्वयः

अत्रान्तरे मन्मथबालमित्र लतावधूविभ्रमसूत्रधारः पिकपञ्चमस्य स्थानोपदेशी शृङ्गारबन्धुः मधुः आविरासीत् ।

### व्याख्या

अत्रान्तरेऽस्मिन्नवकाशे मन्मथस्य कामदेवस्य 'मदनो मन्मथो मार· प्रद्युम्नो मीनकेतन·' इत्यमर । बालमित्र बालसखा, लता एव वध्व· कान्तास्तासां विभ्रमस्य विलासोपदेशस्य सूत्रधारो नाट्याचार्य, पिकाना कोकिलाना 'वनप्रिय. परभृत कोकिल पिक इत्यपि' इत्यमर । पञ्चम पञ्चमस्वरस्तस्य 'पिकाः

गायन्तिपञ्चमम्' इति । स्थानस्य शुद्धोच्चारणोपयुक्त-मुखस्थित-कण्ठ ताल्वाद्य-भिघातस्थानस्योपदेश्युपदेशक सङ्गीताचार्य, शृङ्गारस्य शृङ्गाररसस्य बन्धुरुद्दीपको मधुर्वसन्त आविरासीत् समाजगाम । मालारुपकमलङ्कार ।

### भाषा

इसी बीच मे कामदेव का लगोटिया साथी, लता रूपी स्त्रियो को विभिन्न विलासो का उपदेश देने वाला, नाट्याचार्य, कोयल के पञ्चम स्वर के शुद्ध उच्चारण के लिये कण्ठ तालु आदि स्थानो की शिक्षा देने वाला सङ्गीताचार्य, शृङ्गार रस को उद्दीप्त करने वाला, वसन्त ऋतु आ गया ।

**शीतर्तुभीत्या विविशुः समस्ताः किं कन्दरासीमनि चन्दनाद्रेः ।**
**यन्निःसरन्ति स्म हिमव्यपाये दिवा च रात्रौ च ततः समीराः ॥४॥**

### अन्वयः

समस्ताः समीराः कि चन्दनाद्रेः कन्दरासीमनि शीतर्तुभीत्या विविशुः यत् हिमव्यपाये (ते) दिवा च रात्रौ च ततः निःसरन्ति स्म ।

### व्याख्या

समस्तास्सकलास्समीरा वायव. कि चन्दनाद्रेर्मलयपर्वतस्य कन्दरासीमनि दरीमध्ये 'दरी तु कन्दरो वाऽस्त्री' इत्यमर । शीतर्तुभीत्या शिशिरर्तुभयेन विविशु प्रविष्टा. । यद्यस्मात्कारणात् हिमस्य शिशिरर्तोर्व्यपाये समाप्तौ ते पवना दिवा दिने च रात्रौ च निशायाञ्च 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमर । ततश्चन्दनाद्रेर्नि सरन्ति स्म निर्गच्छन्ति स्म । कन्दरासु प्रवेशे शीतर्तुभीतेर्हेतुत्वेनोत्प्रेक्षणादुत्प्रेक्षा ।

### भाषा

सम्पूर्ण वायु क्या शिशिर ऋतु के (थण्डे के) भय से मलयाचल की कन्दराओ मे छिप कर बैठे थे ? क्योकि शिशिर ऋतु के (जाडे के) बीतते ही वे वायु रात दिन मलयाचल से निकलते ही चले आ रहे थे ।

**कृतप्रकोपाः पवनाशनानां निवासदानादिव पन्नगानाम् ।**
**विनिर्ययुश्चन्दनशैलकुञ्जादाशामुदीचीं प्रति गन्धवाहाः ॥५॥**

### अन्वयः

गन्धवाहाः पवनाशनानां पन्नगाना निवासदानात् कृतप्रकोपाः इव (सन्तः) चन्दनशैलकुञ्जात् उदीचीम् आशा प्रति विनिर्ययुः ।

### व्याख्या

गन्धवाहा अनिला 'गन्धवाहानिलाशुगा' इत्यमर । पवनो वायुरशन भोजन येषा ते तेषा वायुभक्षकाणा पन्नगानामुरगाणा 'उरग पन्नगो भोगी जिह्मग- पवनाशन' इत्यमर । निवासस्य स्थितेर्दान तस्मात् कृत प्रदर्शित प्रकोप क्रोधो यैस्तेऽमर्षयुक्तास्सन्त इवाऽस्मद्भक्षका एवाऽत्र निवसन्ति ततोऽत्राऽस्मन्निवासो न युक्त इति हेतो कुपिता सन्त इवेत्यर्थ । चन्दनशैलस्य मलयाचलस्य कुञ्जान्निकुञ्जात् 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमर । उदीचीमुत्तरामाशा दिश प्रति विनिर्ययुर्निर्जग्मु । मधौ दक्षिणानिलो वहतीति- प्रसिद्धि । पवने स्वभक्षकसर्पनिवासहेतुककोपकर्त्तृत्वस्य मलयाचलपरित्यागे हेतुत्वेनोत्प्रेक्षणादुत्प्रेक्षा ।

### भाषा

वायुगण, वायुभक्षक सर्पो को, मलयाचल द्वारा आश्रय दिये जाने से मानो क्रुद्ध होकर मलय पर्वत के कुञ्ज से उत्तर दिशा की ओर भाग चले । अर्थात् दक्षिणानिल उत्तर दिशा की ओर बहने लगा ।

**रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।**
**उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥६॥**

### अन्वयः

रविः रथस्थितानां पुरातनाना वाहनाना परिवर्तनाय इव तुरगोत्तमनाम् उत्पत्तिभूमौ उत्तरस्या दिशि प्रतस्थे ।

### व्याख्या

रविस्सूर्यो रथस्थिताना रथे विनियोजिताना पुरातनाना वृद्धाना वाहनाना- मश्वाना परिवर्तनायेव तेषा स्थानेऽन्यनवीनाश्वग्रहणार्थमिव तुरगोत्तमानामश्व- श्रेष्ठानामुत्पत्तिभूमौ जन्मभूमौ काबुलप्रदेश इत्यर्थ । काबुलप्रदेशो भारत-

**स्योत्तरदिशि विद्यमानोऽस्ति । उत्तरस्या दिश्युदीच्यामाशाया 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्चता' इत्यमर । प्रतस्थे गन्तुमारेभे । रविरुत्तरायणोऽभूदिति भाव । अत्रोत्प्रेक्षालङ्कार ।**

**भाषा**

सूर्य अपने रथ के बुढ्ढे घोडो को बदल देने के लिये मानो श्रेष्ठ घोडो के उत्त्पत्ति स्थान उत्तारदिशा मे अर्थात् काबुल मे (काबुली घोडे प्रसिद्ध है) प्रस्थित हुवा । अर्थात् सूर्य उत्तरायण होने लगे ।

**अहो नु चैत्रं प्रति कापि भक्तिरकृत्रिमा केरलमारुतस्य ।**
**द्राघिष्ठमध्वानमसौ विलङ्घ्य सवत्र तस्यानुचरो यदासीत् ॥७॥**

**अन्वयः**

**अहो नु केरलमारुतस्य चैत्रं प्रति अकृत्रिमा का अपि भक्तिः यत् असौ द्राघिष्ठम् अध्वान विलङ्घ्य सर्वत्र तस्य अनुचरः आसीत् ।**

**व्याख्या**

**"अहो" इत्याश्चर्ये 'नु' इति वितर्के । केरलमारुतस्य दक्षिणस्थकेरलदेशवाहिन पवनस्य दक्षिणानिलस्येत्यर्थ । चैत्र चैत्रमास प्रति वसन्तकाल प्रतीत्यर्थ । अकृत्रिमा स्वाभाविकी काप्यनिर्वचनीयाऽपूर्वेत्यर्थ । भक्तिरनुराग । यद्यस्मात्कारणादसौ दक्षिणानिलो द्राघिष्ठमतिदीर्घमध्वान मार्ग 'अयन वर्त्म मार्गाध्वपन्थान पदवी सृति' इत्यमर । विलङ्घ्य समतिक्रम्य सर्वत्र सर्वस्थाने तस्य चैत्रमासस्य वसन्तस्य वाऽनुचरोऽनुगाम्यासीत् जात । वसन्ते दक्षिणानिल सर्वत्रैव वहतीति भाव । अत्र केरलमारुते सेवकव्यवहारसमारोपात् समासोक्तिरलङ्कार ।**

**भाषा**

आश्चर्य की बात है कि केरल के वायु का अर्थात् दक्षिणानिल का चैत्र मास के प्रति अर्थात् वसन्त ऋतु के प्रति एक विलक्षण स्वाभाविक अनुराग है। क्योकि वह दक्षिण का वायु एक भारी राम्ता तॅय कर सर्वत्र चैत्र का अर्थात् वसन्त ऋतु का साथ देता था। अर्थात् वसन्त ऋतु मे सदैव दक्षिणानिल बहता ही है ।

अथ दक्षिणानिलस्य कामोद्दीपकत्वाद्विरहिणीनां दयनीयां दशां वर्णयति कविः—

**देया शिलापट्टकपाटमुद्रा श्रीखण्डशैलस्य दरीगृहेषु ।**
**वियोगिनीकण्टक एष वायुः कारागृहस्यास्तु चिरादभिज्ञः ॥६॥**

**अन्वयः**

श्रीखण्डशैलस्य दरीगृहेषु शिलापट्टकपाटमुद्रा देया । (येन) विनियोगिनीकण्टकः एषः वायुः कारागृहस्य चिरात् अभिज्ञः अस्तु ।

**व्याख्या**

श्रीखण्डशैलस्य चन्दनाद्रेर्मलयाचलस्य दरीगृहेषु कन्दरागृहेषु 'दरी तु कन्दरो वास्त्री' इत्यमर । शिलापट्टा प्रस्तरखण्डपट्टा एव कपाटानि तेषा मुद्रा प्रावरण देया निवेश्या येन कारणेन शिलामुद्रणरूपेण वियोगिनीकण्टको विरहिणीना हृदि कण्टकवच्छल्यवद्व्यथाजनक एष प्रसिद्धो वायुर्दक्षिणानिल कारागृहस्य बन्धनालयस्य 'प्रग्रहोपग्रहौ बन्द्या कारास्याद्बधनालये' इत्यमर । चिराच्चिराय बहुकालपर्यन्तमित्यर्थ । अभिज्ञस्तन्निवासजन्यदु खानुभविताऽस्तु जायताम् । परपीडक कारागृहनिवासयोग्य इति भाव ।

**भाषा**

मलयाचल के कन्दरा रूपी घरो को पत्थरो की चट्टान रूपी किवाडो से बन्द कर देना चाहिये । जिससे (उन कन्दराओ मे रहने वाला) विरहिणियो के हृदय मे काँटे गडाने के समान पीडा देने वाला यह दक्षिणानिल चिरकाल तक कैदखाने मे रहने के दु ख का अनुभव करे । क्योकि जो दूसरो को व्यर्थ दु ख देता है वह कैदखाने मे जाने योग्य है ।

**विरूक्षणीयः सखि दाक्षिणात्यस्त्वया न वायुः परुषैर्वचोभिः ।**
**यत्कोपनिःश्वासपरम्पराभिः पीनत्वमायात्ययमुष्णताञ्च ॥६॥**

**अन्वयः**

हे सखि ! त्वया परुषैः वचोभिः दाक्षिणात्यो वायुः न विरूक्षणीयः । यत् अयं कोपनिःश्वासपरम्पराभिः पीनत्वम् उष्णतां च आयाति ।

### व्याख्या

हे सखि ! हे वयस्ये ! त्वया परुषै क्रूरै क्रोधोत्पादकैरित्यर्थ । वचोभिर्वचनैर्दक्षिणस्या भवो दाक्षिणात्यो मलयाचलसम्बन्धी वायु पवनो न विरूक्षणीयो न कोपनीय । यद्यस्मात्कारणादय वायु कोपस्य त्वत्परुषवचनजन्यक्रोधस्य नि श्वासपरम्परा परुषवाक्यजातक्रोधोत्पन्नमन क्षोभजनि श्वासपरम्परास्ताभि पीनत्व स्थूलत्वमुष्णता तापकत्वञ्चाऽऽयाति प्राप्नोति । मलयानिल शीतलोऽपि विरहिणीनामुष्णतामेव वेगेन वर्धयतीति भाव ।

### भाषा

हे सखि ! तुम कडुए वचनो से दक्षिणानिलको कुपित न करो । क्योकि यह वायु कुद्ध होकर लम्बे २ उच्छ्वास लेने से मोटा अर्थात् वायु मे उच्छ्वास के वायु मिलने से अधिक, और गरम हो जाता है । विरहिणियो को दक्षिणानिल ठडा होने पर भी गरम ही मालुम होता है ।

**बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य ।**
**इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकन्दरस्थः ॥१०॥**

### अन्वयः

श्रीखण्डपृथ्वीधरकन्दरस्थः शबराधिराजः बाणेन मृगं हत्वा अस्य दक्षिणमारुतस्य यात्रा निवार्यताम् इति अर्थनीयः ।

### व्याख्या

श्रीखण्डपृथ्वीधरो मलयाचलस्तस्य कन्दरो दरी 'दरी तु कन्दरो वा स्त्री' इत्यमर । तस्मिन् तिष्ठतीति श्रीखण्डपृथ्वीधरकन्दरस्थ शबराणा वनेचराणामधिराज स्वामी बाणेन शरेण मृग वायुवाहनरूप मृग हत्वा मारयित्वाऽस्य दक्षिणमारुतस्य दक्षिणानिलस्य यात्रा प्रवह इत आगमनमित्यर्थ । निवार्यता प्रतिषेधनीयेत्यर्थनीय प्रार्थनीय । वायोर्वाहन मृग अत एव स पृषदश्व इति कथ्यते । 'पृषदश्वो गन्धवहो गन्धवाहानिलाशुगा' इत्यमर । वाहनाभावे वायोरत्राऽऽगमनमसम्भवमिति भाव ।

### भाषा

मलयाचल की कन्दरा मे रहने वाले शबरराज से यह प्रार्थना करनी

चाहिये कि वायु के वाहन मृग को मार कर वायु का इस तरफ़ आना रोक दे। अर्थात् दक्षिणानिलके न आने से विरहजनित पीड़ा न हो सकेगी।

**यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः।**
**केलिप्रसङ्गे शबराङ्गनानां स हि स्मरग्लानिमपाकरोति ॥११॥**

**अन्वयः**

यत् वा एतत् दैन्यं मृषा तिष्ठतु। किराताः मरुता वैरं न इच्छन्ति। हि सः शबराङ्गनानां केलिप्रसङ्गे स्मरग्लानिम् अपाकरोति।

**व्याख्या**

यद्वेति पक्षान्तरे एतद्दैन्यं मलयानिलस्य प्रियविप्रलम्भव्यथोद्वलकत्वात्तस्माद्भयेन मृगमारणप्रार्थनं मृषा मिथ्या निरर्थकमेवेत्यर्थः। तिष्ठत्वाऽऽस्ताम्। किराताः शबरा मरुता मलयवायुना सह वैरं शत्रुतां नेच्छन्ति नाऽऽकाङ्क्षन्ति। हि यस्मात् कारणात् 'हि हेतावधारणे' इत्यमरः। स दक्षिणानिलः शबराणां वनेचराणां 'भेदाः किरातशबरपुलिन्दम्लेच्छजातयः' इत्यमरः। अङ्गना ललनास्तासां केलिप्रसङ्गे सुरतक्रीडाकाले स्मरग्लानिं कामोद्वेगजन्यक्रीडोत्पन्नशारीरिकश्रमपाकरोति दुरीकरोति। श्रमापनयनेनोपकारित्वादयं दक्षिणानिलो शत्रुभावं न जनयतीति तस्य मृगविनाशाभ्यर्थना वृथैवेति भावः।

**भाषा**

अथवा किरातराज से वायु के वाहन रूप मृग को मारने की अभ्यर्थना व्यर्थ है। किरात लोग दक्षिणानिल से वैर करना नहीं चाहते। क्योंकि वह दक्षिणानिल किरातिनियों की सुरत क्रीडा में सुरत जनित श्रम का अपहरण करता रहता है। अर्थात् दक्षिणानिल उपकारी होने से उस से किरातराज का शत्रुभाव हो ही नहीं सकता।

**दुराग्रहश्चन्दनमारुतस्य सदा यदन्यर्तुपराङ्मुखोऽयम्।**
**अनेन चैत्रः सुतरामसह्यश्चन्द्रोदयेनेव शरत्प्रदोषः ॥१२॥**

**अन्वयः**

चन्दनमारुतस्य दुराग्रहः यत् अयं सदा अन्यर्तुपराङ्मुखः। अनेन चैत्रः चन्द्रोदयेन शरत्प्रदोषः इव सुतराम् असह्यः।

### व्याख्या

चन्दनमारुतस्य चन्दनसम्पर्केण समागतस्य दक्षिणानिलस्य दुराग्रहो दुष्टाभि-निवेश कुप्रवृत्तिरित्यर्थ । यदय मारुतोऽन्येषु वसन्तातिरिक्तेषु ऋतुषु पराङमुखो न प्रवहति । अनेन मलयानिलेन हेतुना चैत्रो वसन्तमासश्चन्द्रोदयेनेन्दुप्रकाशेन शरत्प्रदोष शरत्कालिकरजनीमुखमिव 'प्रदोषो रजनीमुखम्' इत्यमर । सुतरा-मत्यन्तमसह्य सोढुमशक्य । विरहिणीना दक्षिणानिलवच्छीतल' शरत्कालिक-श्चन्द्रोदयोऽपि नितरा सन्तापजनको भवतीति भाव ।

### भाषा

यह तो दक्षिणानिल का दूराग्रह ही है कि वह वसन्त ऋतु को छोड कर अन्य ऋतुओ मे बहता ही नही । इसके कारण से वसन्तमास चैत्र, चन्द्रमा का उदय होने के कारण से शरत् ऋतु की शाम के समान ही असह्य हो जाता है । अर्थात् विरहिणियो को वसन्त ऋतु तथा शरत् काल का चन्द्र दोनो ही सन्ताप जनक होते है ।

**वियोगिनीनां किमु पापमेतन्मेधाथवा दक्षिणमारुतस्य ।**
**कदापि दिङ्मोहवशाद्यदेष न चन्दनाद्रेः परतः प्रयाति ॥१३॥**

### अन्वयः

एतन् वियोगिनीनां पापं किमु, अथवा दक्षिणमारुतस्य मेधा यत् एषः दिङ्मोहवशात् कदापि चन्दानाद्रेः परतः न प्रयाति ।

### व्याख्या

एतत्प्रत्यक्षदृश्यमानोपद्रव वियोगिनीना विरहिणीना पाप दुष्कृतपरिणाम. किमु किमथवा यद्वा दक्षिणमारुतस्य दक्षिणानिलस्य मेधा धारणावती बुद्धिः 'धीर्धारणवती मेधा' इत्यमर । यद्यस्मात्कारणादेष मलयवायुर्दिङमोहवशा-द्दिग्भ्रमकारणेन कदापि कस्मिन्नपि काले चन्द्रनान्द्रेर्मलयपर्वतात्परतोऽन्यस्मा-त्प्रदेशान्न प्रयाति न गच्छति ।

### भाषा

यह जो विरहिणियो का प्रत्यक्ष कष्ट है वह वियोगिनियो के पापो का परिणाम है या दक्षिणानिल की मेधा का फल है ? क्योकि मलयवायु दिग्भ्रम होने से कभी भी मलयपर्वत को छोड कर अन्य स्थानो से नही बहता है ।

**इति भ्रमत्सौरभमांसलेन निमीलितानां मलयानिलेन ।**
**अभूच्चिरं भूमिगृहस्थितानां प्रलापमाला प्रियकाङ्क्षिणीनाम् ॥१४॥**

**अन्वयः**

भ्रमत्सौरभमांसलेन मलयानिलेन निमीलिताना भूमिगृहस्थिताना प्रियकाङ्क्षिणीनाम् इति प्रलापमाला चिरम् अभूत् ।

**व्याख्या**

भ्रमन्नितस्ततः प्रसरन् यस्सौरभस्सुगन्धस्तेन मासलो बहुलस्तेन प्रसरत्सुगन्ध-बहुलेन मलयानिलेन दक्षिणपवनेन निमीलिताना व्यथिताना भूमौ पृथिव्यामध-स्तात् गृहाणि सदनानि, ग्रीष्मातपनिवारणाय भूम्यभ्यन्तरे निर्मितानि शीतभव-नानि तेषु स्थिता विद्यमानास्तासा प्रियाणा प्रेमास्पदजनाना पतीनामित्यर्थ । काङ्क्षिण्योऽभिलाषिण्यस्तासा ललनाना वियोगिनीनामित्यर्थ । इति पूर्वोक्त-प्रकारा प्रलापमाला निरर्थकवाक्यकदम्ब 'विप्रलापो विरुद्धोक्ति प्रलापोऽनर्थक वच' इत्यमर । चिर बहुकालपर्यन्तमभूज्जाता ।

**भाषा**

चारो ओर फैलने वाली सुगन्ध से भरे दक्षिण वायु से पीडित, तल घर मे (तहखाने मे) रहने वाली, अपने प्रिय की अभिलाषा रखने वाली वियोगिनी स्त्रियो के पूर्वोक्त प्रकार के निरर्थक वाक्यसमूह चिरकाल तक चलते रहे ।

**इति षट्श्लोकात्मकं कुलकम् ।**

**कन्दर्पदेवस्य विमानसृष्टिः प्रासादमाला रसपार्थिवस्य ।**
**चैत्रस्य सर्वर्तुविशेषचिन्हं दोलाविलासः सुदृशां रराज ॥१५॥**

**अन्वयः**

कन्दर्पदेवस्य विमानसृष्टिः, रसपार्थिवस्य प्रासादमाला चैत्रस्य सर्वर्तु-विशेषचिन्हं सुदृशा दोलाविलासः, रराज ।

**व्याख्या**

कन्दर्पदेवस्य कामदेवस्य 'कन्दर्पो दर्पकोऽनङ्ग काम पञ्चशर स्मर' इत्यमर । विमानसृष्टिर्व्योमयानरचना, 'व्योमयान विमानोऽस्त्री' इत्यमरः ।

रस शृङ्गाररस एव पार्थिवो राजा तस्य प्रासादाना हर्म्याणा माला पङ्क्ति. । अत्युच्चत्वेन निरतिशयरमणीयत्वेन च दोलाविलासे कामसम्बन्धिविमानसृष्टे रसनृपसम्बन्धिप्रासादमालायाश्चाऽऽरोप । चैत्रस्य चैत्रमासस्य सर्वं सकलमृतु-विशेषस्य वसन्तस्य चिन्ह लक्षण यद्वा चैत्रस्य वसन्तस्य सर्वर्तुभ्यो विशेष विशिष्ट चिह्न लक्षण 'कलङ्काङ्कौ लाच्छनञ्च चिन्ह लक्ष्म च लक्षणम्' इत्यमर । यतो वसन्त एव दोलारोहणक्रीडा विशेषतो भवतीति भाव । सुष्ठु दृशौ नयने यासा तास्तासा सुन्दरनयनाङ्गनाना दोलासु प्रेङ्खासु विलास. क्रीडा रराज शुशुभे । विशेषविनोदकारित्वेन चैत्रमासभवस्य वसन्तर्तुसकलचिह्नस्याऽभेदारोपो दोला-विलासेऽतोऽत्र मालारूपकम् ।

## भाषा

कामदेव की विमान रचना, शृङ्गार रस रूपी राजा के महलो की कतार, चैत्र मास का सब ऋतुओ मे श्रेष्ठ वसन्तऋतु का चिह्न अथवा वसन्त का अन्य सब ऋतुओ से विशिष्ट चिह्न, सुनयनी स्त्रियो की झूला झूलने की क्रीडा शोभित होने लगी । अर्थात् चैत्र मास या वसन्त ऋतु के आते ही सुन्दर नेत्रवाली कामिनियो मे झूला झूलने का उमङ्ग, कामदेव की प्रेरणा से काम सम्बन्धि दूर २ की उनकी मानसिक उडाने तथा शृङ्गार रस का साम्राज्य चारोतरफ छा गया ।

**दोलाधिरूढस्य वधूजनस्य नितम्बभारेण गतागतेषु ।**
**त्रुटिर्यदालम्बगुणेषु नाभूत् सा भाग्यशक्तिः कुसुमायुधस्य ॥१६॥**

## अन्वयः

यत् दोलाधिरूढस्य वधूजनस्य नितम्बभारेण गतागतेषु आलम्बगुणेषु त्रुटिः न अभूत् सा कुसुमायुधस्य भाग्यशक्तिः ।

## व्याख्या

यदित्यनेन वाक्यार्थपरामर्श । दोला प्रेङ्खा 'दोला प्रेङ्खादिका स्त्रियाम्' इत्यमर । 'हिंडोला' इति भाषायाम् । अधिरूढस्समासीनस्तस्य प्रेङ्खास्थितस्य वधूजनस्य कामिनीजनस्य नितम्ब. श्रोणिस्तस्य भारो गुरुत्व तेन गतमागत-मितस्तत सचलन येषा ते तेष्वालम्बगुणेषु दोलावलम्बनरज्जुषु त्रुटिर्भङ्गो नाऽभून्न जात सा कुसुमायुधस्य कामस्य भाग्यशक्तिरदृष्टमहत्वम् । ललनानि-

तम्बानामत्यन्तगुरुत्वाद्दोलावलम्बनरज्जूना भङ्गस्तु निश्चितप्राय एवाऽऽसीत् । परन्तु स न जात इत्यत्र कामस्याऽदृष्टमहत्वमेव कारणमिति भाव । काव्यलिङ्गमलङ्कार ।

### भाषा

चूँकि हिडोले पर झूलने वाली कामिनियो के नितम्बों के बोझे से झोको मे इधर उधर जाने वाली झूले की रस्सियाँ न टूँटी इसमे कामदेव की भाग्य सम्पत्ति ही कारण है। अर्थात् उन स्त्रियो के नितम्ब बहुत भारी थे और कामदेव की पूर्ण कृपापात्र थी। अर्थात् पूर्णतया कामासक्त थी।

**जनेषु दोलातरलाः पुरन्ध्रीः संभूय भूयःसु विलोकयत्सु।**
**लक्ष्यस्य विस्तीर्णतया मनोभूरवन्ध्यपातैरिषुभिर्ववर्ष ॥१७॥**

### अन्वयः

दोलातरलाः पुरन्ध्रीः भूयःसु जनेषु संभूय विलोकयत्सु (सत्सु) मनोभूः लक्ष्यस्य विस्तीर्णतया अवन्ध्यपातैः इषुभिः ववर्ष।

### व्याख्या

दोलासु प्रेङ्खासु तरलाश्चञ्चला पुरन्ध्रीर्ललना (कर्म) 'पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता' इत्यमर । भूय.सु बहुलेषु जनेषु कामिजनेषु सभूयैकत्रीभूय विलोकयत्सु पश्यत्सु सत्सु मनसि भवतीति मनोभू कामो लक्ष्यस्य शरपातविषयस्य विस्तीर्णतया विशालदेशव्यापित्वेनाऽवन्ध्योऽनिष्फल पातो लक्ष्ये वेधो येषा ते तैरिषुभि स्वपुष्पबाणैर्ववर्ष वृष्टवान् । तत्रैकत्रीभूता कामिजनास्ता दोलास्थिता कामिनीर्वीक्ष्य कामार्ता जाता इति भाव ।

### भाषा

हिडोले पर झूलने वाली कामिनियो को कामी लोगों के इकठ्ठा होकर देखते रहने पर कामदेव ने निशाने के स्थूल अर्थात् बडे होने के कारण अपने अमोघ बाणो की वर्षा की। अर्थात् उन झूला झूलने वाली स्त्रियो को देखने के लिये इकठ्ठा भए हुए सभी कामी जन कामासक्त हो गए।

**दोलाविनोदेन विलासवत्यः सुदूरमारुह्य निवर्तमानाः।**
**अर्धं नभःप्राङ्गणसङ्गिनीनां विलासमापुस्त्रिदशाङ्गनानाम् ॥१८॥**

**अन्वयः**

विलासवत्यः दोलाविनोदेन सुदूरम् आरुह्य निवर्तमानाः (सत्यः) नभःप्राङ्गणसङ्गिनीना त्रिदशाङ्गनानाम् अर्धं विलासम् आपुः ।

**व्याख्या**

विलासवत्योऽङ्गना दोलाया प्रेङ्खाया विनोदेन क्रीडया सुदूरमत्यूर्ध्वदेशमारुह्य गत्वा निवर्तमाना पुनरधोदेश प्रति निवृत्ता सत्यो नभ एवाऽऽकाशमेव प्राङ्गण विस्तृतस्थान तस्मिन्सङ्गिन्य प्राप्तास्तासा त्रिदशाङ्गनाना देवाङ्गनानामाकाशे संचरणशीलानामप्सरसा वाऽर्धं विलास विभ्रम सारूप्यमित्यर्थ । आपु प्राप्तवत्य । अङ्गनाना रूपलावण्यातिशयाद्देवाङ्गनासादृश्यम् । दोलाया आकाशे चाऽल्पकाल-वृत्तित्वादर्धमेवाऽप्सरसा विलास शोभा वा प्रापुरित्यर्थ । अत्र निदर्शनालङ्कार ।

**भाषा**

अङ्गनाओ के हिडोले की क्रीडा मे बहुत ऊँचे जाकर फिर नीचे लौट आने से, वे, आकाशरूपी आगन मे विहार करने वाली अप्सराओ के आधे सारूप्य को प्राप्त हुई । अर्थात् कामिनियाँ झूला झूलते हुए आधे समय तक खूब ऊँचे और आधे समय तक नीचे रहने से ऊँचे रहने के आधे समय के लिये साक्षात् आकाश मे विहार करने वाली अप्सराओ की शोभा प्राप्त करती थी ।

**विलासदोलाफलके नितम्ब—विस्ताररुद्धे परितस्तरुण्याः ।**
**लब्धः परं कुञ्चितकार्मुकेण तत्रावकाशः कुसुमायुधेन ॥१९॥**

**अन्वयः**

विलासदोलाफलके परितः तरुण्याः नितम्बविस्ताररुद्धे (सति) तत्र परं कुञ्चितकार्मुकेण कुसुमायुधेन अवकाशः लब्धः ।

**व्याख्या**

विलासस्य क्रीडाया दोलाफलक दारुमयान्दोलनफलक 'तख्ता' इति भाषायाम् । तस्मिन् परित सर्वतस्तरुण्या युवतीजनस्य नितम्बस्य कटिपश्चा-द्भागस्य 'पश्चान्नितम्ब स्त्रीकट्या इत्यमर । विस्तारेण विशालरूपेण रुद्धे समाच्छादिते सति तत्र दोलाफलके पर केवल कुञ्चित सकोचमाप्तं कार्मुकं धनुर्यस्य स तेन कुसुमायुधेन कामेनाऽवकाश स्थान लब्ध प्राप्त । दोलावि-

लासो युवतीनामतीव कामोद्दीपक इति भाव । यथा स्वल्पावकाशेऽपि सकुचित-स्थाने विदग्धजन स्वशरीर तत्र प्रविश्य सुखानुभूति करोतीत्यप्रकृतव्यवहारस्य कुसुमायुधव्यवहारे समारोपात्समासोक्तिरलङ्कार ।

### भाषा

क्रीडा के झूले का तख्ता युवतियो के नितम्बो से चारो तरफ से छेक लिया जाने पर अर्थात् वहाँ बिलकुल जमीन न रहने पर भी, वहाँ केवल अपने वनुप को सिकोड लेने वाले कामदेव ने ही स्थान प्राप्त किया । अर्थात् झूला झूलने से युवतियाँ कामासक्त हो गई ।

**सौन्दर्यमिन्दीवरलोचनानां दोलासु लोलासु यदुल्ललास ।**
**यदि [१]प्रसादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥२०॥**

### अन्वय.

लोलासु दोलासु इन्दीवरलोचनाना यत् सौन्दर्यम् उल्ललास, यदि मनोभूः प्रसादात् कवित्व लभते (तर्हि सः) तत् वर्णयितु जानाति ।

### व्याख्या

लोलासु चञ्चलासु दोलासु प्रेङ्खास्विन्दीवराणीव नीलकमलानीव लोचनानि नेत्राणि यासा तास्तासामङ्गनाना यत् सौन्दर्यं रामणीयकमुल्ललास प्रादुर्बभूव, यदि मनोभू काम प्रसादात्सरस्वत्यनुग्रहात् कवित्व काव्योत्पादन-प्रागल्भ्य लभते प्राप्नोति तर्हि स कामस्तत्सौन्दर्यं वर्णयितु विस्तारेण कथयितु जानाति पटुस्स्यादित्यर्थ [२] । समर्थं कविरेव स्वकृतेर्गुप्तरहस्य ज्ञातु समुद्घाट-यितुञ्च क्षमो न त्वन्य । अत कामविलासरहस्य कामस्य कवित्वे एव याथार्थ्येन वर्णित स्यान्नत्वन्यस्येति भाव ।

---

[१] 'प्रमादात्' इति पाठस्तु लेखकानवधानतैव । चरितचन्द्रिका टिप्पणी-कारस्य 'प्रमादादनवधानता परित्यज्येति भाव ।" इत्यपि चिन्त्यम् ।

[२] त्रिपुरारहस्यमाहात्म्ये-लक्ष्म्यास्त्रिपुराप्रसादेन कामस्य पुत्रत्वेन प्राप्ति । स कविरासीदिति तस्य "त्रिपुरानवकम्" रचनया सिद्धम् । तन्नवकानुष्ठानेन पण्डिता कवित्व प्राप्नुवन्तीति प्रसिद्धि ।

### भाषा

चञ्चल झूलो पर नीलकमलनयनी ललनाओ का जो सौन्दर्य उमड पडा उसका यथार्थ वर्णन, यदि कामदेव ही सरस्वती के प्रसाद से कविता रचना की शक्ति प्राप्त करें तो ही हो सकता है। अर्थात् कामदेव ही यदि कवि हो तो वे इस काम सम्बन्धित ललनाओ के सौन्दर्य का सफलता से वर्णन कर सकते है।

**दोलासु यद्दोलनमङ्गनानां यन्(या)मल्लिका यच्(श्च)[1]च लवङ्गवायुः।**
**सा विश्वसंमोहनदीक्षितस्य मुख्याङ्गसम्पत्कुसुमायुधस्य ॥२१॥**

### अन्वयः

**अङ्गनानां दोलासु यत् दोलनं, यत् लवङ्गवायुः यत् च मल्लिका, सा विश्वसंमोहनदीक्षितस्य कुसुमायुधस्य मुख्याङ्गसम्पत् (अस्ति।)**

### व्याख्या

अङ्गनाना सुन्दरीणा दोलासु प्रेङ्खासु यद्दोलनमधस्तादुपरि चक्रमण यच्चात्र यदिति क्रियाविशेषण यथेत्यर्थ। लवङ्गवायुर्देवकुसुमसम्पर्कजन्य-सुगन्धवाही पवन 'लवङ्ग देवकुसुमम्' इत्यमर। यदत्राऽपि पूर्ववत्। मल्लिका पुष्पविशेष 'बेला' इति भाषायाम्। सा विश्वस्य सम्पूर्णमसारप्राणिनां समोहन कार्मणकर्म वशीकरणमित्यर्थ। तस्मिन् दीक्षितस्य सन्नद्धस्य कुसुमा-युधस्य कामस्य मुख्याङ्गाना प्रधानसाधनाना सम्पत्सम्पत्तिरस्ति। आदोलन-मल्लिकापुष्प-लवङ्गवायव एव कामस्याऽखिललोकवशीकरणे प्रधानसाधना-नीत्यर्थ।

### भाषा

ललनाओ का हिडोलो पर झूलना, बेले के फूल और देवपुष्प, ये सब विश्व का वशीकरण करने मे तत्पर कामदेव की प्रधान साधन सम्पत्ति है।

**प्रसार्य पादौ विहितस्थितीनां दोलासु लोलांशुकपल्लवानाम्।**
**मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सुदृशां युवानः ॥२२॥**

---

[1] अत्र यत् यत् इत्यस्य स्थाने या मल्लिका, यश्च लवङ्गवायु, इत्येव पाठ समीचीन प्रतिभाति, पर पाठन्तराऽलाभात्तथैव मुद्रापितमिति विचिन्तनीयम्।

**अन्वयः**

युवानः दोलासु पादौ प्रसार्य विहितस्थितीना लोलांशुकपल्लवाना सुदृशा यत् मनोरथानाम् अपि न गम्य तत् द्रष्टुम् आपुः ।

**व्याख्या**

युवानस्तरुणजना दोलासु प्रेङ्खासु पादौ चरणौ प्रसार्य विस्तार्य विहिता कृता स्थिति समुपवेशन याभिस्तास्तासामासीनाना लोलाश्चञ्चला स्वनियत-स्थानात्परिच्युता अंशुका पल्लवा इवेत्यंशुकपल्लवा मसृणाम्बराणि यासा तास्तासा सुदृशा सुनयनानामङ्गनाना यत् गुह्य स्थान गोपनीयाङ्ग जघनादि मनोरथानामपि कल्पनानामपि न गम्य न प्राप्य तद्द्रष्टुमवलोकयितुमापु प्राप्तवन्त । दोलनजनितवायुवेगेन तासा मसृणाम्बरेषु स्थानभ्रष्टेषु सत्सु युवानस्तासा कल्पनायामप्यप्राप्य जघनादिगोपनीयाङ्ग ददृशुरिति भाव ।

**भाषा**

युवक लोगो ने, पाव लम्बा कर झूलो पर बैठी हुई, हवा के झोके मे स्थानच्युत मुलायम साडी वाली सुनयनी अङ्गनाओ के, कल्पना मे भी न आने वाले जघनादि गोपनीय अङ्गो को देखा ।

**उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बजाड्याः ।**
**दोलाविलासेन जितश्रमत्वात् प्रकर्षमापुः पुरुषायितेषु ॥२३॥**

**अन्वयः**

दूरम् उन्नम्य मुहुः आनमन्त्यः श्लथीभूतनितम्बजाड्याः कान्ताः दोला-विलासेन जितश्रमत्वात् पुरुषायितेषु प्रकर्षम् आपुः ।

**व्याख्या**

दूर विप्रकृष्टदेशमुन्नम्योर्ध्वं समुत्थाय मुहुर्वारम्वारमानमन्त्योऽधोदेश प्राप्नु-वन्त्य उत्थाय पुनरुपविशन्त्य श्लथीभूत शिथिलीभूत निरस्तमित्यर्थ । नितम्बस्य कटिपश्चाद्भागस्य जाड्य क्रियाशीलत्वशून्यत्व यासा ता कान्ता अङ्गना दोलाया प्रेङ्खाया विलासेन सचालनक्रीडया जितोवशीकृत श्रम कार्यकरणक्षमत्व याभिस्तास्तासा भावो जितश्रमत्व तस्मात् समुपार्जितकठिनकार्यसम्पादन-शक्तित्वात् पुरुषायितेषु पुरुषकर्तृकव्यापारेषु विपरीतसुरतेषु प्रकर्षमुत्कृष्टत्वमापु प्राप्तवत्य ।

### भाषा

दूर तक ऊपर जाकर फिर नीचे आने वाली अर्थात् झूला झुलाने मे उठकर बैठने वाली, अपने नितम्बो के शैथिल्य को त्याग कर उनसे काम लेने वाली ललनाएँ हिंडोली के चलाने मे जरा भी थकावट का अनुभव न करने से पुरुषो के द्वारा किये जाने वाले काम मे अर्थात् विपरीत रति में उत्कृष्टता को प्राप्त हुईं। अर्थात् बिना थकावट झूला चलाने में अपनी कमर को आगे पीछे करने वाली ललनाओ ने विपरीतरति मे अपनी समर्थता का परिचय दिया।

**कुचस्थलैर्निर्दलितो वधूनां संजीवितः श्वाससमीरणेन।**
**क्लेशातिरेकान्मलयानिलोऽभूद् भृत्येषु मान्यः कुसुमायुधस्य ॥२४॥**

### अन्वयः

वधूनां कुचस्थलैः निर्दलितः मलयानिलः श्वाससमीरणेन संजीवितः (सन्) क्लेशातिरेकात् कुसुमायुधस्य भृत्येषु मान्यः अभूत्।

### व्याख्या

वधूना स्त्रीणा कुचस्थलै कठिनस्तनमण्डलैर्विदलित आघातात्सचूर्णितो मलयानिलो दक्षिणसमीरणो वधूनामेव श्वाससमीरणेन वियोगजन्यदीर्घश्वास-वायुना सजीवितस्सन् समासादितप्राण सन् प्रवृद्धस्सन्नित्यर्थ। क्लेशस्य कष्टस्याऽतिरेको बाहुल्य तस्मात् कष्टप्राचुर्यात् कुसुमायुधस्य कामस्य भृत्येषु कर्मकरेषु सहायकेष्वित्यर्थ। मान्य प्रतिष्ठितोऽभूज्जात। कामस्य दक्षिणानिलोऽतीव प्रिय सहायकत्वादिति भाव। अत्र समीरणे सेवकवृत्तान्तसमारोपात् समासोक्तिरलङ्कार।

### भाषा

स्त्रियों के कठिन कुचस्थलो मे टकराकर गत प्राण होते हुए और स्त्रियो के ही वियोगजन्य उच्छ्वासो से पुन जीवित मलयानिल, अधिक कष्ट भोगने के कारण कामदेव के भृत्यों या सहायको मे मान्य हो गया। अर्थात् मलयानिल कामदेव का प्रधान सहायक है।

**यत्पूरयामास विलासदोलाः पुरन्ध्रिभिः सिञ्जितनूपुराभिः।**
**तेनोद्वसां मन्मथराजधानीं मन्ये वसन्तोमकरोद्वसन्तः ॥२५॥**

**अन्वयः**

वसन्तः सिञ्जितनूपुराभिः पुरन्ध्रिभिः विलासदोलाः यत् पूरयामास तेन उद्वसा मन्मथराजधानीं वसन्तीम् अकरोत्। (इत्यहं) मन्ये।

**व्याख्या**

वसन्तो वसन्तर्तु, सिञ्जितानि शब्दायमानानि नूपुराणि मञ्जीराणि 'मञ्जीरो नूपुरो स्त्रियाम्' इत्यमर। यासा तास्ताभि पुरन्ध्रिभि स्त्रीभिर्विलासदोला क्रीडाप्रेङ्खा यत् पूरयामास परिपूरितवान्, तेन कारणेन उद्वसा उद्गता वसन्तो यस्या सा उद्वसा ता जनशून्यामित्यर्थ। मन्मथस्य कामस्य राजधानी प्रधान-नगरी ता वसन्ती जनबहुलामकरोत् कृतवान्। वसन्ते कामिनीकर्तृकविलास-दोलाकर्मकाक्रमणेन कामराजधानीरूपविलासदोलाया कामिनीजनाध्युषितत्व सूचितम्। इत्यह मन्ये तर्कयामि। उत्प्रेक्षालङ्कार।

**भाषा**

चूँकि वसन्त ऋतु ने शब्द करने वाले पैजेब पहने हुई अङ्गनाओ से, आनन्द देने वाले हिडोलो को भर दिया। इससे मै समझता हूँ कि वसन्त ऋतु ने कामदेव फी उजडी राजवानी को बसा दिया।

**चुचुम्ब वक्त्राणि चकर्ष वस्त्रं चिरं विशश्राम नितम्बबिम्बे।**
**दोलाविलासे गुरुरङ्गनानामनङ्कुशः केरलमारुतोऽभूत् ॥२६॥**

**अन्वयः**

केरलमारुतः अङ्गनाना वक्त्राणि चुचुम्ब, वस्त्र चकर्ष, नितम्बबिम्बे चिर विशश्राम। (अतः) दोलाविलासे (अङ्गनानाम्) अनङ्कुशः गुरुः अभूत्।

**व्याख्या**

केरलमारुतो दक्षिणदिग्गतकेरलदेशपवनो दक्षिणानिल इत्यर्थ। अङ्गनाना स्त्रीणा वक्त्राणि मुखानि चुचुम्ब पस्पर्श। वस्त्रमम्बर चकर्ष हठाज्जग्राह। नितम्बबिम्बे पश्चात्कटिभागे चिर बहुकाल विशश्राम विश्रान्ति लेभे। अतोऽङ्ग-नाना दोलाविलासे प्रेङ्खाक्रीडायामनङ्कुश स्वच्छन्दो गुरुरुपदेष्टा आचार्य इत्यर्थ। अभूत् सजात। गुरुर्यथा स्वशिष्येभ्य शिक्षा ददाति तथैव दक्षिणपवनोऽङ्गनाभ्यो मुखचम्बनादिकार्यसाहाय्येन दोलाविलाससम्बन्धिनी शिक्षा ददाविति भाव।

**भाषा**

दक्षिण दिशा के केरल देश के वायु ने अर्थात् दक्षिणानिल ने कामिनियो के मुखो को चूमा, साडी को खीचा, कटि पश्चात् भाग मे चिर काल तक विश्रान्ति ली। इसलिये अङ्गनाओ का हिडोले की क्रीडा का वह आचार्य हो गया। अर्थात् हिडोले की क्रीडा मे क्या २ किया जाता है (चुम्बन करना कपडा हटाना और निस्तम्बो पर हाथ फेरना) इसका उपदेश दिया।

**गीतेषु याताः किमु शिष्यभावं वामभ्रुवां विभ्रमदोलिनीनाम्।**
**पुंस्कोकिलाः काननचारिणो यच्चातुर्यमापुः कलपञ्चमस्य ॥२७॥**

**अन्वयः**

**काननचारिणः पुंस्कोकिलाः गीतेषु विभ्रमदोलिनीना वामभ्रुवा शिष्यत्व याताः किमु, यत् (ते) कलपञ्चमस्य चातुर्यम् आपुः।**

**व्याख्या**

**कानने वने 'अटव्यरण्य विपिन गहन कानन वनम' इत्यमर। चरन्ति विहरन्तीति ते वनगता पुस्कोकिला पिका 'वनप्रिय परभृत कोकिल पिक इत्यपि' इत्यमर। गीतेषु गानकलासु विभ्रमेण विलासेन दोलायन्ते दोलासु विहरन्तीति विभ्रमदोलिन्यस्तासा विलासदोलासु विहरन्तीना वामभ्रुवा चञ्चल-भ्रुकुटीना कान्ताना शिष्यत्व छात्रभाव याता प्राप्ता किमु। यद्यस्मात्कारणात्ते पिका कलो मधुर पञ्चम पञ्चमस्वर इति तस्य मधुरपञ्चमस्वरस्य चातुर्यं नपुण्यमापु प्राप्ता। वामभ्रुवा शिष्यभाव विना पुस्कोकिलाना पञ्चमस्वरस्यै-तादृश नैपुण्य सर्वथैवाऽसभवीति भाव। उत्प्रेक्षालङ्कार।**

**भाषा**

जगलो मे विहार करने वाले पिक, क्या गान कला मे विलास पूर्वक झूला झूलने वाली व टेढी भौवो वाली ललनाओ के शिष्य तो नही हो गए, क्यो कि उन्होने मधुर पञ्चम स्वर मे बोलने की चतुरता प्राप्त करली थी। अर्थात् विना गुरु के विद्या कहाँ ? इससे उन झूला झूलने वाली नारियो से कोकिलो ने पञ्चमस्वर मे बोलना सीखा होगा।

**सङ्गादजस्रं वनदेवतानां लीलावनान्तस्थितयः शकुन्ताः ।**
**आरुह्य दोलासु विलासिनीनां ताभिः सह भ्रेमुरसंभ्रमेण ॥२८॥**

### अन्वयः

लीलावनान्तस्थितयः शकुन्ताः वनदेवतानाम् अजस्र सङ्गात् विलासिनीनां दोलासु आरुह्य ताभिः सह असंभ्रमेण भ्रेमुः ।

### व्याख्या

लीलावनस्य क्रीडोद्यानस्याऽन्ते मध्ये स्थितिर्निवासो येषा ते क्रीडोद्यानमध्यवासिन शकुन्ता पक्षिण 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा' इत्यमर । वनदेवतानामरण्याधिष्ठातृदेवतानामजस्र निरन्तर 'नित्यानवरताजस्रमप्यथातिशयो भर' इत्यमर । सङ्गात् सहवासाद्विलासिनीना कामिनीना दोलासु प्रेङ्खास्वारुह्य स्थित्वा ताभिर्दोलिनीभिस्सहाऽसभ्रमेणाऽव्याकुल यथास्यात्तथा भ्रेमुर्गतागत चक्रु । काव्यलिङ्गमलङ्कार ।

### भाषा

क्रीडोद्यान मे रहने वाले पक्षी, वनदेवताओ के निरन्तर साथ रहने से झूला झूलने वाली रूपवती स्त्रियो के झूलो पर बैठ कर उनके साथ निडर होकर झूला झूलते थे । अर्थात् वे स्त्रिया वनदेवताओ के ऐसी रूपवती थी ।

**हस्तद्वयीगाढगृहीतलोल—दोलागुणानां जघने वधूनाम् ।**
**[१]असंवृते स्रस्तदुकूलबन्धे किमप्यभूदुच्छ्वसितो मनोभूः ॥२९॥**

### अन्वयः

हस्तद्वयीगाढगृहीतलोलदोलागुणानां वधूनां स्रस्तदुकूलबन्धे जघने असंवृते (सति) मनोभूः किमपि उच्छ्वसितः अभूत् ।

### व्याख्या

हस्तयो. करयोर्द्वयीति हस्तद्वयी तया गाढ दृढ गृहीता धृता लोलाश्चञ्चला दोलागुणा दोलारज्जवो याभिस्तास्तासा वधूना नारीणा स्रस्त' स्थानाच्च्यु-

---

[१] "असवृतस्रस्तदुकूलबन्धे" इति पाठस्तु चिन्त्य ।

तो दूकूलबन्धो नीविबन्धो यस्मात्तस्मिन् जघने कटिपुरोभागेऽसवृतेऽना-च्छादिते प्रकटीभूते सति मनोभू काम किमप्यनिर्वचनीय यथास्यात्तथोच्छ्वसित उल्लासयुक्त सानन्द इत्यर्थ । अभूज्जात । नारीणा गुह्याङ्गदर्शनेन यूनाम-निर्वचनीयाऽऽनन्दप्राप्तिरभूदिति भाव ।

### भाषा

झूला झूलते समय दोनो हाथो से दृढतापूर्वक हिंडोले की चञ्चल रस्सियो को पकड रखने वाली अङ्गनाओ के, नीवी की गाठ खुल जाने से, और धोती सरक पडने से जघनस्थल के दिखाई पडने पर कामदेव अनिर्वचनीय उल्लास को प्राप्त हुआ । अर्थात् स्त्रियो के गोपनीय अङ्गो को देखने से युवको को एक विशिष्ट आनन्द मिलता है ।

**त्वरोपयातप्रियबाहुपाश-रुद्धेषु कण्ठेषु वियोगिनीनाम् ।**
**वृथासमाहूतकृतान्तपाशः स्मितं लतानां मधुराततान ॥३०॥**

### अन्वयः

वियोगिनीना कण्ठेषु त्वरोपयातप्रियबाहुपाशरुद्धेषु (सत्सु) वृथास-माहूतकृतान्तपाशः मधुः लताना स्मितम् आततान ।

### व्याख्या

वियोगिनीना विरहिणीना कण्ठेषु ग्रीवासु त्वरया शीघ्रतयोपयातास्सप्राप्ताः प्रिया कान्तास्तेषा बाहवो भुजा एव पाशा रज्जवस्तै रुद्धेषु सत्सु वृथैव मुधैव समाहूतस्सप्रापित कृतान्तस्य यमस्य पाशो येन स मधुर्वसन्तो चैत्रमासो वा लताना वीरुधा स्मितमीषद्धास्य विकासमित्यर्थ । आततान विस्तारयामास । वसन्तागमनेनोद्दीपितमदनाना विरहिणीना कामिनीता झटिति प्रियालिङ्गन-प्राप्त्या वसन्तजन्यमन्मथसतापे सत्यपि प्राणवियोगो न जात इति दृष्ट्वा स्त्रीत्व-साजात्यात् लता वसन्तमुपहसन्तीति भाव ।

### भाषा

वियोगिनी स्त्रियो के गलो के, शीघ्रता पूर्वक आए हुए उनके पतियो के बाहु पाश से उपरुद्ध हो जाने पर, यमराज के पाश को (उनके गलो मे बाध कर उनका प्राणान्त करने के लिये) व्यर्थ ही बुलाने वाले वसन्त ने लताओ को विकसित किया । अर्थात् वसन्तजनितसन्ताप से मरणासन्न स्त्रियो की,

उनके पतिओ द्वारा जल्दी से आकर आलिङ्गन किये जाने के कारण, वियोग से उनकी मृत्यु न हो सकने से, लताएँ वसन्त को हँसने लगी अर्थात् विकसित हो गई।

**निवारणं पल्लववीजनानां स्थितिर्निवातेषु गृहोदरेषु ।**
**मूर्च्छाप्रबन्धेषु वियोगिनीनामासीदपूर्वः परिहारमार्गः ॥३१॥**

### अन्वयः

वियोगिनीना मूच्च्छाप्रबन्धेषु पल्लववीजनाना निवारण निवातेषु गृहोदरेषु स्थितिः (इति) अपूर्वः परिहारमार्गः आसीत्।

### व्याख्या

वियोगिनीना पतिविरहिताना कामिनीना मूर्च्छाप्रबन्धेषु पतिविरहजन्य-दु खातिशयात्सञ्ज्ञाशून्यदशाया पल्लवै किसलयैर्वीजनानि वायुसञ्चालनानि तेषा शीतत्वात्किसलयेन वायुसचालनाना निवारण निषेध । नास्ति वातो वायुर्येषु ते निवातास्तेषु वायुरहितेषु गृहाणामुदराणि मध्यानि तेष् गृहमध्यस्थानेषु स्थिति-निवास इत्यपूर्वो विचित्र परिहारमार्गो मूच्च्छानिवारणस्योपचारविधिरासीत्। विरहावस्थाया शीतोपचारा अपि विशिष्टसन्तापकरा भवन्तीति भाव ।

### भाषा

पतिविरहजन्य अधिक दु ख से मूर्छित, विरहिणियो की मूर्छावस्था मे कोमल-पत्तो से ठण्डी हवा झलने का निषेध और वायुरहित गृहमध्य मे निवास इत्यादि मूर्च्छानिवारण के लिये अभूतपूर्व उपचार होते थे। अर्थात् विरहिणियो को विरहावस्था मे शीतोपचार अधिक सतापकारक होते है। इसीलिये मूर्छा निवृत्ति के लिये शीतोपचार का निषेध किया जाता था।

**लीलाशुकाः कोकिलकूजितानामतिप्रहर्षाद्विहितानुकाराः ।**
**गृहादधाव्यन्त[१] वियोगिनीभिर्गुणो हि काले गुणिनां गुणाय ॥३२॥**

### अन्वयः

अतिप्रहर्षात् कोकिलकूजितानां विहितानुकाराः लीलाशुकाः वियोगि-नीभिः गृहात् अधाव्यन्त, हि गुणिना गुणः काले गुणाय (भवति)।

---

[१] 'अवाह्यन्त' इति पाठ साधुतर ।

### व्याख्या

अतिप्रहर्षादानन्दातिशयात् कोकिलाना पिकाना कूजितानि ध्वनयस्तेषा विहित कृतोऽनुकारोऽनुकरण यैस्ते लीलाशुका क्रीडाशुका 'कीरशुकौ समौ' इत्यमर । वियोगिनीभिर्विरहिणीभिर्गृहात्स्वसदनादधाव्यन्त बहिर्निष्कास्यन्ते स्म । कोकिलकूजितस्य विरहे दु खप्रदायित्वेनाऽसह्यत्वात्तदनुकारिणा लीला-शुकाना गृहादपसारण ताभि कृतमिति भाव । हि यत गुणिना गुणवता गुण. स्वरमाधुर्यादिरूप काले समुचिते समय एव गुणाय प्रहर्षाय भवति नत्वन्यथेति शेष । कीराणा कोकिलशब्दानुकरण गुण परञ्च विरहावस्थाया स दोष एव जात इति भाव । अत्राऽर्थान्तरन्यासालङ्कार ।

### भाषा

अत्यन्त हर्ष से कोयल के शब्दो का अनुकरण करने वाले पालतू सुग्गे, वियोगिनियो द्वारा दौडा कर बाहर कर दिये गए । क्योकि गुणियो का गुण अवसर पर ही गुणाधायक होता है । अर्थात् सुग्गो का, कोयल की बोली बोलना यह एक गुण है किन्तु पतिविरहजन्य दु ख की अवस्था मे वह गुण अवगुण सा हो जाता है ।

**श्रुत्वेव वृत्तावसरं तुषारं बहिःस्थितानामलिनां निनादैः ।**
**द्विवर्षकन्यामुखकोमलाभं पङ्कोदरात्पङ्कजमाविरासीत् ॥३३॥**

### अन्वयः

द्विवर्षकन्यामुखकोमलाभ पङ्कजं, बहिः स्थितानाम् अलिनां निनादैः तुषार वृत्तावसरं श्रुत्वा इव पङ्कोदरात् आविरासीत् ।

### व्याख्या

द्वौ वर्षौ यस्या सा द्विवर्षा, द्विवर्षा चाऽसौ कन्या च द्विवर्षकन्या तस्या मुखस्येव कोमला सुकुमाराऽऽभा कान्तिर्यस्य तत् 'स्यु प्रभा रुग्रुचिस्त्विड्भाऽऽ-भाश्छविद्युतिदीप्तय·' इत्यमर । पङ्कजं कमल बहि स्थिताना बाह्यस्थान-वर्तिनामलीना भ्रमराणा निनादैर्झङ्कारैस्तुषार हिम 'तुषारस्तुहिनं हिमम्' इत्यमर । वृत्तो निर्गतोऽवसर कालो हेमन्तशिशिरर्तू यस्य स त श्रुत्वेवाऽऽ-कर्ण्येव पङ्कोदरात्सरस पङ्कमुदरे यस्येति विग्रहात्, पङ्कस्य कर्दमस्योदरं मध्य तस्माद्वा कर्दमान्तरादाविरासीत्प्रकटीबभूव । हिमसमये पङ्कजानि न समुत्पद्यन्ते भ्रमराश्च न गुञ्जन्ति तस्माद्भ्रमरशब्दश्रवणाद्धिमगमनमनुमाय वसन्तागम-नात्कोमल कमल प्रादुर्बभूवेति भाव । अत्रोत्प्रेक्षालङ्कार· ।

२८

## भाषा

दो वर्ष की कन्या के मुख के समान कोमल कान्ति वाला, कमल, बाहर रहने वाले भ्रमरो की गुञ्जार से मानो हेमन्त और शिशिर ऋतुओ के बीत जाने की सूचना पाकर तालाव से प्रकट हुआ। अर्थात् हेमन्त और शिशिर ऋतुओ मे कमल नही उत्पन्न होते ओर भ्रमर भी गुञ्जार नही करते।

**नवीनदन्तोद्गमसुन्दरेण वासन्तिकाकुड्मलनिर्गमेन।**
**उत्सङ्गसङ्गी विपिनस्थलीनां बालो वसन्तः किमपि व्यराजत् ॥३४॥**

## अन्वयः

विपिनस्थलीनाम् उत्सङ्गसङ्गी वसन्तः बालः नवीनदन्तोद्गमसुन्दरेण वासन्तिकाकुड्मलनिर्गमेन किमपि व्यराजत्।

## व्याख्या

विपिनस्थलीनामरण्यभूमीना 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमर। विपिनस्थल्या स्त्रीत्वेन जननीत्व व्यङ्ग्यम्। उत्सङ्गेऽङ्के मध्ये वा सङ्गत इत्युत्सङ्गसङ्गी 'उत्सङ्गचिह्नयोरङ्क' इत्यमर। अङ्कवर्ती वसन्तो बाल कुमारो नवीन प्रत्यग्रो दन्तोद्गमो दशनोत्पत्तिस्तद्वत्सुन्दरो मनोहरस्तेन वासन्तिका माधवीलता 'वासन्ती माधवीलता' इत्यमर। तस्या कुड्मलानि कलिकास्तासा निर्गम उत्पत्तिस्तेन किमप्यनिर्वचनीय यथा स्यात्तथा व्यराजत् शुशुभे। वसन्ते बालत्वारोपाद्वासन्तीकलिकासु दशनत्वारोपात्, विपिनस्थलीना धात्रीत्वारोपस्य व्यङ्ग्यत्वाच्च एकदेशविवर्तिरूपकम्।

## भाषा

जगल की भूमियो की गोद मे रहने वाला वसन्त रूपी बालक, नये दात निकलने के समान सुन्दर माधवीलता की कलियो के निकलने से एक अवर्णनीय शोभा को प्राप्त हुआ।

**सुगन्धिनिःश्वासमिवानुवेल-मुद्वेल्लता दक्षिणमारुतेन।**
**मुखं प्रसूनस्मितदन्तुरं तच्चुचुम्ब मुग्धस्य मधोर्वनश्रीः ॥३५॥**

**अन्वयः**

वनश्रीः अनुवेलं सुगन्धिनिःश्वासम् इव उद्वेल्लता दक्षिणमारुतेन मुग्धस्य मधोः तत् प्रसूनस्मितदन्तुरं मुखं चुचुम्ब ।

**व्याख्या**

वनश्रीर्वनलक्ष्मीर्वनशोभेत्यर्थ । अनुवेल प्रतिक्षण सुगन्धिनि श्वासमिव सुन्दरगन्धयुक्तमुखनि श्वासमिवोद्वेल्लता विस्तारयता दक्षिणमारुतेन मलयानिलेन मुग्धस्य बालस्य मधोर्वसन्तस्य तदनिर्वचनीय प्रसूनान्येव पुष्पाण्येव शुभ्रत्वेन स्मितानीषद्धास्यानि तैर्दन्तुर दन्तुरित मनोहरमितिभाव । मुखमाननमग्रभागञ्च चुचुम्ब परिचुम्बितवती। वसन्ततौ पुष्पोद्गमेन वनशोभाऽऽविरासीदिति भाव । समासोक्तिरलङ्कार ।

**भाषा**

वनकी शोभा ने सुगन्धित सास के समान सुगन्धयुक्त दक्षिणानिल के बहते रहने से बालरूप बसन्त ऋतु के, उस अवर्णनीय श्वेत फूल रूपी मुस्कराहट से युक्त मनोहर मुख को या अग्रभाग को चूमा। अर्थात् वसन्तऋतु मे फूलो से बन की शोभा प्रकट होती थी ।

**संक्रान्तभृङ्गीपदपंक्तिमुद्रं पौष्पं रजः क्ष्माफलके रराज ।**
**क्रमाल्लिपिज्ञानकृतक्षणस्य क्षुण्णं मधोरक्षरमालयेव ॥३६॥**

**अन्वयः**

क्ष्माफलके सक्रान्तभृङ्गीपदपङ्क्तिमुद्र पौष्पं रजः क्रमात् लिपिज्ञानकृतक्षणस्य मधोः अक्षरमालया इव क्षुण्णं रराज ।

**व्याख्या**

क्ष्माफलके पृथ्वीतलपट्टिकाया सक्रान्ता सलग्ना भृङ्गीणा भ्रमरीणा पदानि चरणास्तेषा पङ्क्तय श्रेणयस्तासा मुद्राश्चिह्नानि, यस्मिंस्तत् पुष्पस्येद पौष्पं कुसुमसम्बन्धी 'तस्येदमित्यण्' । रजो धूलि क्रमात् क्रमशो लिपिज्ञानेऽक्षरज्ञानाभ्यासे कृतो विहित क्षण उत्सवो येन स तस्य 'निर्व्यापारस्थितौ कालविशेषोत्सवयो क्षण' इत्यमर । मधोर्वसन्तस्याऽक्षरमालया वर्णमालया क्षुण्णमिव सभृतमिव रराज शुशुभे। बालका यथाऽक्षरज्ञानाभ्यासे पट्टिकायां

तिर्यगादिरेखाबाहुल्यमेव रचयन्ति तथैव क्ष्माफलके वसन्तागमनात्पुष्पधूलि-बाहुल्यात्तत्र भृङ्गीणा भ्रमणेन तत्पादजनितरेखाकदम्बक कवि बालस्य वसन्त-स्याऽक्षरज्ञानाभ्यासे क्ष्मापट्टिकाया तिर्यग्रेखादिकमित्युत्प्रेक्षते ।

## भाषा

पृथ्वी रूपी पटिया पर भ्रमरियो के पावो की पक्तियो से अङ्कित कुसुम-रज, धीरे २ वर्णमाला सीखने का उत्सव मनाने वाले वसतऋतु की अक्षर-माला से मानो अकित हो, ऐसी शोभित होती थी। अर्थात् वसतऋतु मे पृथ्वीपर बहुत पुष्परज गिरने से और उनपर भ्रमरियो के चलने से बनी लकीरो से कवि उत्प्रेक्षा करता है कि बालक बसन्त ने मानो अक्षर सीखते समय पृथ्वी रूपी पटिया पर टेढी मेढी लकीरे खीची हो।

**समारुरोहोपरि पादपानां लुलोठ पुष्पोत्करेणुपुञ्जे ।**
**लताप्रसूनांशुकमाचकर्ष क्रीडन्वनैः किं न चकार चैत्रः ॥३७॥**

## अन्वयः

चैत्रः पादपानाम् उपरि समारुरोह, पुष्पोत्करेणुपुञ्जे लुलोठ, लता-प्रसूनांशुकम् आचकर्ष, वनैः क्रीडन् कि न चकार ।

## व्याख्या

चैत्रो वसन्तमास पादैर्मूलै पिबन्तीति पादपास्तेषा पादपाना वृक्षाणामुपर्यूर्ध्वं समारुरोह वृक्षान्समाच्छादितवानित्यर्थ । पुष्पाणा कुसुमानामुत्करास्समूहास्तेषा रेणवो धूलय 'रेणुर्द्वयो स्त्रिया पुसि पासुर्वा न द्वयो रज' इत्यमर । तेषा पुञ्जे समूहे लुलोठ पपात । लताना वीरुधा प्रसूनान्येव पुष्पाण्येवाऽशुक श्लक्ष्ण-त्वान्मृदुत्वाच्चाम्बरमाचकर्ष बलाद्गृहीतवान् । इत्थ वनैर्वनस्थैर्वस्तुभि क्रीड़न् विहरन् कि न चकार कि न कृतवान् । कर्तव्याकर्तव्यविवेक परिहाय बालवत् यथेच्छ सर्वमेव चैत्रेणाऽनुष्ठितमिति भाव । यथा कश्चित् बालको वृक्षारोहण धूलिविलुण्ठन, अशुकाकर्षणञ्च करोति तथा बालो मधु कृतवानिति भाव । अत्र समासोक्तिरलङ्कार ।

## भाषा

(बालक) चैत्र अर्थात् वसन्त वृक्षो पर चढ गया। पुष्पो के समूह के पराग मे अर्थात् मिट्टी मे लोट पोट की, लता के पुष्प रूपी वस्त्र को खीच लिया।

इस प्रकार बालक वसन्त ने वन मे की सभी वस्तुओ से क्रीडा करते हुए क्या नही किया। अर्थात् बालक वसन्त ने कर्तव्याकर्तव्य का विचार छोडकर अपनी इच्छा के अनुसार सब कुछ खेल किया। जैसे कोई बालक वृक्षारोहण, धूर मे लोटना और मा के या अन्य स्त्रियो की साडी खीचना आदि चेष्टाएँ करता है वैसेही चैत्र ने किया। भाव यह है कि वसन्त ऋतु के आने से वृक्षो पर वासन्तिक शोभा छा गई, पुष्पो के समूह से खूब मकरन्द चूने लगा और लताओ मे से फूल टूट २ कर गिरने लगे।

**दक्षः प्रवालौष्ठसमर्पणाय लतावधूनां मुकुलस्तनीनाम्।**
**मत्तालिवैतालिकगीतकीर्तिर्भ्रमन्मधुर्यौवनमारुरोह ॥३८॥**

### अन्वयः

मुकुलस्तनीना लतावधूना प्रवालौष्ठसमर्पणाय दक्षः मत्तालिवैतालिकगीतकीर्तिः भ्रमन् मधुः यौवनम् आरुरोह।

### व्याख्या

मुकुलानि कुड्मलान्येव स्तना कुचा यासा तास्तासा लतावधूना वीरुद्रूपनारीणा प्रवाला रक्तकिसलया एवौष्ठा अधरोष्ठास्तेषा समर्पणाय वितरणाय दक्षश्चतुरः प्रगल्भ इत्यर्थ। मत्ता मदान्धा अलयो भ्रमरा एव वैतालिका स्तुतिगायकास्तैर्गीता गानेन वर्णिता कीर्तिर्यस्य स भ्रमन्नितस्ततो गतागत कुर्वन् मधुर्वसन्तो यौवन तारुण्यमारुरोह सप्राप्तवान्। प्रत्यग्रकुचभूषिताना किशोरीणामधरोष्ठप्रदाने चुम्बनदाने कुशलो वैतालिकगीतकीर्तिस्सचरन् मनुष्य इव मुकुलिताना लताना किसलयप्रदाने कुशलो मत्तालिगीतकीर्तिर्भ्रमन् वसन्तो यौवनं प्रापेति भाव।

### भाषा

कली रूपी स्तनो वाली, लता रूपी स्त्रियो को किसलय (नये लाल पत्ते) रूपी ओठो को (तृप्त करने मे) देने मे कुशल मदोन्मत्त भ्रमर रूपी स्तुतिगायको से गाई गई कीर्तिवाला, चारो ओर विहरण करने वाला वसन्तऋतु युवावस्था को प्राप्त हुआ। अर्थात् छोटे२ नये कडे स्तन वाली किशोरियो के लाल ओठो को चूम लेने मे कुशल स्तुतिपाठको द्वारा कीर्तिगान किए जाने वाले नवयुवक के

समान कलियो से युक्त लताओ को नये लाल पत्ते प्रदान करने मे कुशल, भौरो की गुजाहट से कीतिगान किया जाने वाला वसन्त युवावस्था को प्राप्त हुआ ।

**सलीलमङ्गीकृतपञ्चबाण-साम्राज्यभारस्य मधोरभङ्गः ।**
**एको भुजस्तस्य लवङ्गवायु-रन्यः पिकस्त्रीकलपञ्चमोऽभूत् ॥३९॥**

अन्वयः

सलीलम् अङ्गीकृतसाम्राज्यभारस्य तस्य मधोः अभङ्गः एकः भुजः लवङ्गवायुः अन्यः पिकस्त्रीकलपञ्चमः अभूत् ।

व्याख्या

लीलया विलासेन सहित सलीलमङ्गीकृत स्वीकृत पञ्चबाणस्य कामस्य साम्राज्यभारोऽखिलराज्यशासनभारो येन स तस्य स्वीकृतकामसाम्राज्यभारस्य तस्य प्रसिद्धस्य मधोर्वसन्तस्याऽभङ्गोऽविकलो बलिष्ठ इत्यर्थ । एको भुजो बाहुर्लवङ्गवायुर्दक्षिणानिलोऽन्य इतरो बाहु पिकाना कोकिलाना स्त्रिय कोकिलास्तासा कल सुन्दर पञ्चम पञ्चमस्वरोऽभूत् । एतेन वसन्तस्य कामसाम्राज्ये मन्त्रित्व प्रतीयते ।

भाषा

खेलवाड से ही कामदेव के साम्राज्य के समग्र कार्यों को करने का स्वीकार करने वाले उस वसन्त ऋतु का एक बलवान् हाथ दक्षिणानिल था और दूसरा हाथ कोयल का सुन्दर पञ्चम स्वर था । अर्थात् काम के राज्य मे वसन्त ही प्रधान मत्री था जो दक्षिणानिल तथा कोकिला के पञ्चम स्वर का प्रयोग कर उसका साम्राज्य चलाता था ।

**राशीकृताः पुष्पपरागपुञ्जाः पदे पदे दक्षिणमारुतेन ।**
**मत्तस्य चैत्रद्विरदस्य कर्तु-मक्षूणहेतोरिव पांसुतल्पान् ॥४०॥**

अन्वयः

दक्षिणमारुतेन पदे पदे मत्तस्य चैत्रद्विरदस्य 'अक्षूणहेतोः पासुतल्पान् कर्तुम् इव पुष्पपरागपुञ्जाः राशीकृताः ।

### व्याख्या

दक्षिणमारुतेन मलयानिलेन पदे पदे स्थाने स्थाने मत्तस्य मदान्धस्य चैत्र एव द्विरदो गज 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो गज ' इत्यमर । तस्याऽक्षूणहेतोरक्षूण[१] विश्राम सततपरिश्रमेण समागतक्लान्तिरूपन्यूनताया दूरीकरणार्थं विश्रान्तिरित्यर्थ । स एव हेतु कारण तस्मात् पासवो धूलय एव तल्पानि शय्याः 'तल्प शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम' इत्यमर । तानि कर्तुमिव विधातुमिव पुष्पाणा कुसुमाना परागस्य रजस पुञ्जास्समूहा राशीकृता एकत्रीकृता । वसन्ते परागस्याऽऽधिक्य भवति स च मलयमारुतवेगेनैकत्रीभवति श्रमनिवारणार्थं मत्तचैत्रगजस्य तल्पताञ्च प्राप्नोतीति भाव ।

### भाषा

दक्षिणानिलने स्थान स्थान पर मदोन्मत्त चैत्र रूपी हाथी के विश्राम के निमित्त धूलि की कोमल शय्या बनाने के लिये मानो पुष्प की धूलि को एकत्र किया ।

**लग्नद्विरेफध्वनिपूर्यमाणं वासन्तिकायाः कुसुमं नवीनम् ।**
**आसादयामास वसन्तमास-जन्मोत्सवे मङ्गलशङ्खलीलाम्[२] ॥४१॥**

### अन्वयः

वसन्तमासजन्मोत्सवे लग्नद्विरेफध्वनिपूर्यमाणं वासन्तिकायाः नवीनं कुसुम मङ्गलशङ्खलीलाम् आसादयामास ।

### व्याख्या

वसन्तमासस्य मधुमासस्य जन्मन उत्सवस्तस्मिन्, लग्ना सश्लिष्टा द्विरेफा

---

[१] सज्ञासु धातुरूपाणि प्रत्ययाश्च तत परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥
'टुक्षु' गतौ—आदादिकधातोर्भावे नङ प्रत्यये बाहुलकाद्दीर्घे नञ्समासे 'अक्षूण' शब्दो निष्पन्न । न क्षूणमक्षूण गत्यवरोधो विश्राम इत्यर्थ ।

[२] उक्त साहित्यदर्पणे—
मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रत ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥

भ्रमरास्तेषा ध्वनिभिर्झङ्कारै पूर्यमाण परिपूरित वासन्तिकाया माधवीलताया नवीन प्रत्यग्र कुसुम पुष्प मङ्गलशङ्खस्य माङ्गलिककार्यचिन्हभूतशङ्खस्य लीला विलासमासादयामास सप्राप। कथमन्यस्य लीलामन्य कर्तुमर्हतीति लीलासदृशीं लीलामिति पर्यवसितेऽर्थे सति पदार्थनिदर्शनालङ्कार । 'अभवन्वस्तुसम्बन्ध उपमापरिकल्पक' इति लक्षणात् ।

## भाषा

वसन्त मास के जन्मोत्सव के अवसर पर छाए हुए भोरो की गुन्जार से भरा जाने वाला (बजाया जाने वाला) माधवीलता का पुष्प, माङ्गलिक अवसरो पर बजाए जाने वाले शङ्ख की शोभा को प्राप्त हुआ ।

**गते हिमर्तौ ध्रुवमुष्णखिन्नः शीतोपचारं मलयः सिषेवे ।**
**यदाजगाम व्यजनोपमानां समीरणश्चन्दनपल्लवानाम् ॥४२॥**

## अन्वयः

हिमर्तौ गते उष्णखिन्नः मलयः ध्रुवं शीतोपचारं सिषेवे । यत् व्यजनोपमाना चन्दनपल्लवानां समीरणः आजगाम ।

## व्याख्या

हिम शीत ऋतुरिति हिमर्तुस्तस्मिन् गते व्यतीते सति, उष्णेनोष्मणा खिन्न सतप्तो मलयो मलयगिरि ध्रुव निश्चयेन शीतोपचार ग्रीष्मनिवारक शैत्योत्पादक साधन सिषेवे सेवितवान् । यद्यस्मात्कारणाद्व्यजनमेवोपमान येषा ते व्यजनो-मास्तेषा तालवृन्तसमानाना चन्दनपल्लवाना श्रीखण्डकिसलयाना समीरणो वायु-राजगाम सचचाल । चन्दनपल्लवस्य शैत्यात्तत्सम्पर्काद्वायोरपि शैत्यजनकत्व-मिति भाव ।

## भाषा

हेमन्त व शिशिर ऋतुओ के बीत जाने पर गरमी से खिन्न मलयपर्वत, निश्चय ही शीतोपचार का सेवन करने लगा। क्योकि पखो के समान चन्दनवृक्ष के कोमल पत्तो का वायु बहने लगा। अर्थात् गर्मी से पीडित होकर जन साधारण पखा चला कर अपनी गर्मी दूर करते है। मलय पर्वत ने चन्दन के पत्तो से हवा लेकर अपनी गर्मी शान्त की ।

**मनस्विनीनां मनसोऽवतीर्य मानस्य वेगेन पलायितस्य ।**
**जीवग्रहायेव वसन्तमित्रं बभ्राम वायुः ककुभां मुखानि ॥४३॥**

### अन्वयः

वसन्तमित्र वायुः मनस्विनीना मनसः अवतीर्य वेगेन पलायितस्य मानस्य जीवग्रहाय इव ककुभा मुखानि बभ्राम ।

### व्याख्या

वसन्तस्य वसन्तर्तोर्मित्र सुहृद्वायुर्दक्षिणानिल प्रशस्त मनो यासा ता मनस्विन्यस्तासा मनस्विनीना मानिनीना मनसो हृदयादवतीर्य निष्क्रम्य वेगेन जवेन पलायितस्य प्रधावतो गच्छत इत्यर्थ । मानस्याऽहङ्कारस्य जीवस्य प्राणानां ग्रहाय ग्रहणाय इव प्राणवधार्थमिवेत्यर्थ । ककुभा दिशा 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्चता' इत्यमर । मुखानि मण्डलानि बभ्राम चचारान्वेष्टु गतवानित्यर्थं । दक्षिणानिलेन मानवतीना मानो दूरीभवतीति भाव । उत्प्रेक्षालङ्कार ।

### भाषा

वसन्तऋतु का मित्र दक्षिणानिल, मानवती स्त्रियो के मन मे से निकल कर वेग से भाग चलने वाले मान का प्राणान्त करने के लिये मानो उसकी खोज मे सब दिशाओ मे घूमने (बहने) लगा । अर्थात् दक्षिणानिल के लगते ही मानवती का मान एक दम दूर हो जाता है ।

**वियोगिनीनामवशाल्लुलोठ कण्ठेषु लीलाकलपञ्चमो यः ।**
**तेनैव चक्रे मदनस्य कार्यं पुण्यैर्यशोऽभूत्पिकपञ्चमस्य ॥४४॥**

### अन्वयः

अवशात् वियोगिनीना कण्ठेषु यः लीलाकलपञ्चमः लुलोठ तेन एव मदनस्य कार्यं चक्रे । पुण्यैः पिकपञ्चमस्य यशः अभूत् ।

### व्याख्या

अवशात्प्रियविरहवेदनया मनसोऽसामर्थ्यात् स्वशरीरचेष्टाया पारतन्त्र्याद्वियोगिनीना विरहिणीना कण्ठेषु गलेषु यो लीलया विलासेन कल मधुर पञ्चम-

पञ्चमस्वरो लीलाकलपञ्चमो लुलोठ समुच्चारितस्तेनैव तासा कण्ठस्थित-पञ्चमस्वरेणैव मदनस्य कामस्य कार्यं सर्वलोकविजयात्मक चक्रे अकारि। पुण्यैस्सुकृतैरेव पिकपञ्चमस्य कोकिलपञ्चमस्वरस्य यश कीर्तिरभूत् बभूव। कोकिलपञ्चमस्वरस्य यत्कामोद्दीपनात्मक कार्यं तद्वियोगिनीकण्ठगतपञ्चमस्वर-निनादेनैव सम्पादितम्। परन्तु प्रसिद्धिवशात् पुराकृतपुण्यै कोकिलपञ्चमस्व-रस्यैव तद्विषये यशो जातम्।

### भाषा

विरहजन्य पीडा जनित असामर्थ्य से विरहिणियो के गलो मे से जो विलास से भरा सुन्दर पञ्चम स्वर निकलता है वही कामदेव के सब कामोद्दीपक कार्यो को करता है। किन्तु प्रसिद्धि के कारण उसका यश, पुरातन सुकृतो से, कोयल के पञ्चम स्वर को प्राप्त हुआ है।

**पदातिसंवर्गणकारणेन पदे पदे चम्पकराशिभङ्ग्या।**
**वसन्तसामन्तविकीर्यमाणं हेमेव रेजे स्मरपार्थिवस्य ॥४५॥**

### अन्वयः

**पदे पदे चम्पकराशिभङ्ग्या स्मरपार्थिवस्य पदातिसंवर्गणकारणेन वसन्तसामन्तविकीर्यमाणं हेम इव रेजे।**

### व्याख्या

पदे पदे स्थाने स्थाने 'पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर। चम्पकराशिभङ्ग्या चम्पकपुष्पसमूहव्याजेन स्मर काम एव पार्थिवस्तस्य कामनृपते पदातीना कामसैनिकाना संवर्गणमावर्जनमाकर्षणमित्यर्थ। तस्य कारणेन वसन्त एव सामन्तस्सहायकनृपस्तेन मन्त्रिणेत्यर्थ। विकीर्यमाण पुरस्काररूपेण दीयमान हेमेव सुवर्णमिव रेजे शुशुभे। सापह्नवोत्प्रेक्षालङ्कार.।

### भाषा

स्थान स्थान पर, कामदेव की पैदल सेना के लिये, चम्पे के फूलो के ढेर के मिष से, मानो वसन्त रूपी सामन्त राजा अर्थात् मन्त्री के द्वारा पुरस्कार के रूप मे दिया जाने वाला सोना ही शोभित हो रहा था।

**चचार चूतद्रुममञ्जरीषु चुचुम्ब नानाकलिकामुखानि ।**
**स्त्रीराज्यमध्यस्थ इव द्विरेफः स्थातुं न लेभे क्षणमेवमेव ॥४६॥**

### अन्वयः

द्विरेफः चूतद्रुममञ्जरीषु चचार । नानाकलिकामुखानि चुचुम्ब । स्त्रीराज्यमध्यस्थः इव एवम् एव क्षण स्थातु न लेभे ।

### व्याख्या

द्विरेफो भ्रमर 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय' इत्यमर । चूतद्रुमाणा सहकारपादपाना 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ' इत्यमर । मञ्जर्य वल्लर्यस्तासु 'वल्लरिर्मञ्जरि स्त्रियौ' इत्यमर । चचार विहरति स्म । नानाकलिकाना विभिन्नपुष्पकोरकाणा मुखानि वदनान्यग्रभागानित्यर्थ । चुचुम्बाऽऽस्वादयत् । स्त्रीणा नारीणा राज्य तस्य मध्ये तिष्ठतीति स्त्रीराज्य-मध्यस्थ इव कामिनीराज्यान्तर्गत इवैवमेव कर्मरहित क्षणमीषत्कालपर्यन्तमपि स्थातु मनश्चाञ्चल्य विहाय धैर्येणावस्थातु न लेभे न प्राप । स्त्रीसमूहान्तर्गतो नरो मनस स्थिरत्व विधातु न शक्नोति । ध्रुवमेव कामाभिभूतस्सम् ताभिस्सह रमते तथैव भ्रमरोऽपि । इत्यप्रकृतव्यवहारसमारोपात्समासोक्तिरलङ्कार ।

### भाषा

भ्रमर आम की बौरो पर चक्कर काटने लगा । विभिन्न फूलो की कलियो के मुखो का चुम्बन करने लगा अर्थात् अग्रभाग का आस्वादन लेने लगा । स्त्रियो के राज्य मे अर्थात् मध्य मे रहने वाले के समान वह बिना कुछ व्यापार किए एक क्षण भी स्थिर न रह सका । अर्थात् सदैव मञ्जरी व कलिका रूपी कामिनियो के साथ रहने से कामाभिभूत होकर एक क्षण भी स्थिर चित्त से न रह सका ।

**विलासिनामादिगुरुस्त्रिलोक्या-मन्योन्यलीलाभुजबन्धनेषु ।**
**उत्तम्भिताशोकपलाशपाणिर्न चैत्रमल्लः प्रतिमल्लमाप ॥४७॥**

### अन्वयः

त्रिलोक्या विलासिनाम् अन्योन्यलीलाभुजबन्धनेषु आदिगुरुः उत्तम्भि-ताशोकपलाशपाणिः चैत्रमल्लः प्रतिमल्ल न आप ।

### व्याख्या

त्रयाणा लोकाना समाहारस्त्रिलोकी त्रिभुवन तस्या विलासिन्यश्च विलासिनश्चेति विलासिनस्तेषा विलासिना 'पुमान् स्त्रिया' इत्येकशेष । कामविलासयुक्तानामन्योन्यस्य परस्परस्य लीलाया कामक्रीडाया भुजबन्धनानि बाहुबन्धनानि तेषु कामक्रीडाबाहुबन्धनविशयेष्वादिगुरु प्रथमाचार्यो हठात्प्रवर्तक, नितरा कामोद्दीपकत्वात् । उत्तम्भितौ युद्धाह्वानायोत्थापितौ, अशोकश्च पलाशश्चाऽशोकपलाशावेव पाणी येन स चैत्र एव मल्लो वीरश्चैत्रमल्ल प्रतिमल्ल प्रतिपक्षवीर न आप युद्धार्थं न प्राप । चैत्रमास सर्वोत्कृष्टत्वेन कामिनामुद्दीपक । तेन तुल्य कोऽपि नेत्यर्थ ।

### भाषा

तीनो भुवनो मे काम विलास से युक्त प्राणियो को परस्पर कामक्रीडा मे भुजबन्ध की शिक्षा देने वाला, आदि गुरु, और अशोक और पलास रूपी दोनो हाथो को उठाकर युद्ध के लिये ललकारने वाले चैत्र मास रूपी योद्वा को लडने के लिये कोई विपक्षी योद्धा न मिल सका । अर्थात् चैत्र मास मे कामोद्दीपक अशोक और पलास के वृक्षो को देख कर सभी प्राणी कामासक्त हो जाते है और चैत्र के प्रभाव से कोई भी वञ्चित नही रह सकता ।

**पुरन्ध्रिगण्डूषसुराभिलाषं पश्यन्नशोको बकुलद्रुमस्य ।**
**प्रियप्रियापादतलप्रहार—मात्मानमल्पव्यसनं विवेद ॥४८॥**

### अन्वयः

बकुलद्रुमस्य पुरन्ध्रिगण्डूषसुराभिलाष पश्यन् अशोकः प्रियप्रियापादलताप्रहारम् आत्मानम् अल्पव्यसन विवेद ।

### व्याख्या

बकुलद्रुमस्य केसरवृक्षस्य 'अथ केसरे । बकुलो वञ्जुलोऽशोके' इत्यमर । 'मौलसरी' इति भाषायाम्' । पुरन्ध्रीणा कामिनीना गण्डूषस्य या सुरा मुखवर्ति मद्य तस्याऽभिलाषमिच्छा पश्यन्निरीक्षमाणोऽशोक अशोकद्रुम प्रियोऽभीष्ट. प्रियाया कान्ताया पादतलस्य चरणतलस्य प्रहारस्ताडन यस्य स तमात्मान स्वमल्प क्षुद्र न्यून वा व्यसन प्रकृत्या प्रियवस्तु यस्य स तमल्पव्यसन विवेद ज्ञातवान् । कान्तामुखोच्छिष्टमद्याभिलाषस्य निन्दितत्वात्तदपेक्षया कान्तापादतलप्रहारस्याऽल्प-

**व्यसनत्व; तत्र कामिनीस्पर्शजनितसुखानुभवश्चेति भाव । 'पादाघातादशोकं विकसति बकुल योषितामास्यमद्यै' इति कविसमय ।**

### भाषा

मौलसरी के वृक्ष की, (फूलने के लिये) कामिनी के शराब के कुल्ले की अभिलाषा को जानने वाला अशोक वृक्ष, (अपने फूलने के लिये) कामिनी के पाद प्रहार की अभिलाषा रखने वाले अपने को अपेक्षाकृत कम व्यसनी समझने लगा । अर्थात् अपने ऊपर झूठी शराब के थूके जाने से कामिनी की लात खा लेना अच्छा है ऐसा समझने लगा । क्योकि उसमें कामिनीस्पर्शजनित-सुखानुभूति होती है ।

**चूतद्रुमालीभुजपञ्जरेण रणद्द्विरेफावलिकङ्कणेन ।**
**मित्रं मधुः कोकिलमञ्जुनाद-पूर्वाभिभाषी स्मरमालिलिङ्ग ॥४६॥**

### अन्वयः

**मित्रं कोकिलमञ्जुनादपूर्वाभिभाषी मधुः रणद्द्विरेफावलिकङ्कणेन चूतद्रुमालीभुजपञ्जरेण स्मरम् आलिलिङ्ग ।**

### व्याख्या

**मित्र सुहृत् 'अथ मित्र सखा सुहृत्' इत्यमर । कोकिलाना पिकाना मञ्जुनाद प्रियध्वनि पूर्वो यस्मिन्कर्मणि तत् कोकिलमञ्जुनादपूर्वं यथास्यात्तथाऽभिभाषते स्वागत वदतीति अथवा कोकिलनादेन पूर्वाभिभाषी प्रथमस्वागतकर्ता मधुर्वसन्तो रणन्तो झङ्कारशब्द कुर्वन्तो द्विरेफा भ्रमरास्तेषामावलि पङ्क्तिः 'वीथ्यालिरावलि पक्ति श्रेणी लेखास्तु राजय' इत्यमर. । एव कङ्कण यस्य स तेन भ्रमरपङ्क्तिरूपकङ्कणयुक्तेन चूतद्रुमाणा सहकारवृक्षाणामावलि पक्तिरेव भुजपञ्जर बाहुपिञ्जर बाहुपाश इत्यर्थ । तेन सहकारवृक्षावलिरूपबाहुपाशेन स्मर काममालिलिङ्ग परिरब्धवान् । मधौ मित्रत्वारोपश्चूतद्रुमाल्या भुजपञ्जरत्वारोपो रणद्द्विरेफावल्या कङ्कणत्वारोपश्च स्मरकर्मकालिङ्गने हेतुरिति रूपकम् ।**

### भाषा

मित्र तथा कोयल की कोमल कूको से प्रथम स्वागत करने वाले वसन्त ऋतु ने गुजार करने वाले भौरो की कतार रूपी कगन वाले आम के पेडो की कतार रूपी बाहुपाश से कामदेव का आलिङ्गन किया ।

**उन्निद्रपङ्क्तिस्थितचम्पकानि चकाशिरे केलिवनान्तराणि ।**
**वियोगिनीनां कवलीकृतानां सुवर्णकाञ्चीभिरिवाञ्चितानि ।।५०।।**

### अन्वयः

उन्निद्रपङ्क्तिस्थितचम्पकानि केलिवनान्तराणि कवलीकृताना वियोगि-नीनां सुवर्णकाञ्चीभिः अञ्चितानि इव चकाशिरे ।

### व्याख्या

उद्गता दूरीभूता निद्रा सकोचो येषा तान्युन्निद्राणि विकसितानि पक्तीषु श्रेणीषु स्थितानि विद्यमानानि चम्पकानि चम्पककुसुमानि येषु तानि केलिवनाना क्रीडोद्यानानामन्तराणि मध्यभागा कवलीकृताना चम्पकादिपुष्पसमृद्धिमता वसन्तेन भक्षिताना हतानामित्यर्थ । वियोगिनीना विरहिणीना सुवर्णकाञ्चीभि काञ्चनर-शनाभिरञ्चितानि तत्समानपीतवर्णत्वात्समन्वितानीव चकाशिरे विदिद्युतिरे । वसन्ते पतिविरहाद्दशमविरहावस्था प्राप्ताना मृतानामित्यर्थ । वियोगिनीना पीतवर्णत्वात्काञ्चनकाञ्चीरूपाणीव चम्पकपुष्पाणि शुशुभिर इति भाव । उत्प्रेक्षालकार ।

### भाषा

फूले हुए और कतार मे लगे पीले चम्पे के फूलो से युक्त क्रीडा कानन के मध्यस्थल, वसन्त ऋतु के कारण पति वियोग से दशम विरहावस्था को प्राप्त अर्थात् मृत वियोगिनियो की मानो सोने की पीली करधनियो के रूप से शोभित हो रहे थे ।

**मर्मव्यथाविस्मयघूर्णमान-मूर्धोच्छलत्कुण्डलविभ्रमेण ।**
**शब्दानुसारेण वियोगिनीभिः क्षिप्ताः पिकानामिव कण्ठपाशाः ।।५१।।**

### अन्वयः

वियोगिनीभिः मर्मव्यथाविस्मयघूर्णमानमूर्धोच्छलत्कुण्डलविभ्रमेण पिकाना शब्दानुसारेण कण्ठपाशाः क्षिप्ताः ।

### व्याख्या

वियोगिनीभिर्विरहिणीभिर्मर्मव्यथाया कोकिलकूजितश्रवणजनितमार्मिकवेद-नाया विस्मयेनाऽऽधिक्येनाऽथवा विस्मयो लोकसीमातिवर्तितत्व तेन 'विविधेषु

पदार्थेषु लौकसीमातिवर्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदाहृत' इति साहित्यदर्पणे। घूर्णमानेभ्यो भ्रमद्भ्यो मूर्धभ्यो मस्तकेभ्य उच्छलतामूर्ध्वं गच्छता कुण्डलाना कर्णभूषणाना विभ्रमेण व्याजेन पिकाना कोकिलाना शब्दस्य रवस्याऽनुसारोऽनुसरण तेनाऽमुकस्थानत शब्द समायातीत्यनुमानेन तेषां बन्धनाय कण्ठपाशा कण्ठरज्जव इव क्षिप्ता मुक्ता। पिकस्वराणा पीडादायकत्वेन पिकाना बन्धनार्थं विरहिणीभि कर्णभूषणचक्रमणव्याजात्पाशा क्षिप्ता इवेति भाव। अत्रापन्हुतिरलङ्कार.।

### भाषा

वियोगिनिओ ने कोकिल के शब्दो को सुन कर मार्मिक वेदना के आधिक्य से मस्तको को सतत हिलाने से ऊपर गोलाकार रूप मे हिलने वाले कर्णभूषणो के मिष से मानो कोयल के शब्दो का अनुसरण कर उनके गलो को बाध कर उनका प्राणान्त करने वाले पाशो को छोडा।

**उदञ्चयन्किंशुकपुष्पसूचीः सलीलमाधूतलताकशाग्रः।**
**वियोगिनां निग्रहणाय सज्जः कामाज्ञया दक्षिणमारुतोऽभूत् ॥५२॥**

### अन्वयः

किंशुकपुष्पसूचीः उदञ्चयन् सलीलम् आधूतलताकशाग्रः दक्षिणमारुतः कामाज्ञया वियोगिनां निग्रहणाय सज्जः अभूत्।

### व्याख्या

किंशुकपुष्पाणि पलाशकुसुमान्येव सूचय स्ता (कर्म) किंशुकपुष्पसूची रुदञ्चयन्नुन्नयन् लीलया विलासेन सहित सलील यथास्यात्तथा आधूत कम्पितं लतैव कशा तस्या अग्र येन स दक्षिणमारुतो मलयपवन कामस्य मकरध्वजस्याऽऽज्ञयाऽनुशासनेन वियोगिन्यश्च वियोगिनश्चेति वियोगिनस्तेषा वियोगिनां 'पुमान्स्त्रियेत्येकशेष.'। निग्रहणाय शासनाय सज्ज उद्यत. सन्नद्धोऽभूत्। यथा शकटस्थबलीवर्दप्रेरणाय सूचीकशयो प्रयोग क्रियते तथैव कामाज्ञया कामिजनपीडनाय वसन्तेन किंशुकपुष्पलतयो प्रयोग कृत इति भाव। अत्र रूपकालङ्कार।

### भाषा

पलाश के फूल रूपी काँटे को लिए हुए, विलास से लता रूपी कोडे

या चाबुक के अग्रभाग को हिलाने वाला दक्षिण वायु, कामदेव की आज्ञा से, वियोगी और वियोगिनिओ पर शासन करने के लिए तयार हो गया। गाडी के बैल को हाँकने के लिये चाबुक और चाबुक के दण्डे मे एक काँटा भी लगा रहता है जिससे गाडीवान बैलो को ठीक चलाता है। उसी प्रकार वियोगी और वियोगिनिओ पर अपना शासन चलाने के लिए काम की आज्ञा से वसन्तऋतु पलाश का फूल रूपी काँटा ओर लता रूपी चाबुक लेकर, तयार हो गया।

**प्रसूननाराचपरम्पराभिर्वर्षत्सु योधेष्विव पादपेषु।**
**वसन्तमत्तद्विरदाधिरूढः प्रौढ़त्वमाप स्मरभूमिपालः ॥५३॥**

### अन्वयः

योधेषु इव पादपेषु प्रसूननाराचपरम्पराभिः वर्षत्सु (सत्सु) वसन्त-मत्तद्विरदाधिरूढ़ः स्मरभूमिपालः प्रौढ़त्वम् आप।

### व्याख्या

योधेषु भटेष्विव 'भटा योधाश्च योद्धार' इत्यमर। पादपेषु वृक्षेषु प्रसूनानि पुष्पाण्येव नाराचा प्रक्ष्वेडना लोहनिर्मितशरास्तेषा परम्परास्ताभि प्रसूननाराच परम्पराभिर्वर्षत्सु पुष्पबाणधारा पातयत्सु सत्सु, पादपेभ्य पुष्पेषु पतत्स्वति-भाव। वसन्त एव मत्तो मदान्धो द्विरदो गजस्तमधिरूढोऽधिष्ठित स्मर काम एव भूमिपालो राजा प्रौढत्व प्रकर्षमौन्नत्यमित्यर्थ। आप प्राप। पुष्पोद्गमेन वसन्ते कामस्य प्रभाव प्रसृत इति भाव।

### भाषा

योधाओ के समान वृक्षो के पुष्परूपी लोहे के बाणो की वृष्टि करते रहने पर अर्थात् अत्यधिक फूलो के उत्पन्न होकर नीचे गिरते रहने पर वसन्त रूपी मदोन्मत्त हाथी पर सवार कामरूपी राजा उन्नत अवस्था को प्राप्त हुआ अर्थात् काम का साम्राज्य चारो ओर फैल गया।

**समर्प्यमाणाद्भुतकौसुमास्त्र-श्चैत्रेण चित्रीकृतकाननेन।**
**अधिज्यधन्वापि पराङ्मुखोऽभून्निपङ्गभारे भगवाननङ्गः ॥५४॥**

**अन्वयः**

चित्रीकृतकाननेन चैत्रेण समर्प्यमाणाद्भुतकौसुमास्त्रः अधिज्यधन्वा अपि भगवान् अनङ्गः निषङ्गभारे पराङ्मुखः अभूत् ।

**व्याख्या**

चित्रीकृतमलङ्कृत विभिन्नवर्णनवीनपुष्पादिनेति भाव । कानन वन 'अटव्यरण्य विपिन गहन कानन वनम्' इत्यमर । येन स तेन चैत्रेण वसन्तमासेनेत्यर्थ । समर्प्यमाण दीयमानमद्भुत विचित्र कौसुम पौष्पमस्त्र बाणो यस्मै स ज्या मौर्वीमधिगतमधिज्य धनुर्यस्य स समारोपितचापोऽपि भगवान् पूज्योऽनङ्ग कामो निषङ्गभारे तूणीरभारग्रहणे पराङ्मुखो निरभिलाषोऽभूत् । चैत्रेण कानने महान्पुष्परूपबाणराशिरेकत्रीकृतो दत्तश्च कामाय येन बाणसरक्षणाय तूणीरधारणस्याऽऽवश्यकतैव न जातेति भाव ।

**भाषा**

जगलो को रगबिरगी फूलो से सुशोभित करने वाले चैत्र से, आश्चर्यजनक फूलो के बाणो को पाकर, धनुष चढाकर रखने वाले भी भगवान् कामदेव, तरकस धारण करने मे विमुख रहे। अर्थात् सदैव चैत्र द्वारा पुष्पबाण दिये जाने के कारण धनुष चढाए रहने पर भी तरकस मे बाण रखकर उसे पीठ पर लटका रखने की आवश्यकता भगवान् कामदेव को न पडी ।

**शृङ्गारिणीमार्जितदन्तपंक्ति-कान्त्येव निर्यन्त्रणमुच्छलन्त्या ।**
**प्रक्षाल्यमानस्य शनैरवापु-रनिन्द्यमिन्दोः किरणाः प्रसादम् ॥५५॥**

**अन्वयः**

निर्यन्त्रणम् उच्छलन्त्या शृङ्गारिणीमार्जितदन्तकान्त्या प्रक्षाल्यमानस्य इव इन्दोः किरणाः शनैः अनिन्द्यं प्रसादम् अवापुः ।

**व्याख्या**

निर्यन्त्रण निरर्गलमुच्छलन्त्योर्ध्वं प्रसरन्त्या शृङ्गारिणीभिरङ्गनाभिर्मार्जितास्स्वच्छीकृता धवलीकृता इत्यर्थ । दन्ता दशनास्तेषा कान्तिस्तया प्रक्षाल्यमानस्य समार्जितस्येव धवलीकृतस्येवेत्यर्थं । इन्दोश्चन्द्रस्य किरणा करा शनै क्रमशोऽनिन्द्य निर्मल प्रसाद धावल्यमवापु प्रापु । उत्प्रेक्षालङ्कार ।

**भाषा**

बिना रोक टोक ऊपर की ओर फैलनेवाली, अङ्गनाओ द्वारा साफ किए हुए दाँतो की कान्ति से मानो धोए हुए अर्थात् साफ किए हुए चन्द्रमा के किरण, धीरे धीरे अपूर्व स्वच्छता अर्थात् धवलता को प्राप्त हुए ।

**अथ विरहिणीविलापं वर्णयति कविः—**

**त्वं चैत्र मित्रं यदि मन्मथस्य तस्मिन्ननङ्गे कथमक्षताङ्गः ।**
**ज्ञातं तवान्तर्गतमागतोऽसि मिषेण नाशाय वियोगिनीनाम् ॥५६॥**

**अन्वयः**

हे चैत्र यदि त्वं मन्मथस्य मित्र (तर्हि) तस्मिन् अनङ्गे (सति) त्व कथम् अक्षताङ्गः । तव अन्तर्गत (मया) ज्ञातम् । त्व मिषेण वियोगिनीना नाशाय आगतः असि ।

**व्याख्या**

हे चैत्र ! हे वसन्त ! यदि त्व मन्मथस्य कामस्य मित्र सुहृत्तर्हि तस्मिन्कामेऽनङ्गेऽङ्गहीने सति त्व कथमक्षतान्यङ्गानि यस्य स अभग्नावयवोऽविकलशरीर असीत्यर्थ । तव वसन्तस्याऽन्तर्गत मानसगतो भावो मया विरहिण्या ज्ञात बुद्धम् । त्व मिषेण व्याजेन वियोगिनीना विरहिणीना नाशाय विध्वसनायाऽऽगतस्समायातोऽसि । कामस्याऽनङ्गत्वे जातेऽपि त्वमधुना पुष्पविकासादिव्याजेन तदीय वियोगिनीनाशरूप कार्यं सम्पादयसीति भाव ।

**भाषा**

हे वसन्त ! यदि तुम कामदेव के मित्र हो तो कामदेव के शरीर रहित होने पर तुम कैसे अविकल शरीर वाले हो अर्थात् तुम कैसे बिना आघात के रह गये । तुम्हारे हार्दिक भाव को मैने समझ लिया । तुम बहाने से वियोगिनिओ का नाश कर डालने के लिये आए हो । अर्थात् कामदेव के काम मे तुम, फूलो को पैदा कर बहाने से सहायता कर ही रहे हो ।

**नूनं महापातकिनं वितर्क्य वियोगिवर्गक्षयदीक्षितं त्वाम् ।**
**पस्पर्श न त्र्यम्बकनेत्रवह्निः पापैरखण्डैः प्रियखण्डितानाम् ॥५७॥**

**अन्वयः**

त्र्यम्बकनेत्रवह्निः प्रियखण्डितानाम् अखण्डैः पापैः त्वा वियोगिवर्ग-क्षयदीक्षितं नून महापातकिन वितर्क्य न पस्पर्श ।

**व्याख्या**

त्रीणि अम्बकानि नेत्राणि यस्य स त्र्यम्बक शिवस्तस्य नेत्रवह्निर्नयनाग्नि. शिवनेत्रवह्नि प्रियेण कान्तेन खण्डिता विरहितास्तासा विरहिणीनामथवा प्रिया खण्डिता सुदूर गता यासा तासा वियोगिनीसम्बन्धिनामित्यर्थ । अखण्डैरतिमहद्भि पापैर्दुष्कृतै प्राणापहरणरूपैरित्यर्थ । त्वा वसन्त वियोगिना विरहिणा वर्गस्य समूहस्य क्षये नाशकार्ये दीक्षित सजातदीक्ष सन्नद्धमत एव नून निश्चयेन महापातकिन महापापिन वितर्क्य विचार्य न पस्पर्श न स्पृष्टवान् न दग्धवानित्यर्थ ।

**भाषा**

शकर की आख की आगने, वियोगिनिओ के सम्बन्ध मे किये हुए बडे २ पापो से, तुम को विरही लोगो के समूह को नाश करने मे लगे हुए अत एव निश्चय पूर्वक महापातकी समझ कर, नही छूवा अर्थात् नही जलाया ।

**हराहवे पञ्चशरं विमुच्य पलायितः क्षत्रपराङ्मुखस्त्वम् ।**
**अस्य क्षताङ्गस्य पुरोऽधुनात्र हा चैत्रचाण्डाल कथं स्थितोऽसि ॥५८॥**

**अन्वयः**

क्षत्रपराङ्मुखः त्व हराहवे पञ्चशर विमुच्य पलायितः । हे चैत्र-चाण्डाल ! अधुना अत्र क्षताङ्गस्य अस्य पुरः हा ! कथ स्थितः असि ।

**व्याख्या**

क्षत्रियकुलवाचकस्य क्षत्रशब्दस्याऽत्र लक्षणया क्षत्रियधर्मोऽर्थ । क्षत्रात्-क्षत्रियधर्मात्पराङ्मुखो निरपेक्षस्त्यक्तक्षत्रियधर्मस्त्व हरस्य शकरस्याऽहवो युद्ध तस्मिन्, शङ्करेण सह सजाते युद्धे पञ्चशर काम 'काम पञ्चशर स्मर' इत्यमर । विमुच्य परित्यज्य पलायितोऽपसृत । प्राणभयात्तमेकाकिन परित्यज्य पलाय्य दूर गत इत्यर्थ । चैत्र एव चाण्डालस्तत्सम्बोधने हे चैत्रचाण्डाल ! हे चैत्राधम ! अधुनेदानीमत्राऽस्मिन्प्रदेशे क्षत भग्न शरीर गात्र यस्य स तस्य भग्नगात्रस्याऽस्य कामस्य पुरोऽग्रे हा खेदसूचकमव्ययम् । कथ केन प्रकारेण

स्थितोऽसि विद्यमानोऽसि। घोरसङ्कटे त्यक्तसङ्गस्य कामस्य पुन सम्मुखे समागमस्ते निर्लज्जत्वमेव द्योतयतीति भाव ।

### भाषा

क्षत्रियधर्म से विमुख तुम, शिव के साथ भये हुए युद्ध मे कामदेव को छोडकर भाग गये थे। हे नीच चैत्र ! इस समय, इस स्थान पर भग्न शरीर कामदेव के सन्मुख हाय ! कैसे उपस्थित हो सके हो। अर्थात् घोर सकट मे कामदेव का साथ छोडकर भाग जाने वाले तुम, इस समय यहा कामदेव के सन्मुख कैसे उपस्थित होकर निर्लज्जता प्रकट कर रहे हो।

**इहैव सङ्गः फलवान्बभूव त्वया महापातकिना पिकानाम् ।**
**यदर्धदग्धोल्मुककश्मलेन देहेन लोकस्य बहिश्चरन्ति ॥५६॥**

### अन्वयः

महापातकिना त्वया पिकाना सङ्गः इह एव फलवान् बभूव। यत् (ते) अर्धदग्धोल्मुककश्मलेन देहेन लोकस्य बहिः चरन्ति।

### व्याख्या

महापातकिनाऽत्युग्रपापिना त्वया वसन्तेन पिकाना कोकिलाना सङ्गस्सहवास इहैवाऽस्मिन्नेव जन्मनि फलवान् फलसयुक्तो बभूव जात । 'अत्युग्रपुण्यपापानामिहैव फलमश्नुते' इति वचनात्। यद्यस्मात्कारणात् ते पिका अर्धं दग्ध ज्वलितमुल्मुकमलातम् 'अङ्गारोऽलातमुल्मुकम्' इत्यमर । तद्वत्कश्मलेन कृष्णवर्णेन देहेन शरीरेण लोकस्य जनस्थानस्य जनसमुदायस्य वा बहिर्बाह्यदेशे वने इत्यर्थ । चरन्ति भ्रमन्ति। महापातकिना वसन्तेन सह पिकाना ससर्गात् तेषामपि पापसम्बन्धात्कृष्णवर्णत्व लोकाद्बहिर्निष्कासनञ्च जातमिति भाव ।

### भाषा

महापापी तुम्हारे साथ कोयलो का साथ होने से कोयलो को उसका फल इसी जन्म मे मिल गया। क्योकि कोयल अधजली मशाल के समान काले रग के शरीर से जन समूह के बाहर जगलो मे भटकने लगी। अर्थात् पापी के ससर्ग के पाप से काली पड कर नगर से दूर जगलो मे रहने लगी।

त्वं दृष्टदोषोऽपि पुनः स्मरेण यत्संगृहीतः शृणु तत्र हेतुम् ।
अङ्गीकृतस्त्रीवधपातकेन केनापि न स्वीकृत एष भारः ॥६०॥

**अन्वयः**

यत् दृष्टदोषः अपि त्वं स्मरेण पुनः सगृहीतः तत्र हेतु शृणु । अङ्गीकृतस्त्रीवधपातकेन केन अपि एष भारः न स्वीकृतः ।

**व्याख्या**

यत् यतो दृष्ट परिज्ञातो दोषो मित्रसाहाय्यकारित्वाभावरूपो दुर्गुणो यस्य स विज्ञातदुर्गुणोऽपि त्व वसन्त, स्मरेण कामेन पुनर्मुहु सगहीतोऽङ्गीकृतस्तत्र तस्मिन्विषये हेतु कारण शृणु समाकर्णय । अङ्गीकृतमुररीकृत स्त्रीणा नारीणा वधरूप पातक पाप येन स तेन स्वीकृतनारीहननरूपपापेन केनाऽपि केनाऽपि व्यक्तिविशेषेण एष स्त्रीवधरूपो भार कार्यं न स्वीकृतो नोररीकृत ।

**भाषा**

कामदेव ने, मित्र की सहायता न करने के दोष से युक्त भी तुमको फिर से क्यो अपने साथ रख लिया, इसका कारण सुनो । स्त्रीवध का पाप स्वीकार करने वाले, तुम्हारे सिवाय किसी ने भी इस बोझ को उठाना अर्थात् इस कार्य को करना स्वीकार नही किया । अर्थात् स्त्रीवध का पाप किसी के स्वीकार न करने से, तुम जैसे दोषी को भी उसने अपना लिया ।

इत्थं वियोगज्वरजर्जराणा-मुद्वेजितानां मधुमासलक्ष्म्या ।
आसन्मुहुः पक्ष्मललोचनानां चैत्रे विचित्रोक्तिविचेष्टितानि ॥६१॥

**अन्वयः**

चैत्रे मधुमासलक्ष्म्या उद्वेजिताना वियोगज्वरजर्जराणा पक्ष्मललोचनानाम् इत्थ विचित्रोक्तिविचेष्टितानि मुहुः आसन् ।

**व्याख्या**

चैत्रे वसन्ते मधुमासलक्ष्म्या वसन्तशोभयोद्वेजिताना पीडिताना वियोगज्वरेण पतिविरहरूपज्वरेण जर्जराणा शिथिलीभूताना पक्ष्मलानि घनपक्ष्मयुक्ता 'पक्ष्माक्षिलोम्नि किजल्के तत्वाद्यशेऽप्यणीयसि' इत्यमर । लोचनानि नयनानि

यासा तास्तासा पक्ष्मललोचनानामङ्गनानामित्थमनेन पूर्वोक्तप्रकारेण विचित्रा आश्चर्योत्पादिका उक्तयो भाषितानि 'व्याहार उक्तिर्लपित भाषित वचन वच' इत्यमर । तासा विचेष्टितानि विलसितानि मुहुर्वारम्वारमासन् बभूवु ।

### भाषा

वसन्त ऋतु मे वसन्त की शोभा से पीडित, ओर पति विरह मे जर्जरित, मुन्दर गझीन पखौनियो वाली नारियो के इस प्रकार के आश्चर्य कारक उक्तियो के विलास बार २ होते थे। अर्थात् विरह के कारण पीडित हो, स्त्रियाँ इस प्रकार के अनेक विचित्र उद्गार बार २ निकालती थी।

**गम्भीरता चाटुपराङ्मुखत्वं सौभाग्यमन्यप्रमदारदाङ्कः ।**
**दोषोऽपि यूनां गुण एव मेने पुरन्ध्रिभिर्मानपराङ्मुखीभिः ॥६२॥**

### अन्वयः

मानपराङ्मुखीभि पुरन्ध्रिभिः यूना गम्भीरता चाटुपराङ्मुखत्वं सौभाग्यं अन्यप्रमदारदाङ्कः दोषः अपि गुणः एव मेने।

### व्याख्या

माने दर्पे पराङमुख्यो वसन्तर्तुकारणेनौत्सुक्यादुदासीनास्ताभिर्मानरहिताभि पुरन्ध्रिभिरङ्गनाभिर्यूना युवजनाना गम्भीरता धैर्यं चाञ्चल्याभाव इत्यर्थ । चाटुपराङमुखत्वमनुनयानुरूपप्रेमवार्ताप्रचाररहितत्व 'अस्त्री चाटुचटुश्लाघा प्रेम्णा मिथ्या विकत्थनम्' इत्यमर । सौभाग्य सुन्दरभाग्यशालित्व स्त्रीसमागमाप्तीच्छाया क्लेशराहित्यमित्यर्थ । अन्यासा प्रमदाना स्त्रीणा रदाना दशनानामङ्कश्चिन्ह 'कलङ्काङ्कौ लाच्छनञ्च चिन्ह लक्ष्म च लक्षणम्' इत्यमर । इति दोषोऽपि गुण एव मेने तत्र दोषत्वबुद्धिरेव न जातेतिभाव । वसन्तर्तुकृतात्युग्रकामवेदनया यूना सकलदोषान् विस्मृत्य ता कामपरवशाजाता इत्यर्थ । यूना दोषा अपि तासा कृते तस्मिन्काले कामोद्दीपका जाता इति भाव ।

### भाषा

स्त्री के सामने विद्यमान रहने पर भी युवको का धीरता से बिना किसी प्रकार की चञ्चलता दिखाते हुए बैठे रहना, मीठी २ रस भरी प्रेम की बाते न करना, स्त्री समागम की इच्छा रहते हुए भी किसी प्रकार के क्लेश से पीडित न होकर, अपनी ही ऐंठ मे रहना, और उनके शरीर पर के अन्य स्त्री के या

सौत के दांत से काटने के चिन्ह—इन दोषो को भी, मान रहित स्त्रियो ने गुण ही समझा। युवा कामियो मे, इन दोषो को देख कर पत्नियाँ क्रुद्ध हो जाती हैं। परन्तु वसन्त-ऋतु के प्रभाव से जिनका मान ही दूर हो गया है अतएव कामासक्त भई हुई स्त्रियो ने इन दोषो को भी गुण ही समझा।

**बन्दिकृतं वसन्तवर्णनमारभते कविः—**

**मानग्रन्थिकदर्थनाय कथिताः सर्वत्र पुंस्कोकिलाः**
**केलीकर्मणि दाक्षिणात्यमरुतामध्यक्षभावोऽर्पितः।**
**पुष्पास्त्रस्य जगत्त्रयेऽपि विरहप्रत्यूहहेवाकिनः**
**संनद्धोऽयमसाध्यसाधनविधौ साम्राज्यमन्त्री मधुः ॥६३॥**

**अन्वयः**

सर्वत्र मानग्रन्थिकदर्थनाय पुंस्कोकिलाः कथिताः। केलीकर्मणि दाक्षिणात्यमरुताम् अध्यक्षभावः अर्पितः। जगत्त्रये अपि विरहप्रत्यूह-हेवाकिन पुष्पास्त्रस्य साम्राज्यमन्त्री अय मधुः असाध्यसाधनविधौ संनद्धः। (अस्ति)।

**व्याख्या**

(वसन्तेन) सर्वत्र सर्वस्थानेषु मान कोप एव ग्रन्थिस्तस्य कदर्थनाय भञ्जनाय विनाशायेत्यर्थ। पुस्कोकिला पिका कथिता आज्ञप्ता। केलीकर्मणि काम-क्रीडाविलासे रत्यादिष्वित्यर्थ। दाक्षिणात्यमरुता मलयपवनानामध्यक्षभाव आधिपत्यमर्पितो दत्त। जगता भुवनाना 'विष्टप भुवन जगत्' इत्यमर। त्रय तस्मिन् त्रिलोक्यामपि विरहे वियोगसमये प्रत्यूहा विघ्ना 'विघ्नोऽन्तराय प्रत्यूह' इत्यमर। क्लेशोत्पादका उपद्रवा इत्यर्थ। तेषा हेवाक[1] उत्कटेच्छाऽ-स्त्यस्येति तस्य प्रियविरहसमये पीडोत्पादनकामस्य पुष्पास्त्रस्य कामस्य साम्राज्यस्य सार्वभौमराज्यस्य मन्त्री धीसचिव 'मन्त्री धीसचिवोऽमात्य इत्यमर। अय प्रसिद्धो मधुर्वसन्तोऽसाध्यानामसम्भवाना विरहिदुःखाना साधनमुत्पादन तस्य

---

[1] हेवाकशब्द कश्मीरकविभि कल्हणबिल्हणादिभिरेव प्राय प्रयुक्त।
'जायन्ते महतामहो निरुपमप्रस्थानहेवाकिना
नि सामान्यमहत्त्वयोगपिशुना वार्ता विपत्तावपि' इति कल्हण।

विधि प्रक्रिया तस्मिन्सन्नद्ध सुसज्जोऽस्ति। शार्दूलविक्रीडितच्छन्द । "सूर्याश्वै-र्मसजस्तता सगुरव शार्दूलविक्रीडितम्" इति लक्षणात्। रूपकालङ्कार ।

## भाषा

वसन्त ने सब स्थानो मे प्रेमकोप रूपी गाठ को खोल डालने के लिये कोयलो को आज्ञा दे दी। रत्यादि कामक्रीडाओ मे मलयानिल को मुख्य स्थान दे दिया। तीनो लोको मे वियोगजनित कष्ट देने की उत्कट इच्छा रखने वाले कामदेव के साम्राज्य का मन्त्री, यह वसन्त, विरही जनो मे, असम्भव दु खो को उत्पन्न करने के काम मे कटिबद्ध है। अर्थात् कोयल व मलयानिल की सहायता से वसन्त ऋतु, वियोगियो को अत्यधिक कष्ट पहुँचाने की कामदेव की उत्कट इच्छा को पूर्ण करने मे सहायता करता है।

**लीलास्नानविधिक्षमं मधुलिहां पुष्पेषु जातं मधु**
**स्थायित्वं कलकण्ठकण्ठकुहरेष्वासेवते पञ्चमः।**
**एकच्छत्रजगज्जयार्जनरुचेर्देवस्य शृङ्गारिण-**
**श्चैत्रश्चित्रमकाण्ड एव समभूत्त्रैलोक्यजैत्रो भटः ॥६४॥**

## अन्वयः

मधुलिहा पुष्पेषु लीलास्नानविधिक्षम मधु जातम्। पञ्चमः कलकण्ठ-कण्ठकुहरेषु स्थायित्वम् आसेवते। एकच्छत्रजगज्जयार्जनरुचेः शृङ्गा-रिणः देवस्य अकाण्डे एव चैत्रः त्रैलोक्यजैत्रः भटः समभूत् (इति) चित्रम्।

## व्याख्या

मधुलिहा भ्रमराणा ( कृते ) पुष्पेषु कुसुमेषु लीलया क्रीडया स्नान तस्य विधिर्विधान तस्य क्षम योग्यमत्यधिकमित्यर्थ । मधु पुष्परसो जात समुत्पन्नम्। पञ्चम पञ्चमस्वर कलो मधुर कण्ठो येषा ते कलकण्ठा कोकिलास्तेषा कण्ठा एव कुहराणि गुहास्तेषु स्थायित्व स्थिरतामासेवते जुषते। 'पिको वदति पञ्चमम्' इत्युक्ते । एक छत्र यस्य स एकच्छत्रो यो जगतो भुवनस्य 'विष्टप भुवन जगत्' इत्यमर । जयो विजयस्तस्याऽर्जने प्राप्तौ रुचि प्रीतिर्यस्य स तस्य शृङ्गारिणो देवस्य कामस्य भगवतोऽकाण्डेऽकस्मादेव चैत्रो वसन्तमासस्त्रैलोक्यस्य त्रिभुवनस्य जैत्रो जयनशीलो भटो योद्धा समभूत् सप्राप्त इति चित्रमाश्चर्यकरम्।

### भाषा

भौरो के लिये, फूलो मे क्रीडापूर्वक स्नान करने योग्य अर्थात् अत्यधिक पुष्प-रस ( मकरन्द ) उत्पन्न हो गया। पञ्चम स्वर, कोकिलो के कण्ठकुहरो मे स्थिर हो गया। जगत् का एक छत्र विजय प्राप्त करने की अभिलाषा रखने वाले कामदेव का योद्धा चैत्र, अचानक ही, तीनो भुवनो को जीतने वाला हो गया—यह एक आश्चर्य की बात है।

**भृङ्गैर्विश्ववियोगिवर्गदलनोत्तालस्य वैतालिकैः**
**प्रारब्धा विरुदावलीव पठितुं श्रृङ्गारबन्धोर्मधोः।**
**नादः कोकिलयोषितां प्रमुषितत्रैलोक्यमानग्रहः**
**कामः सम्प्रति कौतुकाद्यदि परं पौष्पं धुनीते धनुः ॥६५॥**

### अन्वयः

वैतालिकैः भृङ्गैः विश्ववियोगिवर्गदलनोत्तालस्य श्रृङ्गारबन्धोः मधोः विरुदावली पठितु प्रारब्धा इव। प्रमुषितत्रैलोक्यमानग्रहः कोकिलयोषिता नादः (प्रारब्धः)। यदि पर सम्प्रति कामः कौतुकात् पौष्प धनुः धुनीते (तर्हि धुनोतु नाम)।

### व्याख्या

वैतालिकै राज्ञा प्रात काले निद्राप्रबोधजनकस्तुतिकारकै 'वैतालिका बोध-कराश्चाक्रिका घाण्टिकार्थका। स्युर्मागधास्तु मगधा बन्दिन स्तुतिपाठका' इत्यमर। भृङ्गैर्भ्रमरैर्विश्वेषा सर्वेषा वियोगिना वियोगिस्त्रीपुरुषाणा (पुमान्-स्त्रियेति-एकशेष) वर्ग समूहस्तस्य दलन सहारस्तस्मिन्नुत्ताल उत्कटस्तस्य सकल-वियोगिसमूहसहारोत्कटस्य श्रृङ्गारस्य स्त्रीपुसो परस्पर सम्भोगस्पृहाया बन्धुर्मित्र सहायक इत्यर्थ। तस्य, उक्तञ्च—"पुस स्त्रिया स्त्रिया पुसि सभोग प्रति या स्पृहा। स श्रृङ्गार इति ख्यात क्रीडारत्यादिकारक"॥ यद्वा श्रृङ्गारस्य कामस्य बन्धोर्मित्रस्य मधोर्वसन्तस्य विरुदाना यश प्रशस्तीनामावली पङक्तिर्वि-रुदावली 'वीथ्यालिरावलि पङक्ति श्रेणी लेखास्तु राजय' इत्यमर। पठितु-मुच्चारयितु प्रारब्धा इव। प्रमुषितो बलाद्विनाशितस्त्रैलोक्यस्य मानग्रह कोपग्रहण येन स कोकिलयोषिता पिकीना नाद शब्दोऽपि प्रारब्ध इति भाव। यदि पर यदि केवल सम्प्रत्यधना कामो मनोज कौतुकात्कौतूहलात्पौष्प कुसुममय धनु.

शरासन धुनीते सञ्चालयति तर्हि धुनोतु नाम सञ्चालयतु, तदीय कार्यं भृङ्गमधुकोकिलै सम्पादितमेवेति भाव ।

**भाषा**

स्तुतिपाठ कर जगाने वाले वैतालिक रूपी भौरो ने, सब विरहिजनो के समूहो का सहार करने मे प्रबल और स्त्री पुरुषो की परस्पर सभोग की अभिलाषा के सहायक, वसन्तऋतु की, अथवा कामदेव के मित्र वसन्त ऋतु की, मानो यश प्रशस्ति का पाठ करना प्रारम्भ कर दिया है। अर्थात् वसन्त ऋतु के आने से भौरो की गुजार चारो ओर होने लगी है जो कामोत्पादक है। तीनो लोको की मनिनिओ के कोप को हठात् दूर कर देने वाली कोकिलाओ की कूक भी प्रारम्भ हो गयी है। अगर इसके ऊपर भी कामदेव, खेलवाड मे अपने फूलो के धनुष्य को चलाने लगे तो भले ही चलावे, उनका कार्य तो भृङ्ग आदि सेवको ने कर ही दिया है।

**कूजत्कोकिलकोपिता गुलिधनुःशिक्षां समासेवते**
**खिन्ना चन्दनमारुतेन मलये दावाग्निमाकाङ्क्षति ।**
**किञ्चान्विष्यति दुर्मना दलयितुं कामेन मैत्रीं मधोः**
**कर्तुं धावति दुर्लभे त्वयि सखी कां कां न वातूलताम् ॥६६॥**

**अन्वयः**

त्वयि दुर्लभे (सति), सखी कूजत्कोकिलकोपिता (सती) गुलिधनुःशिक्षा समासेवते। चन्दनमारुतेन खिन्ना (सती) मलये दावाग्निम् आकाङ्क्षति। किञ्च दुर्मनाः (सती) कामेन मधोः मैत्री दलयितुम् अन्विष्यति। का का वातूलता कर्तुं न धावति।

**व्याख्या**

त्वयि विक्रमाङ्कदेवे दुर्लभे दुष्प्राप्ये सति त्वद्वियोगावस्थायामित्यर्थ । सखी कामिनी कूजद्भि शब्द कुर्वाणै कोकिलै पिकै कोपिता रोष प्रापिता सती गुलिधनुषो मृद्गुलिका निधाय येन यन्त्रेण वानरेषु पक्षिषु च गुलिकाप्रहार क्रियते तद्यन्त्र तस्य "धनुही" "गुलेला" इति भाषाया प्रसिद्धस्य, शिक्षामभ्यास समासेवते करोति। कोकिलशब्देन त्वद्वियोगावस्थाया पीडा न भवेदिति कोकिल-दूरीकरणार्थं गुलिधनुषोऽभ्यास प्रारभत इति भाव । चन्दनवायुना चन्दनगन्ध-

युक्तवायुना दक्षिणानिलेन खिन्ना दु खिता सती मलये मलयपर्वते दावाग्नि वनदाहकाग्नि दावानलमित्यर्थ । आकाङ्क्षति वाञ्छति । येन दावानलेन मलयजचन्दनवृक्षेषु दग्धेषु चन्दनवायोरभाव स्यादिति भाव । किञ्चाऽन्यच्च दुर्मना दु खितहृदया सती कामेन मन्मथेन मधोर्वसन्तस्य मैत्री सख्य दलयितु विनाशयितुमन्विष्यति प्रेच्छति उपाय मृगयतीति भाव । का का वातूलता-मुन्मत्तता 'वातूल पुसि वात्यायामपि वातसहे त्रिषु' इत्यमर । कर्तुं सम्पादयितु न धावति न वेगेन प्रवर्तते ।

### भाषा

तुम्हारे न मिलने पर अर्थात् तुम्हारी विरहावस्था मे, कामिनी, कूकने वाली कोयलो से क्रुद्ध होकर गुलेला चलाने का अभ्यास प्रारम्भ करती है जिससे गोली से कोयलो को मार कर उडादे जिसमे उनके शब्दो से विरहावस्था मे कष्ट न हो। चन्दन की सुगन्ध युक्त वायु से अर्थात् मलयानिल से खिन्न होकर मलयाचल मे दावानल लगने की अभिलाषा करती है। जिसमे सब चन्दन के वृक्ष जल कर भस्म हो जाए ओर विरहावस्था मे चन्दन वायुओ से कष्ट न हो, और दु खित होकर, कामदेव ओर वसन्त की मित्रता का नाश करने के उपायो को खोजती है। कौन २ सा पागलपने का काम करने मे वह शीघ्रता से नही प्रवृत्त होती है।

**सन्नद्धं माधवीनां मधु मधुपवधूकेलिगण्डूषयोग्यं**
**विश्राम्यन्ति श्रमेण क्वचिदपि मरुतो न क्षणं दाक्षिणात्याः ।**
**क्रीडाशैलीभवन्ति प्रतिकलमलिनां कौसुमाः पांसुकूटा—**
**श्चैत्रे पुष्पास्त्रमित्रे तदिह विरहिणां कीदृशी जीविताशा ॥६७॥**

### अन्वयः

माधवीना मधु मधुपवधूकेलिगण्डूषयोग्यं सन्नद्धम्। दाक्षिणात्याः मरुतः श्रमेण क्वचिदपि क्षणं न विश्राम्यन्ति। अलिना कौसुमाः पासुकूटा प्रतिकल क्रीडाशैलीभवन्ति। तत् पुष्पास्त्रमित्रे चैत्रे (सति) इह विरहिणा जीविताशा कीदृशी।

### व्याख्या

माधवीना वासन्तीलताना 'वासन्ती माधवीलता' इत्यमर । मधु पुष्परसो

मधुपाना भ्रमराणा वध्व कान्तास्तासा केलय क्रीडास्तासु गण्डूषा मुखपूर्तय. 'गण्डूषो मुखपूर्तौ स्यात्' इति हैम । तेषा योग्य तदर्थं पर्याप्त सन्नद्ध प्रगुणीभूत समागतम् । माधवीलतासु मकरन्दाधिक्य जातमिति भाव । दाक्षिणात्या दक्षिणदिशात आगता मरुतो मलयानिला श्रमेण दूरदेशागमनपरिश्रमेण क्वचिदपि कुत्राऽपि क्षणमीषत्कालपर्यन्तमपि न विश्राम्यन्ति विश्रान्ति न काङ्क्षन्ति। अलिना भ्रमराणा कृते कौसुमा पौष्पा पासुकूटा धूलिसमूहा प्रतिकल प्रतिक्षण क्रीडा-शैलीभवन्ति लीलापर्वतीभवन्ति लीलापर्वत इवाऽऽचरन्तीति भाव । अभूततदभावे च्वि । तत्तस्मात् कारणात् पुष्पाण्येव कुसुमान्येवाऽस्त्राणि शरा यस्य स पुष्पबाण कामस्तस्य मित्र सखा तस्मिन् चैत्रे वसन्ते विद्यमाने सतीहाऽस्मिन् जगति विरहिणा वियोगावस्थापन्नाना स्त्रीपुसा जीवितस्य जीवनस्याऽऽशा कीदृशी किमिति । न जीवनाशेति भाव । अर्थापत्तिरलङ्कार । स्रग्धरावृत्तम् । "म्रभ्नैर्याना त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात् ।

## भाषा

वासन्ती लताओ मे मकरन्द, भौरियो के लीलागत कुरला करने के योग्य तयार हो गया है । दक्षिण दिशा से बहने वाले मलयानिल, थकावट मे कही भी विश्राम नही लेते है अर्थात् लगातार बहते ही रहते है । भौरो के लिये पुष्पधूलि के ढेर प्रतिक्षण क्रीडापर्वत का काम करते हे । इसलिये कामदेव के मित्र वसन्त के आने पर वियोगियो के जीते रहने की आशा कैसी ? अर्थात् ऐसे समय मे वियोगियो का जीते रहना सम्भव नही है ।

**पुष्पैर्भ्राजिष्णुभस्त्राकरणिमगणितैः शाखिनः के न याता-**
**श्चञ्चन्निस्त्रिंशलेखामयमिव भुवनं भृङ्गमालाभिरास्ते ।**
**त्रैलोक्याकाण्डचण्डप्रहरणनिबिडोत्साहकण्डूलदोष्णः**
**पुष्पेशोर्जैत्रशस्त्रव्यतिकरविषये साधु सज्जो वसन्तः ॥६८॥**

## अन्वयः

के शाखिनः अगणितैः पुष्पैः भ्राजिष्णुभस्त्राकरणि न याताः । भृङ्ग-मालाभिः भुवन चञ्चन्निस्त्रिंशलेखामयम् इव आस्ते । त्रैलोक्याकाण्डचण्ड-प्रहरणनिबिडोत्साहकण्डूलदोष्णः पुष्पेशोः जैत्रशस्त्रव्यतिकरविषये वसन्त. साधु सज्जः ।

### व्याख्या

के शाखिन के वृक्षा अगणितैरसख्याकै पुष्पै कुसुमैर्भ्राजिष्णुर्देदीप्यमाना या भस्त्रा चर्मप्रसेविका 'भस्त्रा चर्मप्रसेविका' इत्यमर । तुणीर इत्यर्थ । तस्या आकर्राण स्पर्धा सादृश्यं वा न याता न प्राप्ता । पुष्पबाणस्य कामस्य तूणीर-सादृश्य न प्राप्ता इति भाव । भृङ्गमालाभिर्भ्रमरश्रेणीभिर्भुवन लोकश्चञ्चन् वेगवान्यो निस्त्रिश खङ्गस्तस्य लेखामयमिव पङक्तिमयमिवाऽऽस्ते । भ्रमर-पङक्तिभिस्सर्वत्र जगत् कामस्य वेगवत्खङ्गलेखामयमिव वरीवर्तीति भाव । 'प्राचुर्ये मयट् प्रत्यय' । त्रैलोक्यस्य भुवनत्रयस्याऽकाण्डेऽनवसरे यच्चण्ड भयङ्कर प्रहरण सहारस्तस्मिन्निबिडेन घनेनोत्साहेन मन प्रसारेण कण्डूल कण्डुयुक्तो दोर्भुजो यस्य स तस्य पुष्पेषो पुष्पाण्येवेषवो बाणा यस्य स तस्य कामस्य जैत्राणि जयनशीलानि शस्त्राण्यायुधानि 'आयुध तु प्रहरण शस्त्रमस्त्रमथास्त्रियौ' इत्यमर । तेषा व्यतिकर सम्बन्ध एकत्रीकरणमित्यर्थ । तस्य विधये सम्पादनाय वसन्तो वसन्तर्तुस्साधु सम्यक् सज्ज सन्नद्ध । कामस्य खङ्गधारण त्वप्रसिद्धम् । अत्र वसन्तकृतकामशस्त्रसज्जीकरणेन भावी मदनविजयो ध्वन्यते ।

### भाषा

कौन ऐसे वृक्ष ये जिन्होने असख्य फूलो से, चमकने वाले कामदेव के तरकस की स्पर्धा न की हो। क्योकि कामदेव के तरकस मे पुष्प ही बाणरूप से रहते है। भौरो की पक्तियो से तीनो भुवन वेगयुक्त कामदेव के खड्ग की रेखा से भरे से हो गये है। अर्थात् कालेरग के भौरो की पक्तियाँ कालेरग की खड्ग की रेखाओ के समान दिखाई पडती है। तीनो लोको का अचानक तीक्ष्ण सहार करने के अत्यधिक उत्साह से खुजलाने वाली भुजावाले कामदेव के जयनशील शस्त्रास्त्रो के एकत्र करने के कार्य मे वसन्तऋतु लग गया है।

**शून्याः श्रीखण्डवातैरभिलषति भुवश्चन्दनाद्रेः परस्ता-**
**ल्लीलोद्याने सखीनां सृजति कलकलं कोकिलोत्सारणाय।**
**स्तौति क्रीडावनालीनिखिलपरिमलाचान्तये चञ्चरीकॉ-**
**श्चारुभ्रूस्त्वद्वियोगे कमिव न भजते जीवरक्षाभ्युपायम् ॥६९॥**

### अन्वयः

चारुभ्रूः त्वद्वियोगे चन्दनाद्रेः परस्तात् भुवः श्रीखण्डवातैः शून्याः अभिलषति। लीलोद्याने कोकिलोत्सारणाय सखीना कलकल सृजति।

क्रीडावनालीनिखिलपरिमलाचान्तये चञ्चरीकान् स्तौति। कम् इव जीव-रक्षाभ्युपायं न भजते।

### व्याख्या

चारू भ्रुवौ यस्या सा सुभ्रूस्तव विक्रमाङ्कदेवस्य वियोगे विरहे चन्दनाद्रेर्मलयपर्वतस्य परस्तादनन्तर भुव पृथ्वी श्रीखण्डाना चन्दनाना वाता वायवस्तै शून्या रहिता अभिलषति वाञ्छति। चन्दनवायोर्विरहसन्तापोद्दीपकत्वाज्जनस्थाने तदागमन कष्टप्रदमिति तस्य स्थितिर्मलयपर्वत एव भवत्वित्यभिलषतीति भाव। लीलाया क्रीडाया उद्यानमुपवन तस्मिन् क्रीडावाटिकाया कोकिलाना पिकानामुत्सारणाय दूरीकरणाय सखीना स्वसखीना कलकल शब्दप्राचुर्यं सृजत्युत्पादयति। कोकिलशब्दस्य विरहपीडाकारकत्वात् सखीकलकलेन कोकिलान् दूरीकरोतीति भाव। क्रीडावनाना क्रीडोद्यानानामालीषु पङ्क्तिषु यो निखिलस्सकल परिमलस्सुगन्धस्तस्याऽऽचान्ति पान तस्यै चञ्चरीकान् भ्रमरान् स्तौति प्रार्थयति। यदि भ्रमरै सकलसुगन्ध पीत स्यात्तर्हि सुगन्धाभावाद्विरहोद्दीपन न स्यादिति भाव। कमिव कीदृश जीवरक्षाया प्राणरक्षाया अभ्युपाय साधन न भजते न सेवते। सकलमेव प्राणरक्षोपाय सम्पादयतीति भाव।

### भाषा

सुन्दर भौवो वाली कामिनी, तुम्हारे वियोग मे, मलयाचल के बाहर की पृथ्वी को चन्दनवायुओ से रहित होना चाहती है अर्थात् चन्दन वायु मलयाचल को छोडकर अन्यत्र पृथ्वी पर कही न बहे, ऐसा चाहती है। क्योकि विरहावस्था मे यह चदनवायु बहुत दुख प्रद होता है। सैर करने के बाग मे कोयलो को उडा देने के लिए अपनी सखियो से शोर कराती है जिसमे कोयले भाग जाँय और उनकी कूक सुनकर विरहावस्था मे कष्ट न हो। बगीचो की कतार मे के सब सुगन्ध को पी जाने के लिए भौरो से बिनती करती है जिसमे विरहावस्था मे सुगन्ध से विरहज्वाला अधिक न भभक पडे। कौन सा ऐसा उपाय है जिसे प्राण बचाने के लिए वह नही करती है।

**मलयगिरिसमीराः सिंहलद्वीपकान्ता-**
**मुखपरिचयलब्धस्फारकर्पूरवासाः।**
**द्रविडयुवतिदोलाकेलिलोलन्नितम्ब-**
**स्थलशिथिलितवेगाः सेव्यतामाप्नुवन्ति ॥७०॥**

**अन्वयः**

मलयगिरिसमीराः सिंहलद्वीपकान्तामुखपरिचयलब्धस्फारकर्पूरवासाः द्रविडयुवतिदोलाकेलिलोलन्नितम्बस्थलशिथिलितवेगाः (सन्तः) सेव्यताम् आप्नुवन्ति।

**व्याख्या**

मलयगिरिसमीरा मलयाचलानिला सिंहलद्वीपस्य 'सीलोन' इति ख्यातस्य कान्ता स्त्रियस्तासा मुखान्याननानि तेषा परिचय सम्पर्कस्तस्माल्लब्ध प्राप्त स्फारो बहुल कर्पूरस्य वास सुगन्धो यैस्ते, द्रविडयुवतीना चोलदेशाङ्गनाना दोलाकेलय प्रेङ्खाक्रीडास्तासु लोलन्तश्चलन्तो नितम्बा एव स्थलानि तैस्तत्सघट्टनै-रित्यर्थ। शिथिलित शिथिलीकृतो वेगो जवो 'वेग प्रवाहजवयोरपि' इत्यमर.। येषा ते तथा सन्त सेव्यता ग्राह्यतामाप्नुवन्ति लभन्ते। मलयाचलानिला. सिंहलद्वीपनारीमुखसम्पर्कात् कर्पूरगन्धयुक्ताश्चोलदेशाङ्गनाना दोलाक्रीडासु लोलनितम्बसघट्टनात् शिथिलीकृतवेगास्सन्तश्चन्दनजन्य शैत्य कर्पूरजन्य सुगन्ध नितम्बसघट्टनजन्य मन्दत्वञ्च वायूना शीतलमन्दसुगन्धेति गुणत्रय धारयन्त. सेव्या भवन्तीति भाव। मालिनीच्छन्द। उदात्तालङ्कार।

**भाषा**

मलयाचल के पवन, सीलोन की अङ्गानाओ के मुखो के सम्पर्क से कर्पूर की सुगन्ध को धारण कर और चोलदेश की कामिनियो के रसयुक्त झूला झूलने में चञ्चल नितम्बस्थलो से टकरा कर मन्दगति होने से मेवनीय हो गये थे। अर्थात् दक्षिणानिल, चन्दन का शैत्य, कर्पूर का सुगन्ध और नितम्बो की टक्कर से मन्द गति, एव शीतल, मन्द व सुगन्ध इन तीनो वायुओ के गुणो से युक्त होने से सेवनीय हो गये थे।

**पानीयं नालिकेरीफलकुहरकुहूत्कारि कल्लोलयन्तः**
**कावेरीतीरतालद्रुमभरितसुराभाण्डभाङ्कारचण्डाः ॥**
**उन्मीलन्नीलमोचापरिचयशिशिरा वान्त्यमी द्राविडीनां**
**कर्पूरापाण्डुगण्डस्थललुठितरया वायवो दाक्षिणात्याः ॥७१॥**

**अन्वयः**

नालिकेरीफलकुहरकुहूत्कारि पानीय कल्लोलयन्तः, कावेरीतीरतालद्रुम-

भरितसुराभाण्डभाङ्कारचण्डाः उन्मीलन्नीलमोचापरिचयशिशिराः द्राविडीना कर्पूरापाण्डुगण्डस्थललुठितरयाः अमी दाक्षिणात्याः वायवः वान्ति ।

### व्याख्या

नालिकेरीफलाना नारिकेलफलाना कुहरेषु मध्यस्थगह्वरेषु कुहूत्कारि कुहूदिति शब्दकर्तृ शब्दायमानमित्यर्थ । पानीय जल कल्लोलयन्तस्तरङ्गयन्त कावेरी-नद्यास्तीरे तटे तालद्रुमास्तालवृक्षास्तैर्भरितानि तालनिस्सृतजलेन 'ताडी' इति प्रसिद्धेन परिपूरितानि सुराभाण्डानि मद्यपात्राणि तेषा भाङ्कारेण झाङ्कारेण शब्देनेत्यर्थ । चण्डा प्रचण्डा सुराया मादकत्वादुग्रस्वरा इत्यर्थ । उन्मीलयन्त्यो विकसन्त्यो नीला नीलवर्णा मोचा शाल्मलिवृक्षा कदल्यो वा 'पिच्छिला पूरणी मोचा स्थिराय् शाल्मलिर्द्वयो ' इत्यमर । 'कदली वारणबुसा रभा मोचाशुमत्फला' इत्यमर । तासा परिचयेन सम्पर्केण शिशिरा शीता द्राविडीना चोलदेशाङ्गनाना कर्पूरवदापाण्डूनि घनसारवच्छुभ्राणि 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसज्ञ सिताभ्रो हिमवालुका' इत्यमर । गण्डस्थलानि कपोलस्थलानि तैर्लुठित सभग्न रयो वेगो येषा ते अमी स्पर्शगम्या दक्षिणे भवा दाक्षिणात्या वायवो मलयानिला वान्ति चलन्ति । अत्र दाक्षिणात्यवायुषु धावत्पुरुषव्यवहारप्रतीत्या समासोक्ति-रलङ्कार । स्रग्धराच्छन्द ।

### भाषा

नारियलो के वीच के कुहूत् ऐसा शब्द करने वाले जल को तरङ्गित करने वाले, कावेरी नदी के किनारे के ताड के वृक्षो से चूने वाली ताडी से परिपूर्ण (ताडी रखने के) बर्तनो के शब्दो से उग्ररूप धारण करने वाले, फूलने वाली नीले (हरे) रग के सेमर के या केलो के सम्पर्क से ठण्डे, चोलदेश की नारियो के कपूर के ऐसे श्वेत गालो से टकराने से मन्द वेग, ये मलयानिल बह रहे है ।

भृङ्गालीभिरधिज्यमन्मथधनुर्लीलां लभन्ते लताः
किं पुष्पं न बिभर्ति पुष्पधनुषस्त्रैलोक्यजैत्रास्त्रताम् ।
दोलान्दोलनकेलिलोलवनितासंचारितास्त्रोऽधुना
पञ्चेषुश्चललक्ष्यभेदविधिना गर्वं समारोहति ॥७२॥

### अन्वयः

लताः भृङ्गालीभिः अधिज्यमन्मथधनुर्लीलां लभन्ते । किं पुष्पं पुष्प-

धनुषः त्रैलोक्य-जैत्रास्त्रतां न बिभर्ति। दोलान्दोलनकेलिलोलवनितासञ्चारितास्त्रः पञ्चेषुः अधुना चललक्ष्यभेदविधिना गर्वं समारोहति ।

### व्याख्या

लता वीरुध 'लता प्रतानिनी वीरुद्' इत्यमर । भृङ्गालीभिर्भ्रमरपक्तिभिर्ज्या मौर्वीमधिगत अधिज्य सज्ज मन्मथस्य कामस्य धनुश्चापस्तस्य लीला शोभा लभन्ते प्राप्नुवन्ति । कि पुष्प कुसुम पुष्पधनुष कामस्य त्रैलोक्यस्य त्रिभुवनस्य जैत्र जयनशीलमस्त्र तस्य भावस्त्रैलोक्यजैत्रास्त्रता ता न विभर्ति न धारयत्यपि तु सर्वाणि पुष्पाणि त्रैलोक्यजैत्रास्त्रता धारयन्त्येव । दोलासु प्रेङ्खास्वान्दोलनकेलय दोलावेगेनोपर्यधोगमनक्रीडास्ताभिर्लोलाश्चला वनितास्तासु सञ्चारितानि सम्प्रापितान्यस्त्राणि येन स अथवा वनिता एवाऽङ्गना एव सञ्चारितानि प्रयुक्तान्यस्त्राणि येन स पञ्च इषवो बाणा यस्य स कामोऽधुनेदानी वसन्तसमये चलान्यस्थिराणि लक्षाणि शरव्याणि 'लक्ष लक्ष्य शरव्य च' इत्यमर । अङ्गनारूपाणि कामुकरूपाणि वा तेषा भेदो विदारण तस्य विधि करण तेन गर्वं दर्पं समारोहति प्राप्नोति । स्थिरलक्ष्यभेदादस्थिरलक्षभेदन कठिनमिति दर्पहेतु । काव्यलिङ्गमलङ्कार । शार्दूलविक्रीडितच्छन्द ।

### भाषा

लताएँ, भौरो की कतारो से युक्त होने से कामदेव के मौर्वी से युक्त अर्थात् सज्ज धनुष की शोभा को प्राप्त कर रही है । कौन फूल, कामदेव के, तीनो लोको को जीतने योग्य अस्त्रत्व को नही धारण करते है अर्थात् सभी फूल तीनो लोको को जीतने वाले अस्त्र का काम करते हैं । हिडोले के, ऊपर नीचे होने की क्रीडा से चचल कामियो और कामिनिओ पर अस्त्र का प्रयोग करने वाला कामदेव इस वसन्त ऋतु मे अस्थिर निशाने का भेदन करने के कार्य से, या चचल कामिनी रूपी अस्त्र का प्रयोग करने वाला कामदेव इस वसन्तऋतु मे कामुक रूपी अस्थिर निसाने का भेदन करने के प्रावीण्य से, घमण्ड कर रहा है ।

**उन्माद्यन्मधुपेन पुष्पमधुना केलीभुवः पङ्किलाः**
**सर्वं भङ्गभयं दिशन्ति कुसुमप्राग्भारतः पादपाः ।**
**चैत्रेणास्त्रपरम्पराव्ययविधौ दैन्यं परित्याजितः**
**कामः सम्प्रति बाणमोक्षरसिको लक्ष्येष्वलक्ष्येषु च ॥७३॥**

**अन्वयः**

उन्माद्यन्मधुपेन पुष्पमधुना केलीभुवः पङ्किलाः (जाताः) सर्वे पादपाः कुसुमप्राग्भारतः भङ्गभयं दिशन्ति। सम्प्रति चैत्रेण लक्ष्येषु अलक्ष्येषु च बाणमोक्षरसिकः कामः अस्त्रपरम्पराव्ययविधौ दैन्य परित्याजितः।

**व्याख्या**

उन्माद्यन्तो मद प्रापिता मधुपा भ्रमरा येन स तेन पुष्पाणा कुसुमाना मधु रसस्तेन मकरन्देन केलीभुव क्रीडास्थानानि पङ्किला कर्दमसयुक्ता जाता। सर्वे पादपा वृक्षा कुसुमाना पुष्पाणा प्राग्भारतो बाहुल्यात्तद्भारात् भङ्गस्य पतनस्य त्रुटनस्येत्यर्थ भय भीति दिशन्ति प्रकटयन्ति। सम्प्रत्यधुना चैत्रेण वसन्तेन लक्ष्येष्वलक्ष्येषु च लक्षेष्वलक्षेषु च निर्विचारमित्यर्थ। बाणमोक्षे शरसन्धाने रसिक समासक्त कामोऽस्त्राणा शस्त्राणा परम्परा समूहस्तस्या व्ययविधौ समुत्सर्जनेऽविचार्य प्रयोगकरणे इत्यर्थ। दैन्य दीनता निरुत्साहमिति-भाव। परित्याजित परिहापित। अगणितपुष्पास्त्राणा समर्पणादस्त्रविषयक कामस्य दैन्य दूरीकृतमिति भाव। शार्दूलविक्रीडितच्छन्द।

**भाषा**

भौरो को मदोन्मत्त करने वाले मकरन्द से कीडास्थलो मे कीचड हो गया है। अर्थात् क्रीडास्थलो मे अत्यधिक मकरन्द चूआ है। सभी वृक्ष अत्यधिक फूलो के बोझ से टूट जाने का भय सूचित करते है। इस समय निशाने का विचार न कर यथेच्छ बाण छोडने मे आसक्त कामदेव की बाणो के अधिक खर्च अर्थात् समाप्त हो जाने की दीनता को वसन्त ने दूर कर दिया है। अर्थात् वसन्त मे अत्यधिक फूलो के होने से, पुष्पसायक कामदेव को, बिना बिचारे पुष्पबाणो का प्रयोग करने की कोई कमी नही है।

**नीता नूतनयौवनप्रणयिना चैत्रेण चित्रां लिपिं**
**हर्षाद्वर्षति का न काननमही पुष्पैः कटाक्षैरिव।**
**दोलारूढपुरन्ध्रिपीनजघनप्राग्भारमाधुन्वतः**
**किं मानद्रुमभञ्जनाय गहनं लङ्कानिलस्याधुना ॥७४॥**

**अन्वयः**

नूतनयौवनप्रणयिना चैत्रेण चित्रा लिपि नीता का काननमही कटाक्षैः

इव पुष्पैः हर्षात् न वर्षति । अधुना दोलारूढपुरन्ध्रिपीनजघनप्राग्भारम् आधुन्वतः लङ्कानिलस्य मानद्रुमभञ्जनाय किं गहनम् ।

## व्याख्या

नूतने नवीने यौवने युवावस्थाया प्रणय स्नेहो यस्य स तेन चैत्रेण वसन्तेन चित्रा विचित्रा विविधवर्णयुक्ता लिपिमक्षरविन्यास शोभामित्यर्थ । नीता प्रापिता का काननमही का क्रीडोद्यानभूमि शुक्लत्वरक्तत्वनीलत्वात् कटाक्षैरिवाऽपाङ्गदर्शनैरिव 'कटाक्षोऽपाङ्गदर्शने' इत्यमर । पुष्पै कुसुमैर्हर्षादानन्दातिरेकान्न वर्षति वृष्टि न करोति । उद्यानभूमि पुष्पैराच्छादितेति भाव । अधुनाऽस्मिन्समये दोलासु प्रेङ्खासु आरूढा उपविष्टा पुरन्ध्रयो युवतयस्तासा पीन स्थूल जघन स्त्रीकटचा पुरोभाग 'पश्चान्नितम्ब स्त्रीकट्या क्लीबे तु जघन पुर.' इत्यमर । तस्य प्राग्भारो विस्तारस्तमाधुन्वत कम्पयतो लङ्कानिलस्य दक्षिणपवनस्य मानिनीना मानरूपस्य द्रुमस्य वृक्षस्य भञ्जनाय पातनाय विनाशायेत्यर्थ । कि गहन कि कठिन, न दुष्करमित्यर्थ । सम्प्रत्यनायासेनैव मानिनीना मानभङ्गो भवतीति भाव । शार्दूलविक्रीडितच्छन्द ।

## भाषा

नई जवानी मे प्रेम रखने वाले वसन्त के कारण, रग बिरगी विचित्र शोभा को प्राप्त, कौन सी उद्यान की भूमि हर्षपूर्वक, कटाक्ष के समान फूलो की वृष्टि नही करती है अर्थात् सर्वत्र पुष्पवृष्टि हो रही है । ऐसे समय मे हिंडोलो पर झूलती हुई कामिनिओ के तने हुए विस्तृत जघनस्थल को कपाने वाले दक्षिण पवन के लिये मान रूपी वृक्ष को तोड कर गिरा देना अर्थात् नष्ट कर देना क्या मुश्किल है ? अर्थात् वसन्त ऋतु मे रग बिरगी फूलो को देखने से, झूला झूलने से जघनस्थल मे कॅप कॅपी पैदा होने से और दक्षिणानिल के स्पर्श से, मानिनियो का मान अनायास ही छूट जाता है ।

पौलस्त्योद्यानलीलाविटपितलमिलन्मैथिलीपादमुद्राः
कर्पूरद्वीपवेलाचलविपिनतटीपांसुकेलीरसज्ञाः ।
क्रीडाताम्बूलचूर्णग्लपितमुखहृतक्रान्तयः केरलीना—
मामोदन्ते समीराः स्मरसुभटजयाकाङ्क्षिणो दाक्षिणात्याः ॥७५॥

**अन्वयः**

पौलस्त्योद्यानलीलाविटपितलमिलन्मैथिलीपादमुद्राः कर्पूरद्वीपवेलाचलविपिनतटीपांसुकेलीरसज्ञाः केरलीना क्रीडाताम्बूलचूर्णग्लपितमुखहृतक्लान्तयः स्मरसुभटजयाकाङ्क्षिणः दाक्षिणात्याः समीराः आमोदन्ते ।

**व्याख्या**

पौलस्त्यस्य रावणस्योद्यानमुपवनमशोकवाटिका तस्य लीलाविटपी क्रीडावृक्षोऽशोकतरुस्तस्य तलेऽधो मीलन्त्यो विघटन्त्यो चिरकालादस्पष्टीकृता इत्यर्थ । मैथिल्या सीताया पादमुद्राश्चरणचिह्नानि यैस्ते, कर्पूरद्वीपस्याऽन्तरीपविशेषस्य वेलाचल समुद्रतटस्थपर्वतस्तस्य विपिनतटी वनतटी तस्या पासवो धूलयस्तासु केली क्रीडा तस्या रसज्ञा रसिका, केरलीना केरलदेशजकामिनीना क्रीडाभी रत्यादिक्रीडाभिस्ताम्बूलेन चूर्णेन कर्पूरेण च ग्लपितानि खिन्नानि श्रान्तानीत्यर्थ । मुखान्याननानि तेषा हृता दूरीकृता क्लान्तिर्म्लानता यैस्ते, स्मर एव काम एव सुभटो सुयोद्धा राजा तस्य जयस्य विजयस्याऽऽकाङक्षिण इच्छुका दक्षिणे भवा दाक्षिणात्या समीरा वायवो दक्षिणानिला इत्यथ । आमोदन्ते आमोद सुगन्ध हर्षं वा 'आमोद सोऽतिनिर्हारी' इत्यमर । परितो विस्तारयन्ति । स्रग्धराच्छन्द ।

**भाषा**

रावण की बाग मे विद्यमान, लीलावृक्ष अशोक के नीचे श्री सीता जी के चरणचिह्नो को अधमिटा करने वाले, कर्पूर द्वीप मे समुद्र तट के पर्वत के प्रान्तभाग मे विद्यमान जगल की धूलि मे खेलवाड करने के रसिक, केरलदेश की अङ्गनाओ के रत्यादिक्रीडाओ मे पान और कपूर के खाने से श्रान्त अत एव खिन्न मुखो की ग्लानि को दूर करने वाले और वीर राजा कामदेव का विजय प्राप्त होने की अभिलाषा रखने वाले दक्षिणानिल, चारो ओर सुगन्ध या हर्ष फैला रहे है ।

यश्चूताङ्कुरकन्दलीकवलनात्कर्णामृतग्रामणी-
शछायामात्रपरिग्रहेऽपि जगृहे पञ्चेषुजैत्रेपुताम् ।
ताम्यत्तालुविटङ्कसंकटतटीसञ्चारतः पञ्चमः
सोऽयं कोकिलकामिनीगलबिलादामूलमुन्मूलति ॥७६॥

### अन्वयः

चूताङ्कुरकन्दलीकवलनात् कर्णामृतग्रामणीः यः छायामात्रपरिग्रहे अपि पञ्चेषुजैत्रेषुता जगृहे, सः ताम्यत्तालुविटङ्कसंकटतटीसचारतः अयं पञ्चमः कोकिलकामिनीगलबिलात् आमूलम् उन्मूलति ।

### व्याख्या

चूतानामाम्राणा 'आम्रश्चूतो रसालोऽसौ सहकारोतिसौरभ' इत्यमर । आम्रपुष्पाणामित्यर्थ । अङकुरा कोमलाग्रभागा एव कन्दल्य कन्दास्तासां कवलनाद्भक्षणात् कर्णयो श्रोत्रयोरमृताना पीयूषतुल्यवस्तूना ग्रामणी श्रेष्ठः 'ग्रामणीर्नापिते पुसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमर । य पञ्चमस्वर छाया-मात्रस्याऽशमात्रस्य परिग्रहेऽपि ग्रहणेऽपि प्रतिध्वन्याशमात्रकर्णगोचरीभूतेऽपि पञ्चेषु कामस्तस्य जैत्रा जयनशीला इषवो बाणास्तेषा भावस्ता जगृहे स्वीच-कार । चूतपुष्प कामबाण । अतोऽस्य कवलनात् कोकिलकामिन्या शब्दस्य पञ्चमस्वरस्य कामजयनशीलबाणत्व सजातमिति भाव । स ताम्यत् क्लिश्यत् तालु काकुद 'तालु तु काकुदम्' इत्यमर । तस्य विटङ्कमूर्ध्वस्थान तस्य सङ्कटा सङकुला या तटी प्रान्तभागस्तस्या सचारतो गमनादय प्रसिद्ध पञ्चम-पञ्चमस्वर कोकिलाना पिकाना कामिन्य कान्तास्तासा गलविलात् कण्ठरध्रा-दामूल कण्ठरन्ध्रमूलत प्रारभ्योन्मूलति निर्गच्छति बहिर्निस्सरतीत्यर्थ । पञ्चम-स्वरध्वनिस्तालुनलिकासचारादेव भवतीति स्वरविद्याकुशलाना गायकानामेवाऽनु-भवगम्यम् । कोकीलाश्चञ्चुमुपरिकृत्वैव कूजन्तीति गलरन्ध्रमूलात्तस्य पञ्चम-स्वरस्योत्पत्तिरिति कवेराशय । शार्दूलविक्रीडितच्छन्द ।

### भाषा

जो आम के (फूलो के) अङकुर की गाँठ को खाने से कान को सुख देनेवालो मे श्रेष्ठ है, जिसकी भनकमात्र कान मे पडने से जो कामदेव के जयनशील बाणो का काम करता है, ऐसा यह प्रसिद्ध पञ्चमस्वर, दबाई हुई तालू के उच्चभाग मे की सकडी गली मे से होकर निकलने वाला होने से कोकिलाओ के गले के छिद्र की जड मे से निकल कर बाहर पडता है। अर्थात् पञ्चमस्वर सदैव तालू की नलिका से ही उत्पन्न होता है यह स्वरशास्त्रकोविद गायक ही अनुभव कर सकते है। कोकिलाएँ सिर ऊपर उठाकर ही सदैव शब्द करती है अत यह पञ्चमस्वर उनके गले के मूल मे से ही निकलता है।

**विरहविधुरकामिनीसहस्र-प्रहितमनोभवलेखसूक्तिमिश्रैः ।**
**सुरभिसमयवर्णनैरकुर्वन्निति नृपतेरथ बन्दिनः प्रमोदम् ॥७७॥**

### अन्वय.

अथ बन्दिनः इति विरहविधुरकामिनीसहस्रप्रहितमनोभवलेखसूक्तिमिश्रैः सुरभिसमयवर्णनैः नृपतेः प्रमोदम् अकुर्वन् ।

### व्याख्या

अथाऽनन्तर बन्दिन स्तुतिपाठका इति पूर्वोक्तप्रकारेण विरहेण कान्तवियोगेन तज्जनितक्लेशेनेत्यर्थ । विधुरा विह्वला कामिन्यस्तासा सहस्र तेन प्रहिता प्रेषिता मनोभवलेखा कामसम्बन्धिलिखितपत्राणि तेषु सूक्तयस्सुभाषितानि ताभिर्मिश्राणि मिलितानि तै सुरभिसमयस्य वसन्तर्तो 'वसन्ते पुष्पसमयस्सुरभि' इत्यमर । वर्णनानि तैर्नृपते राज्ञो विक्रमाङ्कदेवस्य प्रमोदमानन्द मनोविनोदमित्यर्थ. । अकुर्वन् चक्रु । पुष्पिताग्रावृत्तम् ।

### भाषा

इस प्रकार स्तुतिपाठक लोगो ने, विरह से व्याकुल भई हुई हजारो कामिनिओ के द्वारा भेजे जाने वाले प्रेमपत्रो की सूक्तियो से मिश्रित, वसन्त ऋतु के वर्णनो से, राजा विक्रमाङ्कदेव को आनन्दित किया ।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्री बिल्हण-विरचिते विक्रमाङ्कदेवचरिते महाकाव्ये सप्तम सर्ग ।

**नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्**
**भारद्वाजबुधोत्तमात्समुदित श्री विश्वनाथः सुधीः ।**
**चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यक—**
**टीकायुग्ममिदं रमाकरुणया सर्गे नवे सप्तमे ॥**

ॐ शान्ति शान्ति शान्ति ।

॥ श्रीसङ्कष्टनाशिन्यै नम ॥

हरि ॐ

॥ श्री गणेशाय नम ॥

॥ श्री सङ्कष्टनाशिन्यै नम ॥

# परिशिष्टम्

## क.

## विक्रमाङ्कदेवचरितमहाकाव्यस्य सप्तसर्गान्तर्गताः सूक्तयः ।

**प्रथमसर्गे—**

श्लोका

अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ ९ ॥

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति ॥११॥

गृह्णन्तु सर्वे यदि वा यथेष्टं नास्ति क्षतिः कापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥१२॥

कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागरुधूपवासः ॥१४॥

व्युत्पत्तिरावर्जितकोविदाऽपि न रञ्जनाय क्रमते जडानाम् ।
न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टङ्किकायाः ॥१६॥

कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु ।
न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ॥१७॥

श्लोका

लङ्कापतेः सङ्कुचितं यशो यद् यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवाऽऽदिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥२७॥

## द्वितीयसर्गे—

फलं हि पात्रप्रतिपादनं श्रियः ॥ ॥२६॥

प्रियप्रसादेन विलाससम्पदा तथा न भूषाविभवेन गेहिनी ।
सुतेन निर्व्याजमलोकहासिना यथाङ्कपर्यङ्कगतेन शोभते ॥३२॥

किमश्वमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेन्नोभयलोकबान्धवः ।
ऋणं पितृणामपनेतुमक्षमाः कथं लभन्ते गृहमेधिनः शुभम् ॥३४॥

## तृतीयसर्गे—

परां प्रतिष्ठां लिपिषु क्रमेण जगाम सर्वासु नरेन्द्रसूनुः ।
पुण्यात्मनामत्र तथाविधानां निमित्तमात्रं गुरवो भवन्ति ॥१७॥

इयं हि लक्ष्मीर्धुरि पांसुलानां केषां न चेतः कलुषीकरोति ॥४२॥

## चतुर्थसर्गे—

शुभाशुभानि वस्तूनि सम्मुखानि शरीरिणाम् ।
प्रतिबिम्बमिवायान्ति पूर्वमेवान्तरात्मनि ॥३४॥

न कैश्चिदपि लभ्यन्ते निष्कम्पाः सुखसम्पदः ॥४६॥

उचिताचरणे केषां नोत्साहचतुरं मनः ॥६१॥

न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः ॥६७॥

श्लोका

महात्मनाममार्गेण न भवन्ति प्रवृत्तयः ॥६५॥

एषा भगवती केन भज्यते भवितव्यता ॥६७॥

त्यागो हि नाम भूपानां विश्वसंवननौषधम् ॥११०॥

किं लक्ष्मीसुखमुग्धानामसम्भाव्यं दुरात्मनाम् ॥१११॥

राज्यग्रहगृहीतानां को मन्त्रः किं च भेषजम् ॥११५॥

पञ्चमसर्गे—

किं न सम्भवति चर्मचक्षुषां कर्म लुब्धमनसामसात्विकम् ॥५॥

अप्रतर्क्यभुजवीर्यशालिनः सङ्कटेप्यगहनास्तथाविधाः ॥६॥

वारणः प्रतिगजं विलोकयंस्तद्विमर्दरसमांसलस्पृहः ।
आददे न विशदं नदीजलं शीलमीदृशममर्षशालिनाम् ॥१२॥

दूषणं हि मुखरत्वमर्थिनाम् ॥१३॥

यत्र तत्र भुजदण्डचण्डिमा चित्रमप्रतिहतो मनोभुवः ॥१४॥

आलुपेन्द्रमवदातविक्रमस्त्यक्तचापलमसाववर्धयत् ।
दीपयत्यविनयाग्रदूतिका कोपमप्रणतिरेव तादृशाम् ॥२६॥

प्लावनाय जगतः प्रगल्भते नो युगान्तसमयं विनाम्बुधिः ॥३६॥

केसरी वसति यत्र भूधरे तत्र याति मृगराजतामसौ ॥३८॥

तेन तस्य वचनेन चारुणा प्राप कुन्तलपतिः प्रसन्नताम् ।
तीव्ररोषविषवेगशान्तये भेषजं विनय एव तादृशाम् ॥४७॥

श्लोका

कामुकेषु मिषमात्रमीक्षते नित्यकुण्डलितकार्मुकः स्मरः ॥४८॥

दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः ।
क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥५१॥

वेत्ति कश्चरितमुन्नतात्मनाम् ॥५२॥

कार्यजातमसमाप्य धीमतां निद्रया परिचयोऽपि कीदृशः ॥७३॥

अद्यजातमपि मूर्ध्नि धार्यते किं न रत्नममलं वयोधिकैः ॥८३॥

षष्ठसर्गे—

यशसि रसिकतामुपागतानां तृणगणना गुणरागिणां धनेषु ॥२॥

कुसुममृदूनि मनांसि निर्मलानाम् ॥३॥

प्रणयिषु शुभचेतसां प्रसादः प्रसरति सन्ततिमप्यनुग्रहीतुम् ॥६॥

मरणमपि तृणं समर्थयन्ते मनसिजपौरुषवासितास्तरुण्यः ॥१३॥

अवतरति मृगीदृशां तृतीयं मनसिजचक्षुरुपायदर्शनेषु ॥१४॥

अपि नयनिपुणेषु नो भरेण क्षिपति पदं किमुत प्रमादिषु श्रीः ॥२८॥

अवतरति मतिः कुपार्थिवानां सुकृतविपर्ययतः कुतोऽपि तादृक् ।
झटिति विघटते यया नृपश्रीस्तटगिरिसंघटितेव नौः पयोधेः ॥२६॥

व्रतमिदमिह शस्त्रदेवतानां दृढमधुनापि कलौ निरङ्कुशेऽपि ।
अविनयपथवर्तिनं यदेताः प्रबलमपि प्रधनेषु वञ्चयन्ति ॥३०॥

श्लोका

सकलमपि विदन्ति हन्त शून्यं क्षितिपतयः प्रतिहारवारणाभिः ।
क्षणमपि परलोकचिन्तनाय प्रकृतिजडा यदमी न संरभन्ते ॥३२॥

गुणिनमगुणिनं वितर्कयन्ती स्वजनममित्रमनाप्तमाप्तवर्गम् ।
वितरति मतिविप्लवं नृपाणामियमुपसर्पणमात्रकेण लक्ष्मीः ॥३६॥

मलिनधियां धिगनार्जवं चरित्रम् ॥६१॥

इह हि विहितभूरिदुष्कृतानां विगलति पुण्यचयः पुरातनोऽपि ॥६४॥

यशसि रतिर्महतां न देहपिण्डे ॥७७॥

विमलविजयलालसाः खलानामवसरमल्पमपि प्रतिक्षिपन्ति ॥७८॥

त्रिभुवनमहनीयबाहुवीर्यद्रविणविभूतिमतां किमस्त्यसाध्यम् ॥६१॥

दासी यद्भवनेषु विक्रमधनक्रीता ननु श्रीरियम्
तेषामाश्रितपोषणाय गहनं किं नाम पृथ्वीभुजाम् ॥६६॥

## सप्तमसर्गे—

गुणो हि काले गुणिनां गुणाय ॥३२॥

—श्रीरस्तु—

———

# परिशिष्टम्

## ख.

## विक्रमाङ्कदेवचरितमहाकाव्यस्य सप्तसर्गान्तर्गतानां श्लोकानां अकारादिवर्णानुक्रमेणाऽनुक्रमणिका ।

### "आ"



### "इ"

# परिशिष्टम्

## ग.

### विक्रमाङ्कदेवचरितमहाकाव्ये सप्तसर्गान्तर्गतानां प्रधाननाम्नां सूचो।

(अत्र प्रथमसख्या सर्गसूचिका द्वितीया श्लोकानाम्)

# परिशिष्टम्

## घ.

## विक्रमाङ्कदेवचरितमहाकाव्यस्य विक्रमादित्यस्य च वर्णनात्मका लेखा ग्रन्थाश्च ।


१ **इतिहास प्रवेश**—श्री जयचन्द्र विद्यालङ्कार पृ० २५६

२ **राजतरङ्गिणी**—श्री महाकवि कल्हण

३ **सोलंकियो का प्राचीन इतिहास**—म० म० प० श्री गौरीशकर ओझा

४ **विक्रमाङ्कदेव चरित चर्चा**—श्रीमान् प० महावीर प्रसाद द्विवेदी

५ **चालुक्य षष्ठ विक्रमादित्य का जीवन व समय**—श्री रामनाथ दीक्षित, साहित्य शिरोमणि, साधोलाल रिसर्च स्कालर, बनारस—श्री ए० व्ही० वेङ्कटरमण द्वारा तेमिल भाषा मे लिखित The Life and Times of Chalukya Vikramaditya VI का अनुवाद ।

6 Kalhana's Chronology of Kashmir by *Stein*

7 Indian Antiquary Page 325

8 Indian Historical quarterly, Calcutta

9 Kadamb Kula by *J M Moraes, Bombay*

10 Journal of the Royal Asiatic Society, Bombay

11 Journal of the Bombay Branch of Royal Asiatic Society

12 Journal of the Royal Asiatic Society, London

13 History of Sanskrit Literature by *A B Keith*

14 History of classical Sanskrit Literature by *M Krishnammachariar*

15 History of Paramar Dynesty by *D C Ganguly*

16 Historical Inscriptions of Southern India by *Sewell and Aiyangar*

17 Early History of Deccan by R G *Bhandarkar*

18 Ancient India ( and South Indian History & culture ) Chola Impire of India-pages 622-636 by *K Krishnaswami Aiyangar, Madras* Page 142

19 Dynesties of the Kanarese District by *J F Fleit*

20 Bombay Gazetteer.

21 Dynastic History of Northern India by *H C. Roy, Calcutta*

22 विक्रमाङ्कदेवचरितमहाकाव्यम् Edited by *Dr George Buhler*, with an elaborate Introduction

२३ विक्रमाङ्कदेवचरितमहाकाव्यम् Edited by प० रामवतार शर्मा, and printed in the ज्ञानमण्डल प्रेस, बनारस।

२४ विक्रमाङ्कदेवचरितम्—(१–२ सर्ग), चौखम्बा सस्कृत सीरीज।

---